अच्युतग्रन्थमालायाः सप्तमं पुष्पम्

श्रीसदानन्दयतीन्द्रविरचितः

# प्रत्यक्तत्त्वचिन्तामणिः

स्वोपज्ञव्याख्यासमेतः

---

द्वितीयो भागः



प्राप्तिस्थानम्—

अच्युतग्रन्थमालाकार्यालयः,

काशी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज/१२४




श्रीपूज्यपाद श्री १०८ स्वामी जी [illegible]जी परमहंस परिव्राजकाचार्य महाराज के पावन करकमलों में सादर समर्पित ——

प्रकाशक

८.५.३२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अच्युतग्रन्थमालायाः सप्तमं पुष्पम्



श्रीसदानन्दविद्वद्भिरचितः

# प्रत्यक्तत्त्वचिन्तामणिः

स्वोपज्ञस्वप्रभासमेतः



द्वितीयो भागः



प्रकाशनस्थानम्—

अच्युतग्रन्थमालाकार्यालयः,

काशी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अच्युतग्रन्थमालायाः सप्तमं पुष्पम्

श्रीसदानन्दविद्वद्विरचितः
स्वोपज्ञस्वप्रभाख्यव्याख्यासंवलितः

# प्रत्यक्तत्त्वचिन्तामणिः

## द्वितीयो भागः

काशिकश्रीजोखीराममटरूमल्लगोयनका-संस्कृतमहाविद्यालय-पुस्तका-
लयाध्यक्षेण अच्युतग्रन्थमालाध्यक्षेण च साहित्याचार्य-
श्रीकृष्णपन्तशास्त्रिणा
सम्पादितः


प्रकाशनस्थानम्—
अच्युतग्रन्थमालाकार्यालयः,
काशी

संवत् १९८८ ] [ प्रथमावृत्तिः १५००

मूल्यं सपादरूप्यकद्वयम्


CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीः ॥

# भूमिका

अयि सारासारविचारहारहारिहृदयाः सहृदयाः !

सुविशदमिदं यदयमाम्नायसमुदायगीतो व्यासभर्तृप्रपञ्चगौडपादाचार्य्यशङ्कराचार्य्यादिभिराचार्य्यवर्यैः काले काले स्फारतामुपनीतोऽनादिकालाद् विलसति भारताजिरेऽद्वैतवादो वादानां मौलिमणिरिति। तत्र ऋग्वेदे तावद्—"एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः" ( ऋ० १। १६४। ४६ ) "आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास" (ऋ० १०। १२६। २) इत्यादिस्थलेऽद्वैतवादः सुपरिस्फुटः। यजुर्वेदेऽपि चत्वारिंशत्तमेऽध्याये बाहुल्येनोपवर्णितोऽसौ। उपनिषत्सु तु पदे पदे तस्यैव चर्चा वरीवर्ति "नेह नानास्ति किञ्चन," "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति। किं बहुना निखिलानि दर्शनान्यपि अन्ततोऽद्वैतपर्यवसानानीति नातिरञ्जितं वचः। नेयमस्माकं कपोलकल्पना प्रस्थानभेदे मधुसूदनसरस्वतीपादैरपि अयमेवार्थः—"इदमेव सर्वशास्त्राणां मूर्द्धन्यम्, शास्त्रान्तरं सर्वमस्यैव शेषभूतमितीदमेव मुमुक्षुभिरादरणीयं श्रीशङ्करभगवत्पादोदितप्रकारेणेति रहस्यमिति प्रकृत्य सर्वदर्शनान्यद्वैतेऽन्वित्य सर्वेषां प्रस्थानकर्तॄणां मुनीनां विवर्त्तवादपर्यवसानेनाद्वितीये परमेश्वर एव प्रतिपाद्ये तात्पर्यम्। नहि ते मुनयो भ्रान्ताः सर्वज्ञत्वात्तेषाम्। किन्तु बहिर्विषयप्रवणानामापाततः पुरुषार्थे प्रवेशो न सम्भवतीति नास्तिक्यवारणाय तैः प्रकारभेदा दर्शिताः। तत्र तेषां तात्पर्यमबुद्ध्वा वेदविरुद्धेऽप्यर्थे तात्पर्यमुत्प्रेक्षमाणास्तन्मतमेवोपादेयत्वेन गृह्णन्तो जना

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नानापथजुषो भवन्ति" इति दृढं निरूपितः। भाष्यकारैरपि शारीरकभाष्ये द्वितीयाध्यायस्य द्वितीये पादे तेषां दर्शनानां न सर्वथा प्रामाण्यं निरस्तम्, अपि तु तेषु तेषु अर्थेषु नास्ति तात्पर्य्यम्, किन्तु अस्मिन्नर्थे पर्यवसानमिति स्फुटमभिहितम्। 'एतेन योगः प्रत्युक्तः' [ब्र० सू० २।१।३] इति सूत्रभाष्यं व्याकुर्वन्तो वाचस्पतिमिश्रा अपि भामत्याममुमेवार्थं दृढीचक्रुः।

करालेऽस्मिन् कलिकालेऽल्पजीविनां नानल्पमतीनां मनुजानां समुद्धाराय बद्धपरिकरेण अकृपणमगण्यकारुण्यपण्यमादधानेन ऋग्यजुरादिविभागपुरस्सरमाम्नायेषु संकीर्णतया समुल्लसतां तेषामेव श्रुतिवचसां सारमेकत्र प्रतिपिपादयिषता भगवता व्यासदेवेन विरचितानि पारमर्षसूत्राणि। तदनु समयमहिम्ना व्यासतात्पर्य्यमनाकलयद्भिर्वा 'भिन्नरुचिर्हि लोकः' इत्याभाणकमन्वर्थयद्भिर्वा कैश्चन बोधायनादिभिराचार्यैरन्यपरत्वेन व्याख्यातेषु तेषु, मतमतान्तरप्रचारबद्धदीक्षैस्तत्त्वमनाकलयद्भिर्लौकायतिकैर्वैदिके जगति नास्तिकप्रायतामुपनीते, अनारतं विपश्चिदपश्चिमविक्षुण्णासु सनातनीषु वैदिकवीथीषु तिमिरततिविलीनासु, कर्मकाण्डेऽकाण्ड एव निरुद्धप्रसरे, तत्त्वज्ञानकथायामनाथायाम्, आम्नायविरोधिनि अज्ञानप्राये मुमुक्षाप्रत्यवाये नानावादसमुदाये विलासमुपगतेऽवततार निखिललोकैकगुरुर्भगवान् श्रीमहेश्वरः श्रीशङ्कराचार्यनाम्ना वैदिकं पक्षं समुद्धर्तुं संहर्तुञ्चावैदिकं विपक्षकदम्बकम्। अतिमानुषकर्मा दिव्यधर्मा स भगवान् मृद्वीकावन्मधुरम्, मन्दाकिनीसलिलमिव सुन्दरम्, इन्दुकलावद् विमलम्, सूर्यमिव समुज्ज्वलम्, शैलमिवाचलम्, अनलमिव विपक्षमतगुल्मदाहकम्, अनिलमिव वादितरुसमूलोन्मूलकम्, प्रसन्नगम्भीरपदावलिललितम्, श्रुतिसिद्धान्तसम्मतम्, व्यासतात्पर्यानुगुणं शारीरकभाष्यमारचयामास।

अहह! स हि भगवान् दार्शनिके जगति नूनं सहस्रभानुः। हन्त तदुदयपराहतास्तमसहमानाः प्रतिवादिन उलूकायमाना गिरिदरीराश्रयन्ति स्म, नाद्यावधि ततो बहिर्निर्गन्तुमीहन्ते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीशङ्कराचार्यमहोदयानां संक्षेपेणायमस्ति मतवादः—सकलं जगत् सकलानि लौकिकज्ञानान्यपि वितथानि निरतिशयानन्दरूप आत्मैव केवलं परमार्थवस्तु। अनाद्यनिर्वचनीयमायापटलेनावृत आत्मैव जीवः। अविद्याया विकारभूतेनान्तःकरणेन तत्संस्कारैश्चोपहितो जीवात्मा—अन्तःकरणं यानि यानि वस्तून्युपकल्प्य तदीयानाकारान् विधत्ते—तेषां समेषां वस्तूनां ज्ञानं लभते। ज्ञानविषयीभूतस्य पदार्थस्य तदीयाकारं विदधतोऽन्तःकरणस्य चोभयोरपि आविद्यकत्वेनावास्तव-त्वाद् ज्ञानशब्देनाभिधीयमानाया अन्तःकरणवृत्तेरपि आविद्यकत्वम्। अविद्यायास्तत्कार्याणामन्तःकरणादीनां समेषामात्मन्यध्यास आत्मन-श्चैतेषु सर्वेषु। अनेनान्योन्याध्यासेन सर्वैरान्तरैर्बाह्यैश्च वस्तुभिः सहैक्यमापद्य जीवात्माऽहं कर्ता, अहं भोक्ता, स्थूलोऽहम्, बधिरोऽहम्, कृशोऽहम्, घटमहं जानामि, पटमहं जानामीत्यादिविविधान् अनु-भवानाप्नोति। मायोपहित आत्मैव मायिकं प्रपञ्चं रचयतीति।

सोऽयमाचार्यपादैरेव वैपुल्येन निर्दिष्टोऽर्थो भगवच्छिष्यैः श्रीसुरेश्व-राचार्यत्रोटकाचार्यपद्मपादाचार्यादिभिः श्रीवाचस्पतिमिश्रसर्वज्ञात्ममुनि-प्रकाशात्ममुनिविद्यारण्यमधुसूदनसरस्वतीप्रभृतिभिरन्यैश्च समधिकं विपुलतामुपनीतो भृशं विवेचितः सुपरिस्फुटीकृतोऽपि सुधियामेव हृदयङ्गमो नाल्पमतीनां तत्र लेशतोऽपि प्रवेश इति सुविदितमेव समेषां विदुषाम्।

परमनिश्रेयससाधनभूतेऽस्मिन् शास्त्रे मन्दमतीनामपि सुखेन भवतु प्रवेश इति सञ्जातकारुण्येन ग्रन्थकृता ललितललितैः विविधवृत्तैः सुस-रलैः पद्यैस्तत्साररूप एवार्थः संक्षेपेणात्रोपनिबद्धः। ग्रन्थकारेण स्वमुखत एवास्य ग्रन्थस्य सूत्रभाष्याद्यमृतसारत्वं प्रतिपादितम्—

"वेदाम्बुधेः सुरगणार्चित ईश्वरोऽद्धा
ज्ञानामृतं भ्रमतमोहर उद्दधार।
प्रादुर्बभूव मथनात्तत आत्मतत्त्व-
चिन्तामणिः स हरिपादयुगेऽर्पितोऽस्तु॥ [प्र० १२।१७१]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईश्वरो महादेवः सुरगणैर्ब्रह्मादिभिरर्थितः सन् शङ्कराचार्यनामा भूत्वा हरिर्वा व्यासरूपेण वेदाम्बुधेरत्यगाधतात्पर्य्यनिगमार्णवात् श्रद्धा साक्षाद् ज्ञानामृतं तत्त्वज्ञानसाधनभूतवेदान्ततात्पर्य्यनिर्णायकसूत्र-भाष्यादिग्रन्थजातमद्वैततत्त्वामृतपर्यवसन्नतया पीयूषतुल्यमुद्धार— वेदाम्बुधिं निर्मथ्य ततो निष्कृष्य सारमुद्धृतवानित्यर्थः।

ततः सूत्रभाष्याद्यमृतमथनात् ततोऽपि आत्मतत्त्वचिन्तामणिः प्रत्यक्तत्त्वचिन्तामणिरेतन्नामको ग्रन्थः प्रादुर्बभूव आविरासीत्। स च प्रत्यक्तत्त्वचिन्तामणिर्हरेर्भगवतो वासुदेवाभिधेयस्य श्रीमन्मुकुन्दस्य पादयुगे चरणारविन्दयुग्मेऽर्पितोऽस्तु"—इति।

कदायं सदानन्दविद्वद्वरो जनुषा भूवलयमलञ्चकारेत्यत्र विचारे प्रस्तूयमाने प्रयतमानेनापि मयाऽतीताब्दे ग्रन्थस्यास्य प्रथमसम्पुटके मुकुन्दपदारविन्दरतचित्तस्य सारस्वतवंशावतंसस्यास्य ग्रन्थकृतोऽवसरो जीवनचरितादिकञ्च वैशद्येन निर्णेतुं न पारितम्। शर्म्मण्यदेशीय-थोडर–( Theodor )–महाशयस्य पुस्तकसूचीमनुसरता ग्रन्थाश्चास्य न साकल्येन निर्दिष्टाः। साम्प्रतं विद्वद्वदनारविन्देभ्योऽदसीयग्रन्थरत्ने-भ्यश्च यदधिगतं तन्निरूप्यते—

ग्रन्थकारोऽयं सारस्वतकुलालङ्कारो जनुषा विभूषयामास पञ्चनद-जनपदान्तर्गतं रावलपिण्डीपुरोपकण्ठं कुन्त्रोलाभिधं ग्रामम्। बाल्य एवोपात्तानवद्यविद्यो व्यद्योतिष्ट पौराणिकीं वृत्तिमुपजीवँस्तत्रैव। कदाचित्तद्देशवास्तव्येन गोरणेनामग्रामलब्धजनिना नानकसम्प्रदाया-नुसारिणोदासीनसाधुना बाबारामदयालुजीत्यभिधेन साकं पौराणिकीः कथाः श्रावयन् वाराणसीमाजगाम। स साधुः पञ्चनदप्रदेशे परां प्रतीतिमुपगतस्तत्रत्यजनानां परमादरभूमिरासीत्। वाराणसीमधिव-सति तस्मिन्नेकदा अमृतसराभिजनः कोऽपि धनिकजनः चराचरगुरुं श्रीविश्वनाथं दिदृक्षुस्तन्मन्दिरमुपाययौ। अमन्दभागधेयः स खलु धनिकः विपुलं स्वापतेयं तस्मै साधुवराय सप्रश्रयमुपायनीचकार।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परां विरक्तिमुपगतोऽसौ तत एकामपि काकिणीमनाददानस्तत्सर्वं वित्तजातं व्यासवराय समर्पयामास । उक्तवांश्च अत्रैव कथा परिसमाप्यतामिति ।

तदनु तन्निदेशानुसारमवसितपौराणिककथाप्रसङ्गोऽपि वाराणसेयश्रद्धालुजनानुरोधेन शान्ते गङ्गोपान्ते वालूजीकाफरसनाम्नि कुसुमोद्यानमण्डिते भगवन्मन्दिरे प्रारभत माहामती: कथा: ।

अथैवं गच्छति काले विपश्चिदपश्चिमस्यास्य समीपमेतद्देशीयो रामकुमारनामा कश्चिद्विप्रस्तीर्थयात्राप्रसङ्गेन स्वदेशादागत्य तीर्थकृत्यं निर्वर्त्य व्यासवरवदनारविन्दान्नि:सरन्तीः सुधासहचरीः कथाश्चिरं शृण्वन् स्वीयसौशील्यादिगुणैस्तं भृशं प्रसादयामास । अथ तदीयाद्वितीयसौशील्याकृष्टचेतास्तत्सूनवे धनपतिनाम्ने प्रभूतद्रविणसमर्पणपुर:सरमलङ्कृतां स्वसुतां ब्राह्मेण विधिना प्रादात् । अनाघ्रातसंस्कृतविद्यागन्धमपि तमचिरेणैव सकलशास्त्रनिष्णातं निष्पादयामास । व्यासवरशिक्षणकौशलेन तेनानेके ग्रन्था रचिता: । तेषु ( १ ) वेदान्तपरिभाषाटीका, ( २ ) शङ्करदिग्विजयस्य डिण्डिमनाम्नी टीका, ( ३ ) व्यासवरसदानन्दकृतशङ्करदिग्विजयसारस्य दुन्दुभिनाम्नी टीका चेत्यादयो ग्रन्थास्तत्कीर्त्तिलतालवालरूपेण विलसन्तो दृश्यन्ते । मन्ये तिमिरततिनिलीना अन्येऽपि तदीयग्रन्था यथाकालमलङ्करिष्यन्ति संस्कृतवाङ्मयमिति । व्यासवरस्यासीदन्याप्येका कन्या । तस्या: पतिर्नातिप्रखरमतिर्नापिशास्त्ररतिर्यवनभाषामधीत्य स्वकार्यं निरवर्तयदिति श्रूयते ।

महाभागस्यास्य ग्रन्थकृतो वैदुष्यं गङ्गाजलमिव विमलमासीदिति तद्ग्रन्थपर्यालोचनेन भृशमनुभूयते वृद्धमुखेभ्योऽनुश्रूयते च । कदाचित् काशीवासरसिकेन 'श्रीमन्तपेशवा' इति महाविरुदशालिना श्रीमदमृतरावमहाराजेन बहुवारमभ्यर्थितोऽपि विद्वद्वरो यदा तदीयभवनं नालञ्चकार तदा महाराजो व्यासवरवदनारविन्दनि:सरद्वचन-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मकरन्दबिन्दुलुब्धो मधुप इवास्मानमाह्लादयितुं कृतार्थयितुं पवित्रयितुं च तदेव मन्दिरमाजगाम। तदानीं तत्र महाभारतद्रोणपर्वकथाप्रसङ्गः समवर्तत। आसीत्तस्य महाराजसभास्तारविद्वद्वृन्देन स्फारः शास्त्रीयविचारः। सकलशास्त्रेषु अखण्डपण्डितं तमालोच्य सपण्डितो नृपतिः परां प्रीतिमुपगतः। सबहुमानं समर्पयच्च तस्मै अमन्दानन्दसन्दोहोऽनन्तं धनराशिमिति।

एवं कियन्तं कालमतिवाहयति विद्वद्वरे तस्मिन् पुत्रकल्पस्य गुणगणालङ्कृतस्यानल्पवैदुष्यस्य तज्जामातुर्धनपतिपण्डितस्य काये आमयः पदमाधत्त। आमयाक्रान्तकायं तमालोक्य बलवतीं पीडामनुभवन्ती व्यासवरदुहिता तमन्वयुङ्क्त—नाथ! इतः परं कथं मया वर्तितव्यमिति। स तु स्वं पितरमेवापृच्छेति तामादिदेश। पिता पृच्छन्तीं तां कुलीनताया यदनुकूलं पाण्डित्यस्याप्रतिकूलं सदाचारस्यानुरूपं गुरुजनानामनुगुणं निपुणमुपादिदेश। सती सा तातपादोपदेशं हृदि दधाना सर्वतो वियुक्तसङ्गा पञ्चत्वमुपेयुषा पत्या साकं ज्वलनमनुप्रविष्टा। पुत्रकलत्ररहितो नारायणचरणरतो व्यासवरः पूर्वमेव विरक्तिमुपगतोऽधुना भृशमभीलक्लाकुलहृदयः समयोचितमाश्रमधर्ममादित्सुः सर्वमपि वित्तजातं विधिना गुणवद्भूसुरसादकरोत्।

तदनन्तरं मणिकर्णिकातटसीम्नि निर्माय शिवालयं शिवलिङ्गं संस्थाप्य चिराभिलषितं पारिव्राज्यमुररीकृत्य कृत्यवित् तत्रैव निवसन् ब्रह्मभावमुपगत इति जीवनचरितसंक्षेपः।

ग्रन्थकारस्यास्य कालनिर्णयः प्रथमसंपुटकेऽनुमानतो निरूपितः। परमधुना तद्ग्रन्थदर्शनेन स एव ग्रन्थकारस्य काल इति निश्चीयते। शङ्करदिग्विजयसारे ग्रन्थकृता स्वयं ग्रन्थविरचनसमयो निर्दिष्टः—

रसगुणवसुचन्द्रे १८३६ विक्रमादित्यराज्यात्
समफलवति वर्षे चाश्विने मासि शुद्धे।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रवणयुतदशम्यां भौमवारेऽलिलग्ने

ग्रथित इति निबन्धः सिद्ध ईशप्रसादात् ॥

गीताभावप्रकाशान्ते च—

मुनिगुणवसुचन्द्रे १८३७ विक्रमादित्यराज्यात्

शुभफलवति वर्षे माघमासे सितेंऽशे ।

पशुपतितिथिसन्धौ चन्द्रवारे सुलग्ने

विवृत इति निबन्धः सिद्ध ईशप्रसादात् ॥

एतेन स्फुटं ज्ञायते यद् ग्रन्थकृता १८३६ तमे वैक्रमाब्दे शङ्कर-दिग्विजयसारो विरचितः १८३७ तमे वैक्रमाब्दे गीताभावप्रकाशश्च निर्मित इति ।

उक्तग्रन्थविरचनसमये यद्यस्य वयश्चत्वारिंशद्वर्षासन्नं कल्प्येत तदाऽस्य जन्मकालः १७६५ विक्र० आयाति । किञ्च ग्रन्थकारेण मणिकर्णिकाप्रान्ते यन्निर्मितं शिवमन्दिरं तत्र शिलातलेऽपि लिखितमस्ति—

अस्ति श्रीकुशलर्षिसम्भवकुलक्षीराब्धिलब्धोद्भव-

श्रीसारस्वतशीतरश्मिविकसद्वंशावतंसो भुवः ।

श्रीसिद्धिस्तमलञ्चकार विबुधो जातोऽसिधीरस्ततः

सन्तानेऽस्य वसन्दनामतनयो जीवन्दनामाभवत् ॥

दिक्प्रान्ताश्रान्तकीर्तिर्गुणिनलिनवनीश्रीविधावेकसद्मा

टेरूरामाख्यपद्मालयममलमतिं प्राप यस्माद्बभूव ।

कीर्तौ कर्पूरकुन्दोत्करकुमुदवनीकान्तकेलीसधर्मा

धर्मानन्दैककर्माऽद्भुतगुणनिपुणश्रीसदानन्दशर्मा ॥

सोऽयं चारुगिरीशमौलितटिनीतीरे शके वैक्रमे

रामेषुद्विपभूमिते १८५३ सितदले मासे तपस्यं श्रिते ।

पञ्चम्यां स गुरौ व्यपादय इमं श्रीमत्समुद्यत्सदः-

शोभासंलसदैन्दुशेखरशुभप्रासादमासादयन् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वासिष्ठेश्वरवामदेवमहितेशोदग्दिशि श्रीहरि-
श्चन्द्रेशादनुदक्षिणं गणपती संनैशचिन्तामणी ।
यौ तौ व्यक्तवराविवाऽऽप सुधिया गौरीहरिब्रह्मयुग्-
भक्तानामभयङ्करव्रतकरः श्रीशङ्करः स्थापितः ॥

अत्र 'कीर्तौ कर्पूरकुन्दोत्करकुमुदवनीकान्तकेलीसधर्मा' इत्यादि-तच्छिलालेखस्थतद्विशेषणप्रदर्शनेन ज्ञायते यत् तन्मन्दिरनिर्माणावसरे निर्मितविविधग्रन्थस्य अध्यापनप्रवचनादिना समासादितसमज्ञस्य प्राज्ञस्य तस्य तदा नूनं षष्टिवर्षासन्नं वयो भवेदिति । तदापि स एव जन्मकालः समायाति ।

महाभागेनानेनानेके ग्रन्था आरचितास्तेषु चत्वारस्तावन्मुद्रिता अस्माकं पुरो वर्तन्ते—( १ ) अद्वैतसिद्धिसिद्धान्तसारः सटीकः, ( २ ) गीताभावप्रकाशः [श्रीमद्भगवद्गीतायाः पद्यमयी टीका ], ( ३ ) शङ्करदिग्विजयसारः, ( ४ ) प्रत्यक्तत्त्वचिन्तामणिः सटीकः इति । विद्वन्मुखादेवाकर्णिता न तु प्रत्यक्षं दृष्टास्तन्निर्मिता ग्रन्थास्तावद्—( १ ) स्वरूपनिर्णयः, ( २ ) महाभारततात्पर्यप्रकाशः सटीकः, ( ३ ) रामायणतात्पर्यप्रकाशः, ( ४ ) महाभारतसारोद्धारः सटीकः, ( ५ ) दशोपनिषत्सारः सटीकः । इति पञ्च ग्रन्था अद्यावधि अमुद्रिता इति मे मतिः । यदि मुद्रितास्तथापि नाद्यावधि मम दृष्टिगोचरीभूताः । शर्मण्यदेशीयश्रीथोडरमहाशयस्य बृहति सूचीपत्रे तत्त्वविवेकटीका चास्य कृतित्वेनोपन्यस्ता । सम्भाव्यते सापि तस्यैव कृतिर्भवेदिति । एवं दश ग्रन्थास्तस्य कीर्तिलतालवालरूपेण विद्यन्ते ।

यां मातृकामवलम्ब्य संशोधितोऽयं ग्रन्थस्तस्याश्चर्चा विहिता प्रथमे सम्पुटके । विषयसूचीश्रुत्याद्यनुक्रमणिकाश्लोकानुक्रमणिकादिभिः संभूष्य सपरिश्रमं संशोधितेऽप्यस्मिन् ग्रन्थे मदीयदृष्टिदोषेण आयसाक्षरसंयोजकानामनवधानतया च जातानि स्खलितानि संक्षम्य गुणैकपक्षपातिनो विद्वन्मूर्धन्या अनुगृह्णन्तु जनमिममिति भृशमभ्यर्थये ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्रभवतां परमहंसपरिव्राजकाचार्यश्रीघनश्यामानन्दतीर्थमहोदयानां काशीस्थमुमुक्षुभवनवासिनां रणवीरसंस्कृतविद्यालये प्रधानाध्यापकपदमलङ्कुर्वतां तत्रभवतां गुरुवराणां पं० श्रीमदनन्तरामशास्त्रिमहोदयानाञ्च कृतज्ञोऽस्मि । यैः पुरुषप्रवरैर्ग्रन्थकृतोऽस्य जीवनचरितसामग्र्याऽहं सनाथीकृतः । महापुरुषेभ्यस्तेभ्यः सप्रश्रयमनेकशो धन्यवादानर्पयामीति शम् ।

काशी
चैत्रकृष्ण नवमी
सं० १९८८ ।

सतामाश्रवः
श्रीकृष्णपन्तः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## प्रत्यक्तत्त्वचिन्तामणिविषय-सूची





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पृ० श्लो०



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पृ० श्लो०



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पृ० श्लो०



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

5

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पृ० श्लो०



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पृ० सं०



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पृ० श्लो०



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पृ० श्लो०



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्री १०८ ... मुमुक्षु भवन ... काशी।

श्रीगणेशाय नमः ।

श्रीमत्सदानन्दविद्वद्विरचितः

स्वप्रभाख्यव्याख्यासंवलितः

# प्रत्यक्तत्त्वचिन्तामणिः ।

## द्वितीयो भागः

### अथ सप्तमं प्रकरणम्

वेदान्तवेद्यं परमात्मतत्त्वं
विशुद्धविज्ञानघनं सुखात्म ।
विज्ञायते ब्रह्म यदङ्घ्रिभक्त्या
वन्दे तमीशं सततं मुकुन्दम् ॥ १ ॥

यस्य स्मृतौ गलति भेदमतिर्बहिःस्था
वैशारदी मतिरुदेति चिदात्मनिष्ठा ।
यत्सौहृदं स्मरति नित्यमुमार्द्धदेह-
स्तं देवकीसुतमुपैमि हृदि स्फुरन्तम् ॥ १ ॥

अतीतानन्तरप्रकरणे 'कर्त्तृत्वमुख्यमनिरस्य विकल्पजालं न स्यात् त्वमर्थपरिशोधनमैक्ययोग्यम्' इत्युक्तं तत्र यदि कर्त्तृत्वादिरग्नेरौष्ण्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिवात्मनः स्वाभाविको धर्म्मः स्यात्तदा स्वभावस्यान्यथा कर्त्तुमशक्य-तया तन्निरासायोगात् ततो विमुक्तिर्न स्यात् । तदुक्तम्—

"आत्मा कर्त्रादिरूपश्चेद् मा काङ्क्षीस्तर्हि मुक्ततां ।
नहि स्वभावो भावानां व्यावर्त्तेतौष्ण्यवद्रवेः ॥" इति

आत्मन्यध्यस्तस्य तु कर्त्तृत्वादेरकर्त्तृत्वादिस्वभावावबोधनेनापनेतुं सुकरत्वात् स्यात्ततो विमुक्तिरित्येतद्विचारप्रधानं प्रकरणमारभमाणो कर्त्तृत्वादिस्वभावात्मतत्त्वज्ञानं भगवद्भक्त्यधीनम्, "यस्य देवे परा भक्तिः" (श्वे० ६ । २३) "यमेष वृणुते तेन लभ्यः" (मु० ३ । २ । ३) "ददामि बुद्धियोगं तं येन मामुपयान्ति ते" (गी० १० । १०) इत्यादिश्रुतिस्मृतिकदम्बैस्तथैव प्रतिपादनात्; तस्मात्तमेव भगवन्तं परममङ्गलमूर्त्तिं प्रणम्य अर्थात् शास्त्रीयविषयप्रयोजने दर्शयति—वेदान्तवेद्यमिति ॥ १ ॥

यद्भक्तिहीनो गहने भवाब्धौ
निमज्जतीतो न लभेत मुक्तिम् ।
यद्भक्तियुक्तो निखिलं पुनाति
स्वयं विमुक्तस्तमहं प्रपद्ये ॥ २ ॥

भगवद्भक्तिवैमुख्यमेव महानर्थाब्धिपातहेतुः, तदाभिमुख्यमेव सकलपुरुषार्थहेतुरिति दर्शयंस्तमेव भगवन्तं शरण्यत्वेनाऽनुसन्धत्ते—यदिति ॥ २ ॥

अकर्त्रभोक्तात्मपदप्रमादात्
संसारबन्धः प्रविभाति सद्वत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्त्तृत्वमध्यस्तमपास्य शुद्ध-
स्वरूपबोधेन विमुक्तिमेति ॥ ३ ॥

एवं भगवन्तमनुसन्धाय प्रकरणप्रतिपाद्यमर्थं दर्शयति—अकर्त्रिति। अकर्त्रभोक्त्रैकस्वभावं यदात्मपदं तस्य प्रमादादज्ञानकृतावरणात् संसारे बध्नातीति संसारबन्धः कर्त्तृत्वादिः मृषापि सता तुल्यं प्रतीयते, तस्मात् शुद्धस्वरूपः कर्तृत्वादिधर्म्मविनिर्मुक्त आत्मा तत्साक्षात्कारेण अविद्यमानमेवात्मनि कल्पितं कर्त्तृत्वं तदुपलक्षितं भोक्तृत्वादिकं सकलमनर्थजालमपास्य—अकर्त्तृत्वादिस्वरूपमहिम्नैव बाधितमेवापबाध्य स्वस्वरूपावस्थानलक्षणां विमुक्तिमेति। अकर्त्तृत्वादिस्वभावात्मतत्त्वे निजमहिम्नि प्रतिष्ठितो भवतीत्यर्थः ॥ ३ ॥

ननूच्यते वेदविरुद्धमेतद्
यतोऽस्ति कर्त्तृत्वयुतोऽयमात्मा ।
यजेत दद्यादिति चोदनातः
क्रियाश्रयो ह्येष फलस्य भोक्ता ॥ ४ ॥

आत्मनोऽकर्त्तृत्वमसहमानस्तदाक्षिपति—नन्विति । एतदकर्त्तृत्वमात्मनो वेदविरुद्धं त्वयोच्यते । कुतः ? यतः "यजेत दद्याज्जुहुयाद्" इति चोदनातः वैदिकोपदेशादयमात्मा कर्त्तृत्वयुतोऽस्ति । क्रियाश्रयो 'हीति न्यायप्रसिद्धमेवद्' यदेष कर्त्ताऽऽत्मा फलस्य भोक्ता, "शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वाद्" (मी० सू० ३ । ७ । १८) इत्याह स्म भगवान् जैमिनिः । प्रयोक्तरि अनुष्ठातरि कर्त्तरीति यावत् । शास्त्रफलं स्वर्गादि, कुतः ? प्रयोक्तृफलसाधनतालक्षणत्वाच्छास्त्रस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विधेरिति सूत्रार्थः। तथा च कथं श्रुतिन्यायविरुद्धमकर्त्तृत्वमात्मनोऽभ्युपगम्यत इति भावः॥ ४॥

शास्त्रार्थवत्त्वादिति सूत्रसिद्धम्
कर्त्तृत्वमेतस्य तथाऽऽगमेषु।
कर्त्तृत्वभोक्तृत्वविवर्जितेऽस्मिन्
शास्त्रं प्रमाणत्वमियात् कथं ते॥ ५॥

न केवलं पूर्वमीमांसोक्तरीत्या विरुद्धमेतत्, अपि तु उत्तरमीमांसोक्तरीत्याऽपीत्याह—शास्त्रार्थवत्त्वादिति। "कर्त्ता शास्त्रार्थवत्त्वाद्" (ब्र॰ सू॰ २।३।३३) इति सूत्रम्। कर्त्ता चायं जीवः स्यात्, कस्मात्? शास्त्रार्थवत्त्वाद्। एवं "यजेत दद्याज्जुहुयात्" इत्येवंविधं विधिशास्त्रमर्थवद्भवति। अन्यथा तदनर्थकं स्यादिति सूत्रार्थः। तथा च कर्त्तृत्वादिविनिर्मुक्तेऽस्मिन्नात्मनि कथं शास्त्रं प्रमाणत्वं प्राप्नुयादित्यर्थः॥ ५॥

कर्त्तुः सतः कृत्यविशेषमेत-
च्छास्त्रं विधत्ते सति तत्र कस्य।
विज्ञानमेतत्तनुते हि यज्ञ-
मित्यादिशास्त्रादयमस्ति कर्त्ता॥ ६॥

युक्त्यन्तरेणैतद् द्रढयति—कर्त्तुरिति। किञ्च तद्धि शास्त्रं कर्त्तुः सतः कर्त्तव्यविशेषमुपदिशति, न चासति कर्त्तृत्वे तदुपपद्येत, तथा शास्त्रमर्थवद्भवति। "एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वोद्धा कर्त्ता विज्ञानात्मा पुरुषः" (प्र० ४। ९) इति "विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपि च।"(तै०२।५)इति शास्त्रादप्ययमात्मा कर्त्तेत्यर्थः ॥६॥

कर्त्तृत्वमस्मिन्ननुभूतिसिद्धम्
गच्छामि भुञ्जेऽहमिति प्रतीतेः ।
नैतद्धियः स्यात्करणत्वहेतोः
कर्त्तृत्वमात्मन्यवगम्यतेऽतः ॥ ७ ॥

न केवलं शास्त्रसिद्धं तत्कर्त्तृत्वं किन्त्वनुभवेनापीत्याह—कर्त्तृत्वमिति। ननु श्रुतावेष विज्ञानशब्दो बुद्धौ समधिगतः, कथमनेन जीवस्य कर्त्तृत्वं सूच्येतेत्याशङ्क्याह—नैतदिति। जीवस्यैष निर्देशो न बुद्धेः, न चेद् जीवस्य स्याद्, निर्देशविपर्य्ययः स्याद्, विज्ञानेनेत्येवं निरदेक्ष्यत। तथा ह्यन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते "तदेषां प्राणानां विज्ञानेन विज्ञानमादाय" ( बृ० २। १। १७ ) इति। अत्र तु "विज्ञानं तनुते" ( तै०२। ५) इति कर्त्तृसामानाधिकरण्यनिर्देशाद् बुद्धिव्यतिरिक्तस्यैवात्मनः कर्त्तृत्वं सूच्यत इति तात्पर्य्यार्थः ॥७॥

वेदान्तशास्त्रेऽपि समाधिरुक्तो
बोधार्थमप्यात्मनि कर्त्तृरूपे ।
यदाऽस्त्यकर्त्ता कथमस्य बोधे
द्रष्टव्य इत्याद्युपदेश इष्टः ॥ ८ ॥

ननु कथमेतद् वेदान्तसम्मतं स्यादित्यत आह—वेदान्तशास्त्रेऽपीति। योऽयमौपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टो वेदा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तेषु "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः (बृ० २।४।५) "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" (छा० ८।७।१) "ओमित्येवं ध्यायथ आत्मानम्" (मु० २।६) इत्येवंलक्षणः सोऽप्यसत्यात्मनः कर्त्तृत्वे नोपपद्यते। तस्मादप्यस्य कर्त्तृत्वसिद्धिरित्यर्थः ॥ ८ ॥

शास्त्रार्थवत्त्वादिभिरात्मनस्तु
कर्त्तृत्वमावश्यकमभ्युपेयम्।
स्वाभाविकं हेतुभिरत्र बाधा-
भावात्कथन्तेऽभिमतं विरुद्धम् ॥ ९ ॥

पूर्वपक्षमुपसंहरति—शास्त्रार्थवत्त्वादिभिरिति। शास्त्रार्थवत्त्वादिहेतुभिरात्मनः कर्त्तृत्वमावश्यकमिति स्वीकर्त्तव्यमिति सम्बन्धः। नह्यत्र बाधो दृश्यते। अतः स्वाभाविककर्त्तृत्वे सत्यात्मनोऽकर्त्तृत्वाभ्युपगमो वेदन्यायविरुद्ध इत्यर्थः ॥ ९ ॥

स्यादेतदेवं यदि वास्तवं तत्
कर्त्तृत्वमिष्टं श्रुतिगीर्भिरेवम्।
किन्त्वस्त्यविद्यापरिकल्पितं तत्
कर्त्तृत्वमात्मन्यचले विशुद्धे ॥ १० ॥

शास्त्रन्यायतात्पर्य्यानभिज्ञस्याऽयमाक्षेपः, तत्तात्पर्य्यविचारे नायमाक्षेपो युक्तः, भिन्नाधिकारविषयत्वादित्याशयेन समाधत्ते— स्यादिति। यदि तस्यात्मनः कर्त्तृत्वं वास्तवं श्रुतिगीर्भिरिष्टत्वेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पिपादयिषितं स्यात्, तदैवमेव स्याद्विरोधः; न तु तथा; किन्त्वात्मनि विशुद्धे सर्वधर्म्मविनिर्मुक्तेऽचले नित्यमेवाऽविक्रियत्वादक्रियेऽविद्यापरिकल्पितं तत्कर्त्तृत्वं तस्य कर्म्मसमाध्यादेः कर्त्तृत्वमादाय शास्त्रमर्थवद्भवतीत्यर्थः ॥ १० ॥

स्वाभाविकं चेदिदमात्मनीष्टं
ततो न निर्मोक्ष उदेति तस्य ।
अग्नेरिवौष्ण्यान्न च कर्त्तृभावा-
दमुक्तपुंसः पुरुषार्थसिद्धिः ॥ ११ ॥

आत्मनि कर्त्तृत्वादिधर्म्मस्य स्वाभाविकत्वे प्रत्युत वेदान्तशास्त्रानर्थक्यं स्यादित्याह—स्वाभाविकमिति। नन्वस्तु कर्त्तृत्वे सत्यपि मुक्तिरूपपुरुषार्थ इति नेत्याह—न चेति । कर्त्तृत्वादमुक्तस्य पुंसः कर्त्तृत्वादिधर्म्मवत्त्वमेव बन्धस्तस्मिन् सति मोक्षोऽपि बन्धापरपर्य्याय एव स्यादित्यर्थः ॥ ११ ॥

कर्त्तृत्वमेवास्य भवाब्धिदुःखं
तस्मिन् सतीतो न विमुक्तिरस्ति ।
स्वाभाविकत्वेऽस्य न साधनैः स्या-
दुच्छेद एतत्प्रतिबन्धनं वा ॥ १२ ॥

एतदेव विवृणोति—कर्त्तृत्वमिति। कर्त्तृत्वस्य दुःखरूपत्वात् तस्मिन् सति इतः कर्त्तृत्वादिसंसारबन्धात् कथं मोक्षः स्यात् ? ननु स्थितायामपि कर्त्तृत्वशक्तौ कर्त्तृत्वकार्य्यपरिहारात् पुरुषार्थः सेत्स्यति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्परिहारश्च निमित्तपरिहाराद्, यथाग्नेर्दहनशक्तियुक्तस्यापि काष्ठा-
योगाद् दहनकार्य्याभावः, तद्वद्; इत्याशङ्क्य निमित्तानामपि शक्तिवत्
सम्बन्धेन सम्बद्धानामत्यन्तपरिहारासम्भवान्नैवमित्याह—स्वाभावि-
कत्वे इति। एतस्य कर्त्तृत्वस्य प्रतिबन्धनमात्यन्तिकं साधनैः
सम्भाव्यते इत्यर्थः। नन्वस्तु तर्हि स्वाभाविकस्यापि धर्म्मस्य कदाचित्
बलसाधनैरुच्छेदः विषस्य मारकस्वभावो यथौपधिगरुडध्यानादिभि-
रुच्छिद्यते, तद्वत्; इत्याशङ्क्याह—न साधनैरिति। स्वाभाविकत्वे
कर्त्तृत्वस्य साधनैरुच्छेदोऽत्यन्तनाशः न स्यात्। विषस्य तु गरुडध्या-
नादिना स्वरूपतो धर्मिण एव नाशो न तु धर्म्ममात्रस्य। अत्र त्वात्म-
धर्म्मिणो नाशाभावात्तद्धर्मस्यापि स्वाभाविकस्य साधनैरुच्छेदोऽशक्यः,
न्यथा स्वभावत्वस्यैव क्षतिरिति दृष्टान्तो विषम इति भावः॥ १२॥

न वाऽस्य सत्त्वे करणोपदेशाद्
मोक्षोऽपि सिद्ध्येच्छ्रुतिमौलिगीर्भिः।
मुक्तिर्न साध्याऽखिलसाधनैर्वा
नित्यत्वहेतोः स्वयमेव सिद्धा॥१३॥

ननु मोक्षसाधनविधानान्मोक्षः सेत्स्यतीत्याशङ्क्य साध-
तस्याऽनित्यत्वाद् नैवमित्याह—न वाऽस्येति। अस्य कर्त्तृत्वस्य स-
साधनोपदेशादपि न वा मोक्षः सिद्ध्येदिति सम्बन्धः। न वा वेदा-
वाक्यैर्मुक्तिरपि साध्यत्वेन प्रतिपाद्यते। नहि नित्यसिद्धस्य
मोक्षस्य साधनसाध्यत्वं युक्तिपथमवतरतीति तात्पर्यार्थः॥ १३॥

न वा विचारोऽपि वृथा श्रुतीना-
मध्यासविच्छेदकरो यतः सः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अज्ञानबाधेन विचारणायाः
साफल्यमिष्टं न च वस्तुहानात् ॥१४॥

ननु मोक्षस्य साधनैरसाध्यत्वे "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" (बृ० ४।५।६) इत्यादिविचारसाधनविधायकश्रुतीनामानर्थक्य-मित्याशङ्क्य पुरुषापराधनिवृत्तिसाधनत्वेन विचारविधायकश्रुतीनां साफल्यान्नैवमिति परिहरति—न चेति। विचारणाया विचारनिर्णीत-वेदान्तवाक्यजन्यज्ञानस्याऽज्ञानबाधेनैव साफल्यं श्रुतीनामिष्टम्, न तु वस्तुनः सद्रूपस्य हानात्। नहि ज्ञानं कस्यचिदज्ञानबाधमन्तरेण निव-र्त्तकं जनकं वा दृष्टमित्यज्ञानतत्कार्य्याध्यासबाध एव ज्ञानफलम्। तज्जनकत्वेन विचारविधायकश्रुतीनां साफल्यमिति भावः ॥१४॥

विशुद्धबुद्धामृतनित्यमुक्त-
स्वभावबोधादिह मोक्षसिद्धिः।
उक्ता न तादृक्प्रतिपादनं वा
युज्येत तस्मिन् सति वाऽऽत्मबोधः ॥१५॥

असङ्गस्याऽऽत्मनो नित्यमुक्तत्वप्रतिपादनान्यथानुपपत्तेरपि कर्त्तृत्वं कल्पितमेवेत्याह—विशुद्धेति। नित्यशुद्धबुद्धमुक्तस्वाभावात्मप्रतिपाद-नान्मोक्षसिद्धिस्तादृक्स्वरूपपरिज्ञानादेव श्रुतिभिरभिहिता, तादृगात्म-प्रतिपादनं तादृगात्मावबोधो वा न स्वाभाविककर्त्तृत्वेन कल्पते। तस्मादु-पाधिधर्म्माध्यासेनैवात्मनः कर्त्तृत्वम्, न स्वाभाविकमित्यर्थः ॥१५॥

तस्मादविद्यापरिकल्पितं तत्
कर्त्तृत्वमध्यस्तनिवृत्तिरिष्टा।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्त्वाववोधात् स च वेदमौले-
विचारतः सिद्ध्यति सन्मुमुक्षोः ॥१६

फलितं वदन्नुक्तमेवार्थं द्रढयति—तस्मादिति। यस्मात्स्वाभावि-
ककर्त्तृत्वे सर्वमसङ्गतम्, तस्मादनाद्यविद्याकल्पितमेव तस्याऽऽत्मनः कर्तृ-
त्वम्; अत एव तत्त्वाववोधादध्यस्तकर्त्तृत्वादेर्निवृत्तिरिष्टा। स च
तत्त्वाववोधो वेदमौलेस्तत्त्वमस्यादेर्विचारतः सन्मुमुक्षोः सिद्ध्यतीति
योजना ॥ १६ ॥

ध्यानञ्च लेलायनमागमान्तै-
रविद्ययाऽऽत्मन्यवगम्यतेऽतः
भोक्तृत्वमप्यात्मनि कल्पितं स्या-
दुपाधिसम्बन्धत एव शुद्धे ॥ १७ ॥

"ध्यायतीव लेलायतीव" (बृ० ४। ३। ७) इति श्रुतिः
"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" (क० ३। ४) इति
चोपाधियुक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयन्ती तस्य स्वाभा-
विककर्त्तृत्वाभावं सूचयतीत्याह—ध्यानमिति ॥१७॥

न वा परस्मादतिरिक्त इष्टो।
जीवः परब्रह्मपदाद् विशुद्धात्।
कर्त्तृत्ववान्नैव च विद्यतेऽन्य-
स्तस्मादकर्त्तैष चिदद्वयात्मा ॥१८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वस्त्यकर्त्ता भोक्ता च परमात्मा, जीवस्तु ततो भिन्नः कर्त्तृत्वादिधर्म्मवान् किन्न स्याद् ? इत्याशङ्क्याह—न वेति । नहि विवेकिनां परस्मादन्यो जीवो नाम कर्त्ता भोक्ता वा विद्यते, "नान्योऽतोऽस्ति द्रष्टा" ( बृ० ३ । ७ । २३ ) इत्यादिश्रवणादिति भावः ॥ १८ ॥

अविद्ययाऽध्यस्तमशेषमेतद्
विद्योदयान्नश्यति चित्स्वरूपे ।
नाध्यस्तदोषेण गुणेन लेपोऽ-
धिष्ठाननिष्ठः परिदृश्यतेऽद्धा ॥ १६ ॥

ननु परमात्मैव तर्हि जीवाभिन्नतया कर्त्ता भोक्ता च प्रसज्ज्येत, यतः परमात्मनोऽन्यश्चिद्रूपो बुद्ध्यादिसङ्घातव्यतिरिक्तो न स्वीक्रियते इत्याशङ्क्य कर्त्तृत्वभोक्तृत्वयोरविद्याप्रत्युपस्थापितत्वाद् "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" ( बृ० २ । ४ । १४ ) इति श्रुत्याऽविद्यावस्थायां कर्त्तृत्वभोक्तृत्वे दर्शयित्वा, विद्यावस्थायाम् "यत्र त्वस्य सर्वमात्मैवाऽभूत्तत्केन कं पश्येत्" ( बृ० २ । ४ । १४ ) इति श्रुत्या निषिध्येते । ततो वास्तवकर्त्तृत्वादेरभावान्मैवमिति परिहरति—अविद्येति । तथा च तत्त्वज्ञानमात्रैकनिवर्त्त्यान्यथानुपपत्तेश्चिद्रूपेऽविद्यामात्रैकशरीरं कर्त्तृत्वमध्यस्तमेव, न तु स्वाभाविकम् । नह्यध्यस्तस्य गुणेन दोषेण वाऽधिष्ठानभूतस्य चिद्रूपात्मनः सम्बन्धः । नहि कल्पितमरुमरीचिकाजलेन मरुस्थलं पङ्कीक्रियत इति भावः ॥१६॥

आत्मन्यवस्थात्रयमप्यविद्याऽ-
ध्यस्तं तुरीयेऽखिलसाक्षिणीतः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आत्माऽस्त्यकर्त्ता श्रुतिभिर्यतोऽस्याऽऽ-
नन्दात्मनोऽसङ्गपदत्वमुक्तम् ॥२०॥

अग्नेरिवौष्ण्यं न च कर्त्तृभावः
स्वाभाविकः प्रत्यगसङ्गरूपे ।
सुप्तावभावेऽप्यखिलस्य साक्षी
कूटस्थ आभाति दृगात्मनाऽयम् ॥२१॥

स्वप्नजागरितयोरात्मन उपाधिसम्पर्ककृतं श्रमं श्येनस्येवाका- विपरिपतत इति श्रावयित्वा तदभावे सुषुप्ते प्राज्ञेनात्मना सम्परिष्वक्त- श्रावयति "तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरं" (बृ० ४ । ३ । २१) मित्यारभ्य "एषास्य परमा गतिरेषास्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परमानन्दः" (बृ० ४ । ३ । ३- इत्युपसंहारादवस्थात्रयविनिर्मुक्त एवात्मा तत्साक्षितया ज्ञानतत्का- स्फोरयन्नपि न कर्त्तृत्वादिदोषकणिकामपि स्पृशतीत्याह—आ- नीति पद्यद्वयेन । दृगात्मना चिद्रूपसाक्षिभावेन इत्यर्थः । सुग- मन्यत् ॥ २०—२१ ॥

यथा च तक्षोभयथेति सूत्रे
कर्त्तृत्वमध्यस्तमुदीरितं स्यात् ।
न चाऽस्त्यबुद्ध्यादि विनाऽऽत्मनोऽपि
कर्त्तृत्वमित्यंश इहाऽस्ति साम्यम् ॥२२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वतः अकर्त्तुरप्यात्मन उपाधिसम्बन्धेनारोपितकर्त्तृत्वमादायैव शास्त्रं फलवद्भवतीति दर्शयितुमविद्योपस्थापितकर्त्तृत्वेनाऽऽत्मा संसारीव, दुःखीव चाभाति। तदपगतायां निर्विकल्पोदासीनस्वरूपेणाऽवस्थानलक्षणो मोक्षोऽस्य सिद्ध्यतीत्यत्र न्यायं दर्शयति—यथा च तक्षोभयथेति। यथा नु लोके तक्षा वास्याधिकरणहस्तः कर्त्ता, दुःखी भवति। स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो, निर्वृत्तो, निर्व्यापारः, सुखी भवति। एवमविद्याप्रत्युपस्थापितद्वैतसम्पृक्त आत्मा स्वप्नजागरितावस्थयोः कर्त्ता, दुःखी भवति। स तद्रूपापनुत्तये स्वात्मानं परं ब्रह्म प्रविश्य मुक्तकार्य्यकरणसङ्घातोऽकर्त्ता सुखी भवति। सम्प्रसादावस्थायां तथा मुक्तावस्थायामपि अविद्याध्वान्तं विद्याप्रदीपेन विधूयाऽऽत्मैव केवलो निर्वृत्तः सुखी भवति। तक्षदृष्टान्तश्चैतावतैवांशेन द्रष्टव्यः। तक्षा हि विशिष्टेषु तक्षणादिषु व्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्त्ता भवति। स्वशरीरेण त्वकर्त्तैव। एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्त्ता भवति, स्वात्मना त्वकर्त्तैवेति। न त्वात्मनस्तक्ष्ण इवावयवाः सन्ति। यैर्हस्तादिभिरिव वास्यादीनि तक्षा, मनआदीनि करणानि आत्मा उपाददीत न्यस्येद् वेति सूत्रतात्पर्यार्थः। एतेनैव पद्यं व्याख्यातप्रायमिति। तथा च शुद्धबुद्धनित्यमुक्तस्वभावस्य ज्ञानघनस्य प्रत्यगात्मनः स्वाभाविकमकर्त्तृत्वम्, स्वरूपाज्ञानप्रयुक्तमध्यस्तमेव कर्त्तृत्वमित्युभयथा शास्त्रमर्थवद्भवतीति न काचिदनुपपत्तिः सम्यग्वेदान्तसिद्धान्तविदामिति भावः ॥ २२ ॥

शास्त्रार्थवत्त्वादिभिरप्यविद्या-
ध्यस्तं हि कर्त्तृत्वमिहाऽस्तु वाऽन्यत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनाग्रहेण प्रतिपाद्यते तत्
कर्त्तृत्वमात्रेण कृतार्थतैषाम् ॥ २३ ॥

यत्तूक्तं शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृ-
मिति तत्राह—शास्त्रार्थवत्त्वादिभिरिति द्वाभ्याम् । शास्त्रार्थवत्त्वा-
दिभिर्हेतुभिरिहात्मनि कर्त्तृत्वमात्रं प्रतिपाद्यते । तदविद्याध्यस्तं वा
अन्यदस्तु वेत्यनाग्रहेण यथाकथञ्चित् कर्त्तृत्वमात्रेणैषां हेतूनां
कृतार्थता हीति योजना । यत्परं शास्त्रं स एव शास्त्रार्थः । क-
पेक्षितोपायभावनापरञ्च तत्, न कर्त्तृस्वरूपपरम् । तेन यथा लोकाः
कर्त्तारमपेक्ष्य स्वविषये प्रवर्त्तमानं न पुंसः स्वाभाविकं कर्त्तृत्वमवग-
यितुमुत्सहते । तस्मात्तत्त्वमसीत्याद्युपदेशविरोधादविद्याकृतमेव कर्तृ-
त्वमात्मनः, न स्वाभाविकमिति तात्पर्य्यार्थः ॥२३॥

ब्रह्मात्मता वेदगिराऽस्य गीता
स्वतोऽस्य कर्त्तृत्व इयं प्रकुप्येत् ।
तस्मादविद्याकृतमाकलय्य
कर्त्तृत्वमस्य श्रुतिगीः प्रवृत्ता ॥२४॥

इममेवार्थं स्पष्टयति—ब्रह्मात्मतेति । वेदगिरा तत्त्वमस्यादिवाक्ये-
नाऽस्य प्रत्यगात्मनो ब्रह्मात्मता ब्रह्मस्वरूपता गीता प्रतिपादिता । सा
स्वतोऽस्यात्मनः कर्त्तृत्वे प्रकुप्येत् । तस्मात्तदैक्यप्रतिपादकशास्त्रा-
न्यथानुपपत्तेरविद्याकृतं कर्त्तृत्वमस्यात्मन आकलय्य यजेतेत्यादि
श्रुतिगीः प्रवृत्तेति योजना ॥२४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यजेत दद्यादिति पूर्वकाण्डं
द्रष्टव्य इत्यादि तथोत्तरञ्च ।
सुखं प्रवर्त्तिष्यत आवबोधा-
द्बोधे तु नैनं प्रति वेदवादः ॥ २५ ॥

तथा सति काण्डद्वयात्मकं शास्त्रमविरुद्धमित्याह—यजेतेति । पूर्वकाण्डात्मकं शास्त्रमविद्याकृतं कर्त्तृत्वमादाय प्रवर्त्तिष्यते, तथोत्तरकाण्डात्मकमपि शास्त्रं सुखं प्रवर्त्तिष्यते । कर्त्ता विज्ञानात्मा पुरुष इत्येवं जातीयकमनुवादरूपत्वाद् यथाप्राप्तमेवाविद्याकृतं कर्त्तृत्वमनुवदिष्यति । आ अवबोधादिति च्छेदः । तत्त्वसाक्षात्कारपर्यन्तमेवोभयविधशास्त्रं फलवद्भवति । तत्त्वसाक्षात्कारे जाते तु एनं तत्त्वविदं प्रति न कोऽपि वेदवाद इत्यर्थः ॥२५॥

यत्त्वाह यज्ञं तनुते श्रुतेर्गी-
रित्यादिका साऽपि मतेर्जडायाः ।
कर्त्तृत्वमाहो परमे धियस्तु
स्वच्छोऽक्रियः सुप्तिगतोऽस्ति साक्षी ॥२६॥

यत्तूक्तं "विज्ञानं यज्ञं तनुते" ( तै० २ । ६ ) इत्यादि, तदपि बुद्ध्युपाधिकस्यैव कर्त्तृत्वपरं न त्वक्रियात्मनः साक्षिणः इत्याह—यत्त्वाहेति ॥२६॥

न साक्ष्यधर्म्मेण दृशोऽस्ति योगोऽ-
ध्यासं विनाऽऽत्रिध्यक एव सोऽपि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न कारकैः युज्यत आत्मतत्त्वं
कथं स कर्त्तृत्वमितो भजेत ॥२७॥

साक्षित्वादिवास्य न कर्त्तृत्वमित्याह—नेति। अविद्यातत्का- साक्षिणो दृशो दृग्रूपस्य न साक्ष्येण दृश्यवर्गेण योगः सम्बन्धोऽ- विनाऽऽविद्यकाध्यासम्। अत: सोऽपि सम्बन्ध आविद्यकाध्यास ए- तस्मान्न कारकैर्बुद्ध्यादिभिरकर्त्तुः साक्षिणः सम्बन्ध गन्धोऽपीति कथं कर्त्तृत्वं भजेतेति योजना ॥२७॥

ब्रह्मैव जीवात्मतया प्रविष्टं
देहेषु सृष्टेषु निजात्मशक्त्या।
यस्मात्ततोऽकर्त्तृ तदस्यरूपं
देहाद्यतीतस्य विभोः परस्य ॥२८॥

"अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" (छा० ६। ३। २) "तत्सृष्ट्वा तदेवानुप्राविशत्," (तै० २। ६। १) इत्यादि- रकर्त्तुर्ब्रह्मण एव जीवरूपेण सर्वत्र प्रवेशश्रवणादप्यस्याऽकर्त्तृत्वमित्याह ब्रह्मेति। यस्माद् ब्रह्मैव निजात्मशक्त्या मायया सृष्टेषु देवतिर्यगादिदे- जीवात्मतया प्रविष्टं श्रूयते इति शेषः। ततस्तस्मादस्य प्रत्यगात्म- वस्तुतो देहाद्यतीतस्य, विभोरपरिच्छिन्नस्य, परस्य परमात्मनस्तदेवा- र्त्तृस्वरूपं ब्रह्मैवाऽस्य रूपं नान्यदिति योजना ॥ २८ ॥

न चाणुमात्रं न शरीरमात्रं
चिद्रूपमद्वैतमखण्डमेतत्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मैव जीवस्य वपुर्न चान्य-
दध्यस्तमेतत्स्थिरमस्थिरं वा ॥२६॥

एवमात्मनोऽक्रियत्वादकर्तृत्वस्वभावत्वं प्रसाध्येदानीमितरवादिपरिकल्पितपक्षान् निराकुर्वन् परिपूर्णब्रह्मस्वभावत्वं दर्शयति—न चेति । अणुपरिमाणं जीवस्य वपुः स्वरूपं न भवतीत्यर्थः । "एषोऽणुरात्मा चेतसा वेदितव्यः" (मु० ३ । १ । ९) "वालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः" (श्वे० ५ । ९) "वालाग्रमात्रं हृदयस्य मध्ये" (अ० शि० ५) "अणोरणीयान्" (क० १ । २ । २०) इत्यादिश्रुतीनां प्रत्यगात्मनो बुद्ध्युपाधिसम्बन्धप्रयुक्तातिन्यूनपरिमाणतालक्षणपरिच्छेदानुवादेन वास्तवापरिच्छेदलक्षणे आनन्त्ये तात्पर्य्यम् । "स चानन्त्याय कल्पते" (श्वे० ५ । ९) इति वाक्यशेषे जीवस्य मोक्षे स्वाभाविके आनन्त्यश्रवणान्नहि वास्तवस्यापगमे उत्पन्नस्य नित्यता सम्भवति । तस्मान्नाणुरूप आत्मेत्यर्थः । न शरीरमात्रं शरीरपरिमाणो न भवति । तथा सति घटादिवदात्मनोऽप्यनित्यत्वं दुर्वारं स्यात् । मशकदेहपरिमाणस्य हस्तिदेहप्रविष्टस्य सकलशरीरव्यापिसुखदुःखाद्यनुसन्धानानुपपत्तेः । न च सङ्कोचविकाससम्भवो निरवयवत्वादात्मनः । सावयवत्वे च शरीरान्तरेऽवयव्यन्तरारम्भादनित्यत्वप्रसक्तिः । न चेदं साम्प्रतम्—पुण्यापुण्ययोरकृताभ्यागमकृतविप्रणाशप्रसङ्गान्न शरीरमात्रमित्यर्थः । चिद्रूपमिति । न जडरूपम्, न वा चिज्जडोभयरूपम्; तयोरप्रामाणिकत्वात् । नहि जडात्मनो ज्ञानगुणकत्वं सम्भवति, निर्गुणश्रुतिविरोधात् । न वा जडचैतन्ययोर्धर्म्मधर्म्मिभावः प्रामाणिकः—चैतन्ये न जडधर्म्मः, तद्विरुद्धस्वभावत्वात् । यो यद्विरुद्धस्वभावो नासौ तद्धर्म्मः, यथा भास्वरत्वं तमसः, औष्ण्यं वा जलस्य—इत्यनुमानविरोधात् । तस्मान्न जडरूपं ज्ञान-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुणमात्मतत्त्वमिति भावः। न चोभयात्मकम्, विरोधात्। तस्मा[द्]
मेवाऽऽत्मेति सिद्धम्। अद्वैतमिति। सांख्याद्यभिमतद्वैतशून्यम्, भ[े]
भेदस्य भेदाभेदस्य चाप्रामाणिकत्वात् सजातीयादिभेदशून्यम्, ए[क]
प्रकाशत्वाद् अवेद्यत्वे सत्यपरोक्षतया सिद्धं ब्रह्मैव जीवस्य वपुः स्वरू[पम्]
न चान्यदस्थिरं नित्यं नैयायिकाद्यभिमतम्, न वाऽस्थिरं क्षणिका[दि]
बौद्धाभिमतम्, न वाऽध्यस्तमाभासादिरूपं वेदान्तैकदेश्यभिम[तम्]
बन्धमोक्षयोर्वैयधिकरण्यापातादित्यर्थः। आभासरूपजीवस्य तत्त्व[...]
त्यत्र बाधायां सामानाधिकरण्यं वाच्यम्, तदयुक्तम्; मोक्ष[...]
जीवस्य तत्त्वतोऽप्यपरिशेषात् स्वीयपुरुषार्थानुपयुक्ते मोक्षशास्त्रे क[...]
प्रवृत्तिरेव न स्यात्, प्रत्युत स्वात्मघातिनि तस्मिन् प्रद्वेष एव स्या[त्]
भावः। तस्माद्ब्रह्मैव जीव इति सिद्धम्॥ २९॥

देहाद्यहङ्कारवशेन बद्धो
जीवः प्रमातृत्वमुखं विकल्पम्।
प्रयात्यविद्याकृतमात्मविद्यो-
दयेन मुक्तः परमेश्वरोऽयम्॥३०॥

ननु ब्रह्मैव जीवश्चेत्तर्हि तस्य कथं संसारित्वमिति तत्रा[ह] देहाद्येति। अयं प्रत्यगात्मा ब्रह्मस्वरूप एवाऽविद्याध्यारोपितं प्र[मातृ]त्वादिविकल्पं स्वाविद्यया जीवः सन् प्रयातीति सम्बन्धः। अत ए[व] विद्यारोपितदेहाद्यहङ्कारेण बद्ध इति व्यवह्रियते। आत्मविद्योद[येन] मुक्तः, अविद्यातत्कार्योच्छेदेन परमेश्वर एव भवतीत्यर्थः॥ ३०॥

नृपात्मजो व्याधकुले विवृद्धो
व्याधोऽहमस्मीत्यभिमन्यते स्वम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विस्मृत्य राजन्यकुलोद्भवत्वं
यथा तदीयं कुरुते स कर्म्म ॥३१॥

नित्यमुक्तस्वभावोऽपि ब्रह्मात्मैव स्वाऽविद्यया स्वस्मिञ्जीवत्वमारोप्य बद्धः संसारी जीवोऽहमित्यभिमन्यते—इतीममर्थं दृष्टान्तेन व्युत्पादयति—नृपात्मज इति। यथा कश्चिद्राजकुमारो मातापितृभ्यां वने परित्यक्तः केनचिद् व्याधेन वर्द्धितस्तस्मिन्व्याधकुले विवृद्धः शैशवमतिक्रम्य, पौगण्डो भूत्वा, स आत्मनो राजन्यकुलोद्भवत्वं विस्मृत्य स्वमात्मानं व्याधोऽहमस्मीत्यभिमन्यते, तदीयं व्याधकुलोचितं कर्म्म कुरुत इति योजना ॥ ३१ ॥

तथाऽद्वयं ब्रह्म सुखं विशुद्धं
जीवोऽपि विस्मृत्य शरीरयुग्मे ।
तादात्म्यभावाद्भजते तदीयान्
धर्मानहङ्कर्त्तृतया प्रमादो ॥ ३२ ॥

उक्तमर्थं दार्ष्टान्तिके योजयति—तथेति। तथैव ब्रह्मापि सुखम्, अद्वयम्, विशुद्धमविद्यातत्कार्यविनिर्मुक्तं स्वरूपं विस्मृत्य जीवो भूत्वा शरीरयुग्मेऽविद्याध्यस्तदेहद्वये तादात्म्यभावात् स्वात्मत्वाध्यासात् प्रमादी अज्ञानाचरणप्रमादयुक्तस्तदीयान् देहद्वयधर्मान् मनुष्यत्वब्राह्मणत्वस्थूलत्वकृशत्वकामक्रोधशान्तिसन्तोषादीनहङ्कर्त्तृतया "अहं ब्राह्मणः, पण्डितो, मूढः" इत्यादिरूपेण भजते स्वीकरोतीति योजना ॥ ३२ ॥

क्व चात्मतत्त्वं श्रुतिभिर्विमृग्यं
क्व देहयुग्मं जडभूतकार्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहो अविद्यापरिजृम्भणं यत्
कर्त्ताहमित्यादितदैक्यबुद्धिः ॥३३॥

अविद्याया अत्यन्तासम्भावितप्रदर्शकत्वान्न किमप्यसम्भा मित्याह—क चेति। आत्मतत्त्वं नित्यशुद्धबुद्धमुक्तस्वभावानन्दा न्दामृताभयस्वभावं श्रुतिभिर्वेदान्तैर्विमृग्यमन्वेषणीयम्—विधि वाक्यैरत्यन्तरहस्यत्वेन प्रतिपाद्यतया अधिकारिभ्यो बोधनीयं क च, क चाऽविद्याकार्य्यजडरूपपञ्चमहाभूतकार्य्यदेहयुग्मं सूक्ष्मरूपम्। अहो आश्चर्य्यमेतद्, अविद्यापरिजृम्भणमत्यन्तास वितघटनापटीयस्त्वमिदमस्या उल्लसितम्। किं तदित्यत आह यदिति। यदिदमहं कर्त्तेत्यादिरूपेण तयोरात्मतत्त्वदेहयुग्मयो निष्ठा बुद्धिरिति योजना ॥ ३३ ॥

अन्नोद्भवेऽत्राऽन्नमये शरीरेऽ-
ध्यासाद् द्विजातित्वमुखान्विकल्पान्
प्रयाति तद्भिन्ननिजात्मबोधा-
न्न जन्ममृत्यादिविकल्पमेति॥ ३४

एवमघटनघटनापटीयस्त्वमविद्यायाः प्रदर्श्य तत्कार्य्यकोशविका आत्मानं पृथग् बोधयितुमुपक्रमते। तत्रादौ अन्नमयकोशविवेचनं लञ्च दर्शयति—अन्नोद्भवे इति। अन्नात्—मातापितृभुक्तान्नपरि मरेतःशोणितद्वारा—स्थूलशरीरमुत्पद्यते, अन्नेनैव विवर्द्धत इत्यन्नो अन्नमयेऽन्नविकारे शरीरे प्रागभावध्वंसप्रतियोगिनि अहमित्यध्या द्विजातित्वमुखान् विकल्पान् "मनुष्योऽहं ब्राह्मणोऽहम्", "अमु पुत्रोऽहम्, स्थूलः, कृशः" इत्यादितत्तादात्म्यरूपान् प्रत्ययान् प्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप्नोतीत्यर्थः । तस्मात्स्थूलशरीरादन्नमयकोशाद्भिन्नो यो निजात्मा तस्य बोधादन्वयव्यतिरेकादियुक्तिसहकृतशास्त्रोपदेशजनिताद् विवेकाद् जन्ममृत्यादिविकल्पम्—"जातोऽहं मरिष्यामि" इत्यादिविकल्पम्—न प्राप्नोतीत्यर्थः ॥ ३४ ॥

ततोऽपरः प्राणमयोऽपि कोशः
क्षुधापिपासोर्मियुतो विकारी ।
तत्रात्मताध्यासवशेन दुःखी
तद्भिन्नवस्त्वात्मधिया सुखी स्यात् ॥३५॥

एवमन्नमयस्य स्वरूपं, तद्विवेचनफलञ्च प्रदर्श्य प्राणमयस्याऽनात्मत्वं प्रदर्शयितुं प्राणमयकोशाद् विवेचनं तत्फलञ्चाह—तत इति । ततोऽन्नमयकोशादपरः कर्म्मेन्द्रियैः सहितः प्राणः प्राणमयः कोशः क्षुत्पिपासालक्षणोर्मियुक्तः, अत एव विकारी भूतविकारत्वादनात्मरूपे तत्र प्राणमयेऽहमिति मिथ्याध्यासवशेन दुःखी—क्षुत्पिपासादिदुःखस्य प्राणधर्मस्य स्वस्मिन्नारोपणात् सन्तापवान्—भवति । तस्माद्भूतविकाराज्जडात्प्राणाद् भिन्नवस्तुरूप आत्मा तस्य धिया विवेकेन सुखी स्यात् । प्राणतद्धर्म्मक्षुधादितादात्म्यविनिर्मुक्ततया स्वरूपसुखाभिमुखो भवतीत्यर्थः ॥ ३५ ॥

मनोमयः कोश इतोऽतिरिक्तो
नानाविकल्पास्पदमापदब्धिः
तद्भिन्नतत्साक्षिधिया विमुक्तो
विकल्पजालाज्जनिमृत्युवार्द्धेः ॥३६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनोमयस्य स्वरूपं प्रदर्शयन् तस्याऽनात्मत्वं तद्विवेचनफलं दर्शयति—मनोमय इति। इतः प्राणमयादतिरिक्तः कर्म्मेन्द्रियैः सहि मनो मनोमयः कोशः, नानाविकल्पानां क्षणे क्षणेऽनेकमनोराज्याना-मास्पदं निवासभूमिः, अत एवापदब्धिस्तृष्णादिदोषरूपाणामापदां समुद्रः, तस्माद्भिन्नस्य तत्साक्षितया धिया विवेकेन विकल्पजालाज्जात-वद् बन्धकादत एव जनिमृत्युसमुद्रादनेकशरीरग्रहणत्यागप्रवाहाश्रयलं तद्रूपाद्विमुक्तो भवतीत्यर्थः ॥ ३६ ॥

कोशो हि विज्ञानमयस्ततोऽन्यः
कर्त्तृत्वशक्त्यन्वित एषणाङ्कः ।
तदान्तरो कर्त्तृतयाऽस्य साक्षी
यस्तद्धिया मोक्षपदार्थभाक् स्यात् ॥ ३७ ॥

कर्त्तृरूपस्य विज्ञानमयस्याप्यनात्मत्वं प्रदर्शयितुं तस्य स्वरूपं प्रदर्शयंस्तद्विवेचनफलं दर्शयति—कोश इति। ज्ञानेन्द्रियैः सहित बुद्धिर्विज्ञानमयः कोशस्ततो मनोमयात् करणरूपादन्यः, कर्त्तृत्व-शक्त्यन्वितः कर्त्तृत्वोपाधिः, एषणाङ्कः पुत्रैषणावित्तैषणालोकैषणारूपकल-ङ्कसम्पन्नः, तदान्तरस्तस्माद्विज्ञानमयादान्तरः, प्रत्यक्त्वादकर्त्तृतयाऽस्य विज्ञानमयस्य साक्षी साक्षाद् द्रष्टा यस्तद्धिया तद्विवेकेन जीवत्वनिराकर-णाद् मोक्षपदार्थभागी स्यादित्यर्थः ॥ ३७ ॥

तद्धेतुरानन्दमयोऽवसाने
कोशः प्रमोदादिकलान्वितो यः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्याप्यधिष्ठानतयाऽऽत्मतत्त्वं
यद्बोधतो नित्यसुखे प्रतिष्ठा ॥३८॥

आनन्दमयस्य भोक्तृत्वोपाधेरप्यनात्मत्वं वक्तुं तत्स्वरूपप्रदर्शनपूर्वकं तद्विवेचनफलं दर्शयति—तद्धेतुरिति । तस्य विज्ञानमयस्य हेतुरानन्दमयः कोशः । अन्तःकरणस्य सत्त्ववृत्तिर्द्विविधा—निश्चयवृत्तिः, सुखाकारवृत्तिश्चेति। तत्र निश्चयवृत्तिमदन्तःकरणं बुद्धिः कर्तृत्वोपाधिरित्युच्यते। सुखाकारवृत्तिमदन्तःकरणं भोक्तृत्वोपाधिः, अयमेव कारणपर्यन्त आनन्दमयकोशः । अवसाने कोशचतुष्टयस्यान्ते तदान्तरत्वात् प्रमोदादिकलान्वितः "तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्ष आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा" ( तै० २ । ५ । १ ) इति श्रुतिसिद्धप्रमोदादिकलाभिरवयवैः सम्पन्न इत्यर्थः । तस्याप्यानन्दमयस्याप्यधिष्ठानतया आत्मतत्त्वं तदस्ति यद्बोधतो यस्य साक्षात्कारेण नित्यसुखस्वरूपे ब्रह्मात्मनाऽवस्थानलक्षणे मोक्षे प्रतिष्ठा पर्यवसानं भवतीत्यर्थः ॥ ३८ ॥

स पञ्चकोशेभ्य उदारबुद्ध्या
पृथक्कृतः शास्त्रमतोऽद्वयात्मा ।
न तद्विकारैः पुनरेति सङ्गं
मुञ्जादिषीकेव षडूर्मिशून्यः ॥३९॥

एवं पञ्चकोशस्य विवेचनेन विविक्तात्मतत्त्वसाक्षात्कारात् पुनः कोशैस्तद्धर्मैश्च न युज्यते किन्तु ब्रह्मैव सम्पद्यते इत्याह—स इति । यः पूर्वं कोशेष्वात्मत्वाध्यासेन जीव इति प्रसिद्धः स पञ्चकोशेभ्य उदारबुद्ध्या उदारो भगवान्वासुदेवस्तद्विषयिणी बुद्धिरुदारबुद्धिः—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवद्भक्तिपरिशोधितान्तःकरणस्य निश्चयात्मिकावृत्तिः—तया मुञ्ज दिपीकेव पृथक्कृतो विविच्य पृथक्तयाऽवबुद्धः, शास्त्रमतः सर्ववेदान्त शास्त्रस्य प्रतिपाद्यत्वेनाभिमतः, अद्वयात्मा अद्वयं ब्रह्मैक्यं तदेवात्म स्वरूपं यस्य स च तथारूपेण प्रादुर्भवति। पुनस्तद्विकारैः कोशैस्तद्वि कारैश्च सङ्गम्—अहं ममेत्यभिमानलक्षणम्—नैति न प्राप्नोति तदेवाह—षडूर्मिशून्य इति। "हर्षशोकौ जन्ममृत्यू क्षुत्पिपासे" इ प्रसिद्धा मनोदेहप्राणविकारास्तद्रहितो भवतीत्यर्थः। "ब्रह्म वेद ब्रह्मै भवति" ( मु० २। ६ ) "तरति शोकमात्मवित्" (छा० ७। १। ३ इत्यादिश्रुतेरित्यर्थः ॥ ३६ ॥

स्वयंप्रकाशोऽनुभवस्वरूपो
न चानुभाव्योऽखिलवृत्तिसाक्षी।
स प्रत्यगात्मा निरुपाधिरेको
विभाति भास्वानिव निर्गुणोऽच्छः ॥३७॥

कोशेभ्यः पृथक्कृतोऽद्वयात्मैव सम्पद्यते इत्यत्रौपचारिकमात्मनो ब्रह्मात्मत्वमाशङ्क्य पराचष्टे—स्वयंप्रकाश इति। "अत्रायं पुरुषः स्वयंज्योतिर्भवति।" ( बृ० ४। ३। १४ ) इत्यादिश्रुतेरितरनिरपेक्ष प्रकाशरूपो यः प्रत्यगात्मा स एक एव विभाति, न तत्र भेदशङ्काव वकाश इत्यर्थः। ननूपाधिभेदेन भेदोऽभ्युपगम्यते एव भवता, तथा कथमेक एवेत्याशङ्क्याह—निरुपाधिरिति। वस्तुत उपाधिशून्य ए एव न तत्रौपाधिकभेदेन काचित्क्षतिरित्यर्थः। यद्वा, पञ्चकोशव्य रिक्तोऽन्यः कश्चिन्नानुभूयते कथं तद्भिन्नस्याद्वयात्मत्वमित्याशङ्क्याह स्वयंप्रकाश इति। सत्यं नानुभूयते कथं तर्हि पृथक्कृतः इत्याद्युक्त इति चेच्छृण्वित्याह—स्वयंप्रकाश इति। "विज्ञातारमरेकेन विजानीयात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यात्" ( बृ० ४ । ५ । १५ ) इति श्रुतेः तदपेक्षयानुभवितैवान्यो नास्ति। तथा च तस्यानुभूयमानत्वाभाव इष्ट एवेति भावः। तत्र हेतुः—अनुभवस्वरूपः। तथा चाऽनुभवस्वरूपत्वादेव स्वतः सिद्धस्य नानुभाव्यत्वमित्यर्थः। तदेवाह—न चाऽनुभाव्य इति। ननु तर्हि तस्य ज्ञानं मुमुक्षोः कथं स्यादित्यत आह—अखिलवृत्तिसाक्षीति। अखिलान्तःकरणवृत्तिसाक्षितयैव तस्य ज्ञानम्, न चानुभाव्यत्वेन रूपेणेत्यर्थः; "अन्यदेव तद्विदितादथोऽविदितादधि" ( के० १ । ३ ) इति श्रुतेः। नन्वविद्याद्युपाधिसत्त्वे कथमेकादृग् ज्ञानं स्यादिति तत्राह—स प्रत्यगात्मा निरुपाधिरिति। स स्वत एव स्वयंप्रकाशतया प्रसिद्धः प्रत्यगात्मा प्रतिकूलमविद्यातत्कार्य्यं वेदान्तप्रमाणजन्यवृत्त्यारूढः संस्त्यजतीति प्रत्यक् स चासावात्मा तद्रूपः सन् निरुपाधिरेव विभाति। तथा च निरुपाधिस्वरूपबोधनमेव वेदान्तैः क्रियते, न तत्राऽसम्भावना कार्य्या। सति प्रमाणे वस्तुनि च ज्ञानाविलम्बादिति भावः। ननु निरुपाधिरूपश्चेत्प्रत्यगात्मा कथं तत्र भेदप्रतीतिरित्यत आह—भास्वानिवेति। वस्तुत एक एव सन् भास्वानिव विभाति। यथोदकपात्रभेदेन भास्वान् सूर्य एक एव सन् विविधं भाति, तथाऽयं निर्गुणोऽपि अत्यन्तस्वच्छोऽपि एक एव सन्नुपाधिभेदेन विविधं भातीत्यर्थः॥ ४०॥

स एक एवास्ति चिदद्वयात्मा
स्वोपाधिभेदेन पृथग्विभाति।
यथा नभस्थो रविरप्सु भाति
ज्ञानेन तद्वत्सकलान्तरस्थः॥ ४१॥

इममेवार्थमुक्तदृष्टान्तेन विवृणोति—स एक इति॥ ४१॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स एव मायां स्ववशे च कृत्वा
सर्वज्ञ ईशोऽखिलशक्तिमान् स्यात्।
स एव बुद्ध्यादिगतो द्वितीयो
जीवोऽल्पबोधो मितशक्तियुक्तः ॥४२॥

एकस्मिन्नेव वस्तुतः सर्वोपाधिविनिर्मुक्ते परमात्मनि मायात-
द्योपाधिभेदेन जीवेश्वरविभागोऽपीत्याह—स एवेति। मितश-
युक्तः परिच्छिन्नशक्तिमानित्यर्थः। शेषमतिरोहितार्थम् ॥ ४२॥

यथा हि विम्बप्रतिविम्बभेदा-
देकं मुखं भिन्नमिवास्त्युपाधेः।
तथैक एवायमुपाधिनाऽऽत्मा
जीवेशरूपेण पृथग्विभाति ॥४३॥

एतदेव दृष्टान्तेन विवृणोति—यथेति। उपाधेर्जलदर्पणादे-
भिन्नमिव, न तु वस्तुत इत्यर्थः। सुगममन्यत् ॥ ४३ ॥

स्वयं सदानन्दघनोऽनुपाधिः
शुद्धः स्वयंज्योतिरखण्ड एकः।
वेदान्तसिद्धान्त उदार एष
भेदप्रतीतिर्भ्रमकालिकैव ॥ ४४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिद्धान्तरहस्यमाह—स्वयमिति। भ्रमकालिका भ्रान्तिकालीनेत्यर्थः। शेषं स्पष्टम् ॥ ४४ ॥

कोशेषु तादात्म्यमलं विहाय
स्वभावमायाति विशुद्धमात्मा।
स्मृत्वा यथा स्वं नृपसूनुरेति
स्वभावमेवोज्झितलुब्धभावः ॥४५॥

पूर्वोक्तराजकुमारदृष्टान्तेनोक्तमर्थं द्रढयति—कोशेष्विति। कोशेषु पूर्वोक्तान्नमयादिपु तादात्म्यरूपं मलं कालुष्यं विहाय—तेभ्यः पृथगात्मतत्त्वं विनिश्चित्य—आत्मा जीवोऽयं विशुद्धं स्वभावमायाति, मायातत्कार्यविनिर्मुक्तं स्वस्वरूपं ब्रह्म प्राप्नोतीत्यर्थः। यथा नृपसूनुः स्वमात्मानं राजपुत्रत्वाक्रान्तं स्मृत्वा स्वभावं शौर्यतेजआदिलक्षणं क्षात्रं भावं प्राप्नोति। उज्झितः परित्यक्तो लुब्धभावो येन स इत्यर्थः। तदुक्तम्—
"राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्त्तते।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः॥" ४५ ॥ इति।

आविद्यकं देहयुगं प्रतीचो
विवेकतो दृश्यमशेषमेवम्।
ब्रह्माद्वयान्नित्यनिवृत्तमच्छा-
त्पृथक्कृतं सल्लयमेति बुद्ध्या ॥४६॥

अधिष्ठानसत्तयाऽध्यस्तं सदिव भाति, तदधिष्ठानसाक्षात्कारे जाते तत्रैव विलयं याति, नित्यनिवृत्तत्वादित्याह—आविद्यकमिति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अविद्यया कल्पितं शरीरद्वयं प्रतीचस्त्वंपदार्थात्तद्विवेकतः पृथक् सल्लयं प्राप्नोति, एवं ब्रह्माद्वयात्पदार्थादच्छात्स्वत एव विशुद्धस्वरू इति दशेषं दृश्यं वियदादिप्रपञ्चजातं वस्तुतो नित्यनिवृत्तमेव बुद्ध्या त सि दार्थसाक्षात्कारेण पृथक्कृतं सल्लयं प्राप्नोति—ततोऽपृथग् भा क्वे अधिष्ठानानतिरेकादध्यस्तस्येत्यर्थः ॥ ४६ ॥

तुरीयमात्मानमसङ्गमच्छं
ब्रह्माद्वयानन्दमनादिसिद्धम् ।
बुद्ध्या न शोचेद्विनिवृत्तसर्वाऽ-
विद्यादिदोषः स्वत एव मुक्तः ॥४७

"ब्रह्मविदाप्नोति परम्" ( तै० २ । १ ) "तरति शोकमात्मवि ( छा० ७ । १ । ३ ) इत्यादिश्रुतेस्तत्त्वज्ञानेन शोकोपलक्षितसं निवृत्तिरित्याह—तुरीयमिति । तुरीयादिपदचतुष्टयेन त्वंपद निर्देशः । अद्वयानन्दमित्यनेन तत्पदलक्ष्यनिर्देशः । अनादि ब्रह्मेत्यखण्ड्यवाक्यार्थनिर्देश इति विवेकः । एवं बुद्ध्वा साक्षा पुमान् विनिवृत्तः सर्वोऽप्यविद्यातत्कार्य्यरूपो दोषो यस्य स स्वत मुक्तः सन्न शोचेन्न शोचतीति प्रयोजननिर्देश इत्यर्थः ॥ ४७ ॥

क्वाऽऽविद्यकं विश्वमशेषमारा-
न्निवृत्तमेवात्मनि तन्महिम्ना ।
क्व नित्यमुक्तोऽयमखण्डबोधोऽ-
प्यहो मृषा संसृतिचक्रमेतत् ॥४८

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"विमुक्तश्च विमुच्यते" (क० २ । ५ । १) "निवृत्तश्च निवर्त्तते" इति श्रुतिसिद्धमर्थं प्रदर्शयन्नत्याश्चर्येण संसृतिप्रत्यगात्मनोराध्यासिकसम्बन्धमप्यसम्भावितमनुवदंस्तयोर्महदन्तरमस्तीति दर्शयति—क्वेति ॥ ४८ ॥

कर्त्तृत्वभोक्तृत्वसुखित्वमुख्यं
मृषात्मबन्धं परिहृत्य बोधात् ।
विशुद्धमात्मानमशेषबन्धा-
धिष्ठानमाज्ञाय विमुच्यतेऽतः ॥४९॥

संसृतेर्नित्यनिवृत्तत्वबोधनेनात्मनो नित्यमुक्तत्वबोधनेनैव शास्त्रस्य तज्जन्यज्ञानस्य च साफल्यमित्यभिप्रेत्याह—कर्त्त्वेति ॥ ४९ ॥

यावन्न तत्त्वं श्रुतिसारमेकं
विद्यान्न तावज्जनिमृत्युहानिः ।
स तत्त्वबोधः श्रवणादिभिः स्या-
त्तान्यात्मशुद्धोऽयमुदारभक्त्या ॥५०॥

महता प्रयत्नेन तत्त्वज्ञानं सम्पादनीयम्, न तेन विना संसृतेर्निस्तार इति वदंस्तत्त्वज्ञानसाधनक्रमं वक्तुकाम उपक्रमते—यावदिति । तानि श्रवणादीनि इयमात्मनोऽन्तःकरणस्य शुद्धिरुदारस्य भगवतो वासुदेवस्य भक्त्या श्रवणकीर्त्तनादिरूपया साधनभक्त्येत्यर्थः ॥ ५० ॥

अतो मुमुक्षुर्निजधर्ममीशो-
पासात्मकं नित्यमनन्तभक्त्या ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुर्यात्ततो बुद्धिविशुद्धिमेत्य
स्वयं विवेकं भजते महात्मा ॥५१॥

इममेवार्थं विवृणोति—अत इति ॥ ५१ ॥

अतोऽन्यदार्त्तं प्रमितं तदल्पं
नेहास्ति नानेति जगत्समस्तम् ।
अनित्यमस्तीति विवेचनं स्या-
च्छ्रुतेर्मतं शुद्धधियो मुमुक्षोः ॥५२॥

विवेकमन्तरेण वैराग्यायोगादादौ विवेकस्वरूपसिद्धये ब्रह्मभि-
सर्वस्याऽनित्यत्वं दर्शयति—अत इति । भगवदाराधनलक्षणधर्मा-
शुद्धिः, ततो विवेकोत्पत्तिः श्रुतियुक्तिप्रमाणबलेन भवति । तत्र
नित्यं ततो भिन्नं सर्वमप्यनित्यम् । ब्रह्मभिन्नस्यानित्यत्वे श्रुतिप्र-
दर्शयति—अत इति । ब्रह्मणोऽन्यदविद्यातत्कार्य्यमार्त्तमभावपी-
मनित्यमिति यावत् । यत्प्रमितं परिच्छिन्नं तदल्पमल्पकालस्थायि-
दनित्यम् । इह ब्रह्मणि नाना जगदध्यस्ततया न किञ्चन कि-
नित्यं भवति इत्यादिश्रुतिभ्यो जगत्समस्तमनित्यमस्तीति विवे-
श्रुतेर्मतं श्रुतिसम्मतं शुद्धबुद्धेर्मुमुक्षोर्भगवद्भक्तिनिष्ठस्य भगवत्प्रसा-
स्यादेवेत्यर्थः ॥ ५२ ॥

युक्त्याऽप्यनित्यत्वमिह प्रपञ्चे
यत्कृत्रिमं तच्च न नित्यमस्ति ।
सस्यादिकं कर्म्म कृतं ह्यनित्यं
तथेदमित्यादिकया विविञ्च्यात् ॥५३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

युक्त्यापि ब्रह्मभिन्नस्यानित्यत्वं दर्शयति—युक्त्यापीति । इह प्रत्यक्षाद्यनुभूयमाने जगति युक्त्याऽप्यनुमानेनाप्यनित्यत्वमस्ति । ऐहिकञ्चामुष्मिकं जगदनित्यम्, कृत्रिमत्वात्; सस्यादिवदित्यादिकयेत्यर्थः । आदिपदेन विमतोऽचेतनवर्गोऽनित्यो विभक्तत्वात्, घटपटस्तम्भादिवदित्यादिका ग्राह्या ॥ ५३ ॥

यद्यद्धि दृष्टं श्रुतिगोचरं वा
स्मृतं जगद्ध दृश्यमनर्थमूलम् ।
तत्तद्धिनष्टं क्षणभङ्गुरत्वा-
दनित्यमेवेति विवेचनं स्यात् ॥५४॥

एतदेव पुनर्द्रढयति—यदिति । दृष्टं प्रत्यक्षेण, श्रुतिगोचरं शास्त्रतो विदितम्, स्मृतम् पूर्वानुभूतमनुमितञ्च यद्यदस्ति जगद् दृश्यम्, तत्तत्क्षणभङ्गुरत्वाद् विनष्टं विनष्टप्रायमनित्यमेवास्तीति विवेचनं स्यादेवेत्यर्थः ॥५४॥

नित्यं विभुं सर्वगतं सुसूक्ष्म-
माकाशवत्सर्वगतश्च नित्यः ।
अजो नित्यः शाश्वतोऽयं पुराणो
भूमा य आत्मा स च नित्य एकः ॥५५॥

यद्यपि विभक्तस्य जडस्यानित्यत्वेऽवगते तस्मिन्ननुगतप्रकाशात्मकस्य ब्रह्मणो विभक्तस्य नित्यत्वमप्यर्थादवगच्छत्येव सुधीः, तथापि स्पष्टबोधार्थं ब्रह्मणो नित्यत्वं श्रुतिस्मृतियुक्तिभिर्दर्शयति—नित्यमिति चतुर्भिश्चरणचतुष्टये श्रुतिखण्डचतुष्टयमिति । तृतीये श्रुतितुल्यसन्निवेशा स्मृतिरपीति द्रष्टव्यम् ॥ ५५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यादिवेदान्तगिराऽस्ति नित्यं
ब्रह्मैव निर्णीतमतो विपश्चित् ।
आस्तिक्यबुद्धिः श्रुतिमौलिगीर्षु
विविच्य वेत्त्यात्मपदं हि नित्यम् ॥५६

इतीति । आदिशब्देन "यस्मादर्वाक् संवत्सरोऽहोभिः परि तद्देवा ज्योतिषां ज्योतिः" ( बृ० ४ । ४ । १६ ) "सत्यं ज्ञानमनन्तं (तै० । २ । १ । १ ) इत्यादिश्रुतिग्रहः । नन्वस्तु वेदान्तप्रामाणिकं नित्यत्वम्, कथं जीवानामेतादृशविवेकोत्पत्तिः ? इत्याशङ्क्याह आस्तिक्यबुद्धिरिति । भगवद्भक्तिपरिशोधितान्तःकरणो विपश्चिद् वेद वाक्येष्वास्तिक्यबुद्धिः श्रद्धालुरात्मपदं विविच्य शास्त्रतो जानाति तथा चापाततोऽधिगतवेदार्थानुमानकुशलस्य ब्रह्मैव नित्यम्, वस्तुतोऽ खिलमचेतनमनित्यमिति विवेको भवतीति भावः ॥ ५६ ॥

सर्वस्य विश्वस्य विनिषेधतो य-
द्भूमाद्यधिष्ठानतयाऽवशिष्टम् ।
तद्ब्रह्म नि[illegible] व्यभिचारशून्य-
मनन्यदेकं व्यभिचारवस्तु ॥ ५७ ॥

श्रुत्यनुकूलयुक्त्यापि ब्रह्मणो नित्यत्वमुपपादयति—सर्वस्ये व्यभिचारवस्तु जाग्रदादिषु कार्य्यकारणवस्तुषु चान्वयव्यतिरेकवि द्वारा यथायथं व्यभिचारिषु तत्तत्साक्षितया यदन्वेति तन्नित्यं निश्चीयते, अव्यभिचारित्वात्साक्षिणः । नहि तस्यासाक्षिको व्यभि शङ्कितुमपि शक्यः, "नेति नेति" आदिवाक्यैर्मूर्त्तामूर्त्तप्रपञ्चस्य निषे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्सकलभ्रमाधिष्ठानतयाऽवशिष्टं तद् ब्रह्म नित्यमिति विवेचनं सम्भवतीत्यर्थः ॥ ५७ ॥

अस्तीति बुद्ध्याऽखिलवस्तुजालेऽ-
नुस्यूतसत्तास्फुरणात्मना यत् ।
चकास्ति सत्यं तदुदारबोधं
नित्यं विवेकेन विनिश्चिनोति ॥५८॥

युक्त्यन्तरमाह—अस्तीति । अखिलवस्तुजाले वियदादिघटान्ते यद्वस्तु अनुस्यूतं सत्तास्फुरणात्मना घटोऽस्ति, पटोऽस्ति, कुड्यमस्तीति बुद्ध्या सर्वदा चकास्ति प्रकाशते, तदुदारबोधमपरिच्छिन्नस्फुरणरूपं नित्यमस्तीति विवेकेन घटादिव्यभिचारिवस्तुभ्यः पृथक्कृत्य, अव्यभिचारि वस्तु नित्यसत्तास्फुरणरूपं विनिश्चिनोतीत्यर्थः । न चैवं श्रुत्यनुमानाभ्यां विवेके सति ब्रह्मणो ज्ञातत्वादलं विचारेणेति वाच्यम्, आपाततो नित्यं वस्तु ब्रह्मेत्यवगमेऽपि तस्याद्वितीयत्वप्रत्यगभिन्नत्वादेरनिर्धारणाज्जिज्ञासाया अनिवृत्तेरिति द्रष्टव्यम् ॥ ५८ ॥

एवं विवेके सति भोगजाला-
दाब्रह्मलोकादपि कालभक्ष्यात् ।
विरज्यतेऽनित्यसुखाद्विवेकी
तापत्रयाक्तात् सविषाद् यथाऽन्नात् ॥५९॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं विवेके सति तत्फलं वैराग्यमवश्यम्भावीत्याह—एवमिति। पूर्वोक्तरीत्या नित्यानित्यवस्तुविवेके सति भोगजालादैहिकामुष्मि विरज्यत इत्यन्वयः। तत्र हेतुः—अनित्यसुखादिति। आद्यन्त दल्पमिन्द्रियविषयसम्पर्कजन्यं सुखं यस्मिंस्तस्मात्, न केवलमनि त्वमेव दूषणं भोगेषु, किन्तु नानादुःखविद्धत्वमपीत्याह—ताप त्रादिति। आध्यात्मिकादितापत्रयसंयुक्तादित्यर्थः। अयं भाव सुखं मे निरतिशयं भूयाद्, दुःखं माऽभूदणुमात्रमपीत्यखिलप्राणिना भिनिवेशः। ते चैवमभिनिविष्टाः पुरुषकारावलम्बेन सर्वोत्साहं यत्न अपि न लभन्ते सुखमात्यन्तिकं दुःखाभावं वा, कथम्? केचित्समुद्र राजप्रीणनाद्यतिकष्टमनुभूय फलकाले स्वयं नश्यन्ति। केचित्प्राप्त अपि व्याध्याद्युपहिताः सन्तो भोगं न लभन्ते। केचित्प्राप्तभोग अपि भार्यापुत्रादिनाशाद्वा, तद्विसंवादाद्वा, अन्यैर्वा सह स्पर्द्धासूयादि सञ्चितभोग्यजातस्य क्षयभयेन, अनावृष्ट्यादिचिन्तासन्तापादि क्षणमपि सुखमलभमानाः कुष्ठाः, दरिद्राः, काणकुब्जवधिरादयो क्षुत् पिपासार्दिता बहुलमुपलभ्यन्ते। एवं दुःखबहुले संसारे सुखलेश अमनुभवन्नपि कृपणवद् विशुद्धचित्तो न तत्र सज्जते, किन्तु ततो विर एवेति। तत्र दृष्टान्तमाह—सविषाद् यथाऽन्नादिति। हालाहल सम्पृक्तमिदमन्नमिति जानन्नतिबुभुक्षुरपि यथा नात्तुमिच्छति, विवेकी पूर्वोक्तविवेकवान् तापत्रयदूषितभोगसमूहाद्विरज्यत एवेत्य नन्वस्त्वेवमैहिकं सुखमनित्यत्वादिदोषदुष्टत्वाद्विरागास्पदम्, न पारलौकिकादपि सुखाद्विरक्तिरुपपद्यते, क्षयिष्णुत्वानुमानस्य "अक्ष ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इति श्रुतिब विषयस्यानुत्थानादित्यत आह—आब्रह्मलोकादिति। "तद्यथेह चितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" (छा० इति श्रुत्या वस्तुबलावलम्बनेन प्रवृत्तयाऽनन्यपरया सापेक्षाक्षय्यफ यिकायाः प्राशस्त्यलक्षणाया विध्येकवाक्यत्वेनान्यपरायास्तस्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बाधितत्वाद्, नहिजन्यं नित्यभावरूपं दृष्टम्, अत ऐहिकभोगवदेव आब्रह्मलोकस्तम्वपर्यन्तेषु कालभक्षितेषु भोग्येषु वैराग्यमुपपद्यत इत्यर्थः । तदुक्तं—

"यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥" ५९ ॥ इति ।

वैराग्यवीर्येण शमादिसम्प-
त्ततो मुमुक्षुत्वमुदेत्यथाऽसौ ।
आचार्य्यमासाद्य परात्मनिष्ठं
वेदान्तवाक्यश्रवणादि कुर्यात् ॥६०॥

एवंविधवैराग्यादवश्यं शमादिसम्पदुत्पद्यत इत्याह—वैराग्येति । दृष्टानुश्रविकविषयवैतृष्ण्यलक्षणस्य वैराग्यस्य वीर्येण तीव्रतरबलेन शमादिसम्पदुदेतीति सम्बन्धः। अनिवृत्तरागस्य शमाद्यभावादिति वैराग्यमेव शमादिकारणमित्यर्थः । तदुक्तं भामत्याम्—"ततः शमादिसाधनसम्पत् । रागादिकषायमदिरामत्तं हि मनस्तेषु तेषु विषयेषूच्चावचमिन्द्रियाणि प्रवर्त्तयद्, विविधाश्च प्रवृत्तीः पुण्यापुण्यफला भावयत्, पुरुषमतिघोरं विविधज्वालाजटिले संसारहुतभुजि जुहोति । प्रसंख्यानाभ्यासलब्धवैराग्यपरिपाकभग्नरागादिकषायमदिरामदन्तु मनः पुरुषेणावजीयते वशीक्रियते । सोऽयमस्य वैराग्यहेतुको मनोविजयः शम इति, वशीकारसंज्ञ इति चाख्यायते। जितश्च मनस्तत्त्वविषयनियोगयोग्यतां नीयते। संयमस्य योग्यता दमः" (ब्र०भा०१।१।१) इति । शमदमादिरूपस्य साधनस्य सम्पत् प्रकर्षः, आदिशब्देन विषयतितिक्षातदुपरमतत्त्वश्रद्धाः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संगृह्यन्ते । तथा च श्रुतिः—"तस्माच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति" (बृ० ४ । ४ । २३ ) इति । ततोऽस्य संसारबन्धनान्मुमुक्षा भवती-त्याह—तत इति । शान्त्यादिविहीनस्य मुमुक्षाऽयोगात्तस्याः कारणं शमादिसम्पदित्यर्थः । विवेकादिसम्पन्नस्य मुमुक्षाया अवश्यम्भावात् तस्याश्च सत्यां ब्रह्मजिज्ञासायां नियमेन प्रवृत्तेरित्याह—अथेति । साधनचतुष्टयसम्पत्त्यनन्तरमसौ मुमुक्षुराचार्य्यं ब्रह्मनिष्ठमासाद्य शरण्यत्वेन स्वीकृत्य तन्मुखारविन्दाद् वेदान्तवाक्यश्रवणादि कुर्यादित्यर्थः ॥ ६० ॥

यथा बुभुक्षुर्ह्यविचिन्त्य भोगान्
शब्दादिकानन्नगतैकबुद्धिः ।
न तद्विलम्बं सहते तथाऽयं
वेदान्तवाक्यश्रवणे मुमुक्षुः ॥६१॥

भोग्यवैमुख्येन श्रवणादिप्रावण्यमुक्तसाधनसम्पन्नस्य मुमुक्षोः स्वभावादेव भवतीति दृष्टान्तेन दर्शयति—यथेति ॥ ६१ ॥

श्रोतव्यमन्तव्यविधेर्मुमुक्षुः
सम्यक् प्रवृत्तः श्रवणादिहेतौ ।
पश्यत्यदभ्रात्मपदं सबोधा-
दनुग्रहादेव हरेर्विपश्चित् ॥६२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवदनुग्रहादेव सर्वं सिद्ध्यतीत्याह—श्रोतव्येति । अदभ्रमनल्पं भूमाशब्दवाच्यं यदात्मपदं तद्धरेरनुग्रहादेव विपश्चिद् विवेकादिसाधनसम्पन्नो भूत्वा स च "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" (बृ० २ । ४ । ५ ) इति श्रवणादिविधिबलात्सम्यगप्रतिबन्धेन प्रवृत्तः श्रवणादिरूपं तत्त्वज्ञानसाधने बोधात्तत्त्वज्ञानात् पश्यतीति योजना ॥ ६२ ॥

ब्रह्मैक्यसाक्षात्कृतितो विमुक्तिं
जीवन्निहैवाऽश्नुत आत्मविद्यः ।
पुनर्न कृत्यं भजते कृतार्थः
स्वाराज्यलाभेन सदैव तुष्टः ॥६३॥

तत्त्वज्ञानात्कृतकृत्यत्वं दर्शयति—ब्रह्मैक्येति । य आत्मवित् स ब्रह्मैक्यसाक्षात्काराज्जीवन्नेवेहैवास्मिन् शरीरे विमुक्तिमश्नुते प्राप्नोति, सदैव स्वाराज्यलाभेन सन्तुष्टत्वादेव कृतार्थो भूत्वा पुनः कृत्यं लौकिकं वैदिकं वा कर्त्तव्यत्वेनावश्यकं न भजते, तद्धेतोरविद्याकामकर्म्मादेर्बाधादित्यर्थः ॥ ६३ ॥

कुर्वन्समाधिं यदि कर्म्मजालं
न किञ्चिदेवैष करोति धीरः ।
कर्त्तृत्वभोक्तृत्वविकल्पशून्यो
विराजते ब्रह्मसुखे प्रतीचि ॥६४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृतकृत्यत्वमेव विवृणोति—कुर्वन्निति। अन्यदृष्ट्या समाधिं यदि वा कर्म्मजालं कुर्वन्नपि स्वदृष्ट्यैव धीरो न किञ्चिदेव करो[illegible] सम्बन्धः। तत्र हेतुः—कर्त्तृत्वभोक्तृत्वविकल्पशून्य इति। [illegible] प्रत्यगभिन्ने ब्रह्मानन्दे विराजत इति ॥ ६४ ॥

बुद्धेर्विशुद्धिः सुविवेकजन्म-
वैराग्यलाभो गुरुभक्तिलाभः।
वेदान्तनिष्ठा भ्रमतो विमुक्तिः
फलं मुकुन्दाङ्घ्रिसरोजभक्तेः ॥६५॥

सत्त्वशुद्धिविवेकादिसाधनचतुष्टयगुरुभक्तिश्रवणादिपरतत्त्वज्ञान[illegible] प्राप्तिहेतुश्रीमन्मुकुन्दपादाम्भोजभक्तेरेवेत्याह—बुद्धेरिति। [illegible] पद्यम् ॥ ६५ ॥

अतोऽधिकारी हरिपादपद्मे
भक्तिं प्रकुर्वन्नचलां विरक्तः।
भोगेभ्य आप्नोति विशुद्धबो[illegible]
ततो विमुच्येत विकल्पजालात् ॥६६॥

सर्वोपायेन हरिभक्तिरेव सम्पाद्येत्याह—अत इति। हरिपाद[illegible] भक्तिं श्रवणकीर्त्तनस्मरणादिसाधनैं रतिमनिशं प्रकुर्वन्नचलामव्यभि[illegible] रिणीमधिकारी साधनचतुष्टयसम्पन्नो भूत्वा भोगेभ्यो विरक्तश्च[illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशुद्धस्य प्रत्यगभिन्नस्याखण्डवस्तुनो बोधं तत्त्वज्ञानमाप्नोति। तत-स्तत्त्वज्ञानोदयानन्तरमेव विकल्पजालात्संसारबन्धादविद्यातत्कार्यो-च्छेदेन विमुच्येत—कृतकृत्यो भूत्वा स्वमहिम्नि प्रतिष्ठितो भव-तीत्यर्थः ॥ ६६ ॥

भ्रमकलितमशेषं कर्तृभोक्तृत्वमुख्यं
त्यजति तनुयुगस्थं धर्ममात्मैक्यबुद्ध्या ।
निगमवचनभूमेर्यस्य पादाब्जभक्त्या
सुमतिरहमनन्तं तं मुकुन्दं प्रपद्ये ॥ ६७॥

इति प्रत्यक्तत्त्वचिन्तामणौ सप्तमं प्रकरणं सम्पूर्णम् ॥ ७ ॥

यत्पादाम्भोजभक्तिरेव परमपुरुषार्थभूमिस्तमेव भगवन्तं शरणं व्रजामीत्याह—भ्रमकलितमिति । यस्य निगमवचनानि तत्त्वमस्यादि-वाक्यानि तेषां पर्यवसानभूमेः पादाब्जभक्त्या सुमतिस्तत्त्वज्ञः सन् आत्मैक्यबुद्ध्या ब्रह्मात्मैक्यसाक्षात्कारेणाशेषं भ्रमकलितमात्मनाऽऽ-त्मनोस्तद्धर्माणाञ्चाध्यासेन परिकल्पितं सर्वं कर्तृत्वभोक्तृत्वमुख्यं तनुयु-गस्थं शरीरद्वयनिष्ठं धर्मं त्यजति—सर्वधर्मविनिर्मुक्तमपहतपाप्मादि-गुणकं ब्रह्मसाक्षात्कृत्य शरीरद्वयतद्धर्मविनिर्मुक्तो भवति, तम-नन्तमपरिच्छिन्नं भगवन्तं श्रीमन्मुकुन्दं प्रपद्ये—शरणं व्रजा-मीत्यर्थः ॥ ६७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क शास्त्रसिद्धान्तविचारदक्षै-
रगम्यमद्वैतपदं विशुद्धम् ।
क चास्मदादिर्मितबुद्धिरुद्ध-
स्तथापि कृष्णस्य जयी कटाक्षः ॥ १ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषिसदानन्दविर-
चितायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां स्वप्रभाभिधायां
कर्तृत्वादिधर्मनिराकरणपूर्वकस्वरूपबोधमयूखा-
भिधं सप्तमं प्रकरणं समाप्तिमगमत् ॥ ७ ॥

—–—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अथाऽष्टमं प्रकरणम्

यत्पादपद्मे रतिरेव निर्मला
तनोति विद्यां परमात्मगोचराम् ।
छित्वोत्थविद्यापटलं धुनोत्यघं
वृणोम्यहं तं वसुदेवनन्दनम् ॥ १ ॥

ये जन्मकर्म्मविकला अपि तीव्रदोषा-
स्त्यक्ता जनैरनिगमा अपि नातिदक्षाः ।
ते यं शरण्यचरणाम्बुजमाश्रिताः स्यु-
र्मुक्तास्तमादिपुरुषं शरणं व्रजामि ॥ १ ॥

अतीतानन्तरप्रकरणे अतोऽधिकारी भोगेभ्यो विरक्तो विशुद्धबोधं प्राप्नोतीत्युक्तम् । तत्रात्मतत्त्वज्ञानसाधनश्रवणादौ किं चतुर्णां वर्णानां मध्ये यः कश्चिद्विरक्तः सोऽधिकारी, किं वा त्रैवर्णिकानामेव यो विरक्तः सोऽधिकारी इत्येतद्विचारप्रधानप्रकरणमारभमाणः स्वेष्टदेवतानुसन्धानलक्षणं मङ्गलमाचरन्नर्थादविद्यादिनिवृत्त्युपलक्षितभगवत्स्वरूपप्राप्तिलक्षणं फलं प्रार्थयते—यत्पादेति । अहं तं भगवन्तं वसुदेवनन्दनं वृणोमि—सर्वपुमर्थास्पदत्वेन प्रसिद्धं फलस्वरूपं प्राप्यत्वेन सतीव पतिं स्वीकरोमि, स च स्वामी मामपि दास्ये स्वीकरोत्विति फलितार्थः । ननु ब्रह्मैक्यसाक्षात्काररूपां ब्रह्मविद्यां परमपुरुषार्थसाधनं विहाय किमर्थं वसुदेवनन्दनं वृणोषीत्याशङ्क्याह—यत्पादेत्यर्द्धेन । तथा



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चेन्धनकरणकपाकफले ज्वालानामप्यवर्जनीयत्ववद्भगवत्स्वीकारे अर्थात्
ऽवश्यम्भाविनी, न तदर्थं पृथक् प्रयासः कर्त्तव्य इति भावः। तत्र
ज्ञानावरणोच्छेदाय पृथक् प्रयासः स्यादेवेति। नेत्याह—छिणोति
अविद्यापटलमनाद्यज्ञानप्रयुक्तावरणं तत्त्वज्ञानोत्पादनेन यच्चरणार्
विषयिणी रतिरनुराग एवाव्यभिचारित्वेन फलाभिसन्धिरहितवा
स्वच्छा जाता, सतीति शेषः, छिणोति समूलतः उच्छिनत्तीत्यर्थः।

"तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥" (गी० १०।

इति भगवद्वचनात्। ननु कथमन्तःकरणशुद्धिं विना तत्
नोत्पत्तिः "कषाये कर्म्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इति
कर्म्माद्यनुष्ठानमप्यावश्यकम्, कथं तद्रतिरेव तत्र हेतुः? इत्याशङ्क्या
धुनोतीति। तथा च समूलपापोच्छेत्री तद्रतिरेव, कर्मापि तद्
रूपमेव तथा, न तु स्वतन्त्रमित्यर्थः।

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥" (गी० १८।

इति भगवद्वचनात्, भगवद्रतिरेव सकलपापं नाशयित्वा तत्त्व
मुत्पाद्याऽविद्यापटलमुच्छिनत्तीति निर्गलितोऽर्थः। तथा च यथा
ञ्चिद् भगवद्गुणानुवादश्रवणकीर्त्तनादिना रत्यङ्कुरोत्पादनं कर्त
ततः सर्वपुरुषार्थसिद्धिरिति भावः॥ १॥

स्वाज्ञानतो जातमपारदुस्तरं
भवाम्बुधिं स्वात्मपदाववोधतः।
तरन्ति यत्पादरतिस्पृहालवा-
स्तमद्भुतोदारगतिं हरिं भजे॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उक्तमेवार्थं पुनर्द्रढयति—स्वाज्ञानत इति । तथा चात्मतत्त्वावबोधनिवर्त्याज्ञानतत्कार्य्यसंसारसिन्धुतरणाय भगवद्भक्तिरेव सर्वप्रयत्नेन सम्पाद्या, तयैव सर्वपुमर्थसिद्धिरनायासेन भविष्यतीति भाव: ॥ २ ॥

प्रत्यक् परब्रह्मसुखैक्यबोधतो
विनश्यतीयं घनसंस्तृतिर्नृणाम् ।
सकारणा तत्प्रलयात् स्वतो भवे-
द्विमुक्तिरद्वैतपदव्यवस्थितिः ॥३॥

प्रकरणप्रतिपाद्यमर्थं श्रोतृबुद्ध्यारोहाय सफलमादौ सङ्क्षिप्य दर्शयति—प्रत्यगिति । प्रत्यगभिन्नपरब्रह्मसुखैक्यसाक्षात्काराद् घना जन्ममृत्युपरम्परैव निविडा संसृति: सकारणा मूलाविद्याकामकर्मादिकारणसहिता विनश्यति बाध्यते । तत्प्रलयात् तस्या: सकारणाया: संसृतेर्बाधादद्वैतपदावस्थानलक्षणा विमुक्ति: स्वतो नृणां तत्त्वविदां भवेदिति योजना ॥ ३ ॥

न चात्मविज्ञानमृतेऽन्य इष्यते
पन्था विमुक्तेरिति वेदघोषणम् ।
विद्यातिरिक्तं न च साधनान्तरम्
समर्थमज्ञानविलापने स्मृतम् ॥४॥

ननु प्रत्यग्ब्रह्मैक्यज्ञानेनैव मोक्ष इति कथमुच्यते ? यावता कर्म्मणामपि तत्प्राप्तिहेतुत्वं स्मर्यते, "तत्प्राप्तिहेतुर्विज्ञानं कर्म्म चोक्तं महामुने!"

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्याशङ्क्य "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽय" (श्वे० ३ । ८) इति श्रुतेर्नित्यसिद्धब्रह्मावाप्तौ कण्ठगतविस्मृत मौक्तिकावाप्तितुल्यायां ज्ञानातिरिक्तसाधनत्वासम्भवाच्च ब्रह्म परम्परया कर्म्मापेक्षामात्रपरा तादृशी स्मृतिरित्याशयेन समाधत्ते न चेति ॥ ४ ॥

यज्ञादिकं चित्तविशुद्धिसाधनं
ततो विवेकादिजनिर्विशुद्धितः ।
ततो मुमुक्षुर्गुरुमाश्रितः श्रुति-
शिरोगिरां स्याच्छ्रवणैकतत्परः ॥५॥

क्व तर्हि कर्म्मणामुपयोग इत्याकाङ्क्षायां "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" (बृ० ४ । ४ । २२) इति श्रुतेर्विद्यासम्पादनद्वारा ब्रह्मावाप्त्युपायभूतायां विविदिषायामुपयोग इत्याशयेनाह—यज्ञादिकमिति ॥ ५ ॥

प्रत्यग्बुभुत्साजननेऽस्ति कर्म्मणां
यज्ञादिकानामुपयोग ईरितः ।
ततः कृतार्थानि विशुद्धचेतसो
यान्त्यस्तमुत्पाद्य रतिं चिदद्वये ॥६॥

"आरुरुक्षोर्मुनेर्योगं कर्म्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥" (गी० ६ । ३)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति भगवद्वाक्यानुसारेण चेतसः शुद्धौ विविदिषादिरूपप्रत्यक्प्रावण्योदयपर्यन्तं कर्मानुष्ठानम्, ततः संन्यास इति कर्मतत्संन्यासाभ्यां विद्यानिष्पत्त्यभ्युपगमात् कर्म्मणां विद्यार्थत्वपक्षे द्वारभूतविविदिषापर्यन्तमेव कर्म्मानुष्ठानमित्याशयेनाह—प्रत्यग्बुभुत्सेति । प्रत्यग्बुभुत्सा प्रत्यगभिन्नब्रह्मविषयिणी जिज्ञासा तज्जनने कर्म्मणामुपयोगः, ततश्चित्तशुद्धिद्वारा विविदिषोत्पत्त्यनन्तरं विशुद्धं यच्चेतस्तस्य विशुद्धचेतसः । यद्वा, विशुद्धं चेतो यस्य पुंसस्तस्य चिदद्वये प्रत्यगभिन्ने ब्रह्मणि रतिं तत्प्रावण्यलक्षणामुत्पाद्य कर्म्माणि कृतार्थानि सन्ति अस्तं यान्ति, ततः परं कर्म्मभिः कृत्यं नास्तीत्यर्थः । तदुक्तं नैष्कर्म्यसिद्धौ—

> "प्रत्यक्प्रवणतां बुद्धेः कर्माण्यापाद्य शुद्धितः ।
> कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥" (नै० १ । ४८)

इति ॥ ६ ॥

> प्रत्यग्बुभुत्साप्रतिबन्धकं मलं
> विनाश्य तानि श्रुतिचोदितान्यपि ।
> त्यक्त्वा मुमुक्षुः परमात्मजीवयो-
> रैक्यं बुभुत्सुः श्रुतितत्परो भवेत् ॥७॥

"यस्यैते चत्वारिंशत् संस्काराः" ( गौ० सू० ८ । २२ ) इति स्मृतिमूलकर्म्मणामात्मयोग्यतापादकमलापकर्षणगुणाधानलक्षणसंस्कारार्थत्वपक्षमप्यादायाह—प्रत्यग्बुभुत्सेति । स्थितानि यानि कर्म्माणीति शेषः । तानि त्यक्त्वेति सम्बन्धः ॥ ७ ॥

> नन्वत्र संन्यासपदेऽधिकारिणो
> ये ब्राह्मणाः स्यादुपयोग ईदृशः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्कर्म्मणां नैव तु राजवैश्ययो-
स्तत्कर्म्ममोक्षे करणं स्वयं भवेत् ॥

स्वकर्म्मणैवं जनकादयः पुरा
संसिद्धिमाप्ता इति साधवो जगुः
मोक्षोपयोगस्तदनुष्ठितस्य वै
साक्षात्तथा च श्रुतिकोप आपतेत्

नन्वेवमपि कथं "कर्म्मणैव हि संसिद्धिमास्थिता जनका (गी० ३। २०) इत्यादिभगवद्वाक्यनिर्वाहः? न च तस्य त्रै कर्म्मानुष्ठानपरत्वम्, विविदिषावाक्ये ब्राह्मणग्रहणेन ब्राह्मण विद्यार्थकर्म्मण्यधिकारप्रतीतेः। अतो जनकाद्यनुष्ठितकर्मणां देव मुक्त्युपयोगो वक्तव्यः। तथा च प्रत्यग्ब्रह्मैक्यज्ञानेनैव इति प्रतिज्ञाव्याहृतिः, "नान्यः पन्था विद्यतेऽयनाय" (श्वे ८) इति श्रुतिविरोधश्चेति शङ्कते—नन्विति द्वाभ्याम् ॥ ८

तमेतमात्मानमिति श्रुतौ किलो-
पलक्षिता ब्राह्मणशब्दतो द्विजाः।
यतो विशिष्टाधिकृतत्वमिष्यते
त्रैवर्णिकानां परमात्मबोधने ॥१०

विद्येप्सवो येऽधिकृता द्विजातय-
स्तद्बोधको ब्राह्मणशब्द आगमे।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यज्ञादिकं तत्कृतमात्मबोधने
हेतुर्बुभुत्साजननेन नाऽन्यथा ॥ ११॥

विविदिषावाक्ये ब्राह्मणग्रहणस्य त्रैवर्णिकोपलक्षणत्वमेव तदुक्तं वार्त्तिककारैः—

"ब्राह्मणग्रहणं चात्र द्विजानामुपलक्षणम् ।
अविशिष्टाधिकारित्वात् सर्वेषामात्मबोधने ॥"

(वा० ४ । ४ । १०२६) इति । नहि विद्याकामो यज्ञादीननुतिष्ठेदिति । विपरिणमिते विद्याकामाधिकारविधौ ब्राह्मणपदस्याधिकारिविशेषसमर्पकत्वं युज्यते । अन्यत्र त्रैवर्णिकाधिकारिकत्वेन क्लृप्तानामिहापि त्रैवर्णिकाधिकारात्मविद्यार्थत्वेन विधीयमानानां त्रैवर्णिकाधिकारत्वस्य युक्ततया विधिसंस्पर्शहीनब्राह्मणपदसमभिव्याहारमात्रादधिकारसङ्कोचासम्भवेन ब्राह्मणपदस्य यथाप्राप्तात्मविद्याधिकारिमात्रोपलक्षणौचित्यमित्याशयेन संमाधत्ते—तमेतमित्यादिद्वाभ्याम् । तत्कृतं तैस्त्रैवर्णिकैरनुष्ठितं यज्ञादिकर्म्म बुभुत्साजननेन आत्मबोधने हेतुः कारणं न, अन्यथा साक्षात्कर्म्मणां मोक्षहेतुत्वानभ्युपगमाद्; न प्रतिज्ञाव्याहतिः, न वा श्रुतिविरोध इति तात्पर्यार्थः । सुगममन्यत् ॥ १०—११ ॥

नन्वस्तु शूद्रस्य तदात्मवेदनेऽ-
धिकारहेतुस्तदनुष्ठितिर्नहि ।
वेदार्थबोधान्वित एव वैदिके
ज्ञाने च कर्म्मण्यधिकारमश्नुते ॥१२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु श्रुतौ ब्राह्मणपदस्य विद्याधिकारिमात्रोपलक्षणत्वे शू विद्यायामर्थित्वादिसम्भवेन तस्यापि विद्यार्थकर्म्माधिकारप्र शङ्कते—नन्विति शूद्रस्यापि तदनुष्ठितिस्तेषां यज्ञादीनां कर्म्मणा मात्मवेदने तत्त्वज्ञानेऽधिकारहेतुरस्त्वित्यर्थः। परिहरति—न तत्र हेतुः—वेदार्थबोधान्वित एव—अध्ययनविधिगृहीतस्वाध्या तदर्थज्ञानवानेव—वैदिके कर्म्मणि ज्ञाने चाधिकारमश्नुते, इत्यर्थः ॥ १२ ॥

शारीरके स्पष्टमुदीरितं तथा
स्मृतौ न शूद्राय मतिं दिशे
तेनात्मविद्यामहिमा न बुध्यते
तदर्थिता नास्य न चाधिकारिता।

शूद्रस्य वेदाध्ययनेऽनधिकारो हि श्रुतिस्मृतिन्यायप्रसिद्ध शारीरके इति। अपशूद्राधिकरणेऽध्ययनवेदवाक्यश्रवणादि शूद्रस्य विद्याधिकारनिषेधात् "न शूद्राय मतिं दद्यात्" ( म ८० ) इति स्मृतेः आपाततोऽपि तस्य विद्यामहिमावगत्य स्भवेन तदर्थित्वानुपपत्तेश्च तस्य विद्यायामनधिकारादिति यर्थः ॥ १३ ॥

विद्यार्थकर्म्मण्यधिकार इष्यते
शूद्रस्य कैश्चित् करुणार्द्रबुद्धिभि
असम्भवेऽप्यध्ययनादिकर्म्मणः
श्रीविष्णुनामस्मरणादिसम्भवात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शूद्रस्याप्यस्त्येव विद्यार्थकर्म्माधिकारः, तस्य वेदानुवचनाग्निहोत्राद्यभावेऽपि कण्ठोक्तसर्ववर्णाधिकारिकाणि श्रीविष्णोर्भगवतो वासुदेवस्य नामजपकीर्त्तनस्मरणादीनि पापक्षयहेतुतयोपात्तानि । तथा पापक्षयहेतुतपोदानपाकयज्ञादीनामपि सम्भवात्तस्यास्त्येवाधिकार इत्यभिप्रेत्याह—विद्यार्थेति ॥ १४ ॥

यन्नामसङ्कीर्त्तनमेव कल्मषं
निहन्ति शुद्धिं वितनोति चेतसः ।
अनन्यभावेन तदङ्घ्रिभावनं
मनुष्यमात्रस्य विमुक्तिकारणम् ॥१५॥

न केवलं पापक्षयमात्रं फलं भगवन्नामकीर्त्तनादेः, अपि तु मुक्तिहेतुत्वमपि प्रसिद्धमित्याह—यन्नामेति । यस्य भगवतो नामसङ्कीर्त्तनमेव कल्मषमनेकभवसञ्चितं तत्त्वज्ञानप्रतिबन्धकं पापं निहन्ति नितरां समुन्मूलयति । तदुक्तं विष्णुपुराणे—

"यन्नामकीर्त्तनं भक्त्या विलापनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ॥ १ ॥
अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्वृकैरिव ॥ २ ॥
ज्ञानतोऽज्ञानतो वापि वासुदेवस्य कीर्त्तनात् ।
तत्सर्वं विलयं याति तोयस्थं लवणं यथा ॥ ३ ॥" इति ।

अत एव चेतसो विशुद्धिं तत्त्वसाक्षात्कारैकयोग्यतां विशेषेण तनोति विस्तारयति । तदुक्तं वैष्णवे—

"ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम् ॥"(वि० पु० ६।२।१७) इति ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतोऽनन्यभावेन भगवन्तं विहाय नान्यस्मिन् विषये भावित वर्ण्यं तेन यत् तदङ्घ्रिभावनं चरणारविन्दध्यानं तद् मनुष्य विमुक्तिकारणमिति योजना,

"मां हि पार्थ ! व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।।" (गी० ९

इति भगवद्वचनात् ।। १५ ।।

तथैव पापक्षयहेतुरस्य तत्
स्वकर्म्म शुश्रूषणमग्रजन्मनाम् ।
स पाकयज्ञादिभिरेव शुद्ध्यति
श्रीकृष्णपादार्पितधीस्तदङ्घ्रिजः ।

भगवदाज्ञापालनलक्षणधर्म्मोऽपि शूद्रस्याधिकारनिमित्तमस्तीति तथैवेति । श्रीकृष्णपदारविन्दे समर्पिता धीर्निश्चयात्मिका वृत्तिर्येन स च तदङ्घ्रिजस्तस्य भगवतः कृष्णस्याङ्घ्रेः सकाशादु यस्य स च शूद्रोऽपि शुद्ध्यति मुक्तिपर्यन्तं शुद्धिं प्राप्नोतीत्यर्थः ।।

न चार्थितादेरपि नास्य सम्भवो
यतः पुराणश्रवणेऽधिकार्यसौ ।
कृत्वाग्रतो ब्राह्मणमन्यवर्णिनः
संश्रावयेदित्यनुशासनात् स्मृतेः ।।
अतः पुराणादधिगम्यतेऽमुना
ब्रह्मैक्यविद्यामहिमास्त्यतोऽर्थिता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मतिं न दद्यादिति वैदिकक्रिया-
निषेधमात्रैकपरं वचोऽस्तु तत् ॥१८॥

अर्थित्वादेरपि तस्य सम्भवोऽस्तीत्याह—न चेति द्वाभ्याम् । न तावच्छूद्रस्यार्थित्वासम्भवः । "श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः" इत्यादौ पुराणेतिहासश्रवणे चातुर्वर्ण्याधिकारस्मरणेन पुराणाद्यधिगत-विद्यामाहात्म्यस्य तस्यापि तदर्थित्वसम्भवात्, "न शूद्राय मतिं दद्यात्" ( मनु० ४ । ८० ) इति स्मृतेश्च तदनुष्ठानानुपयोग्यग्निहोत्रादिकर्म्मज्ञान-निषेधपरत्वादिति द्वयोस्तात्पर्यार्थः ॥ १७—१८ ॥

तस्यान्यथा स्वोचितधर्मबोधनो-
पायाद्यभावे कथमेष धर्म्मभाक् ।
शूद्रश्चतुर्थोऽस्ति स एक जातिमा-
नित्यादिगीर्निष्फलतामियात्स्मृतेः॥१९॥
साधारणो धर्म्म उदारसेवितोऽ-
क्रोधो दया शौचमहिंसनं दमः ।
अमानितेत्यादिरशुद्धिनाशकृत्
सर्वस्य तस्मादधिकार्य्यसाविह ॥२०॥

विपक्षे बाधकमाह—तस्यान्यथेति । अन्यथा तस्य शूद्रस्य सर्वथा अनधिकारित्वे स्ववर्णाश्रमधर्म्मस्याप्यवगत्युपायासम्भवेन "शूद्रश्चतुर्थो वर्णः" ( गौ० सू० १० । ४९) "एकजातिः" ( गौ० सू० १० । ५० ) "तस्यापि सत्यमक्रोधः शौचम्" (गौ० सू० १० । ५१) "आचमनार्थे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाणिपादप्रक्षालनमेवैके" (गौ० सू० १०।५२) "श्राद्धकर्म" (गौ० १०।५३) "भृत्यभरणम्" (गौ० सू० १०।५४) "स्वदारतुष्टिः" (गौ० १०।५५) "परिचर्या चोत्तरेषाम्" (गौ० सू० १०।५६) इत्यादिवङ्भाजकवचनानामननुष्ठानलक्षणाप्रामाण्यापत्तेरिति साधारणसाधर्म्माधिकारित्वं तस्याङ्गीकर्त्तव्यमिति द्वयोस्तात्पर्यार्थः ॥ १९-२०॥

शारीरकन्यायवचस्तु तस्य च
वेदोक्तविद्याप्रतिषेधतत्परम् ।
विद्यापुराणश्रवणेन सम्भवे-
च्छूद्रस्य नातोऽस्ति विकल्पसम्भवः

अपशूद्राधिकरणविरोधोऽपि नास्तीत्याह—शारीरकेति । करणस्य "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति ।" (मनु० १० इति स्मृतेर्गुरूपसदनाख्यविद्याङ्गोपनयनसंस्कारविधुरस्य शूद्रस्य विद्यासु निर्गुणविद्यासाधनवेदान्तश्रवणादिषु चाधिकारनिषेध निर्गुणविद्यायां शूद्रस्यापि विषयसौन्दर्य्यप्रयुक्तस्यार्थित्वस्य नि शक्यत्वात् । न च तस्य वेदान्तश्रवणासम्भवे कथं विद्योत्पत्ति शङ्क्यम् , तस्य वेदान्तश्रवणाधिकाराभावेऽपि भगवत्पादैः "श्रावये वर्णान्, इति चेतिहासपुराणाधिगमे चातुर्वर्ण्याधिकारस्मरणात् । पूर्वस्तु नाधिकारः शूद्राणामिति स्थितम् ।" (ब्र० सू० भा० १।३ इत्यपशूद्राधिकरणोपसंहारभाष्ये ब्रह्मात्मैक्यपरपुराणादिश्रवणे साधनेऽधिकारस्य दर्शितत्वादिति तात्पर्यार्थः ॥ २१ ॥

तस्यात्मविद्योदययोग्य उत्तमो
द्विजातिदेहो ह्यभिजायतेऽथवा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दैवं शरीरं तत एष मुक्तिभाक्

शूद्रोऽप्यतो ब्रह्मधियोऽधिकार्य्यसौ ॥२२॥

ननु तथापि तमःप्रधानशूद्रस्य कथं ब्रह्मविद्योत्पत्तियोग्यतेत्याशङ्क्याह—तस्येति । शूद्रस्य वेदान्तश्रवणयोग्यत्रैवर्णिकशरीरनिष्पादनद्वारा विद्योत्पत्तिः, अथवा विद्योत्पत्तियोग्यविमलदेवशरीरनिष्पादनद्वारा मुक्त्यर्थत्वं भविष्यति, त्रैवर्णिकानां क्रममुक्तिफलकसगुणविद्यानुष्ठानवदिति तात्पर्य्यार्थः ॥ २२ ॥

तस्माद् बुभुत्सावचनेऽधिकारको-

पलक्षणं ब्राह्मणशब्द इष्यते ।

यज्ञादिधीशुद्धिकरं भवेत्कृतं

वर्णैः समस्तैरिति गम्यते श्रुतेः ॥२३॥

तस्माद्विविदिषावाक्ये ब्राह्मणपदस्य यथाप्राप्तविद्याधिकारिमात्रोपलक्षणत्वेन शूद्रस्यापि विद्यार्थकर्म्माधिकारः सिद्ध्यत्येवेत्युपसंहरति—तस्मादिति ॥ २३ ॥

नन्वस्तु यज्ञादिविशुद्धिकारणं

संन्यास एषां क्व तदोपयुज्यते ।

स ब्राह्मणस्यैव विधीयते श्रुतौ

न क्षत्रियादेरिति तत्र कथ्यताम्॥२४॥

नन्वस्तु कर्म्मणां चित्तशुद्धिद्वारा विद्योपयोगः, संन्यासस्य किंद्वारा तदुपयोग इति पृच्छति—नन्विति ॥ २४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विक्षेपनाशाय विचार आत्मनः
संन्यास इष्टः श्रुतिभिर्विपश्चिताम्।
अनन्यभावेन विचार इष्यते
न सोऽस्ति संन्यासमृते यतोऽञ्जसा॥

दृष्टद्वारे सम्भवत्यदृष्टकल्पनायोगादित्यभिप्रेत्योत्तरमाह—विक्षेपनाशायेति। श्रुतिभिर्वेदान्तवाक्यैरात्मनो विचारे क्रियमाणे विक्षेपनाशाय संन्यासो विपश्चितामिष्ट इत्यन्वयः। तत्र हेतुमाह—अनन्यभावेनेति॥ २५॥

अन्याश्रमे ब्रह्मणि संस्थितिर्दृढा
स्वकर्मसक्तस्य न सम्भवेत्ततः।
संन्यास आत्मैक्यविचारणे धियो
विक्षेपहान्या ह्युपयुज्यते मुनेः॥२६॥

"ब्रह्मसंस्थोऽमृतत्वमेति" (छा० २। २३। २) इति श्रुतेः यस्य ब्रह्मणि संस्था समाप्तिरनन्यपरत्वरूपं तन्निष्ठता तस्य मुख्याधिकारः,

"गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा।
न विचारपरश्चेतो यस्याऽसौ मृत उच्यते॥"

"आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया" इत्यादौ सर्वदा विधानात्। सा च ब्रह्मणि संस्था विना संन्यासमाश्रमान्तरे न सम्भवतीत्याह—अन्याश्रम इति॥ २६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विक्षेपहानिर्यदि सम्भवेद्धियो
वेदान्तवाचां प्रविचारणे तदा ।
अन्याश्रमेऽप्ययस्तु तदात्मबोधनं
प्रागर्जितैः पुण्यचयैर्विपश्चिताम् ॥२७॥

यदि त्वनलसस्य धीमतः पुरुषधौरेयस्याश्रमान्तरस्थस्यापि कर्म्मच्छिद्रेषु श्रवणादि सम्पद्यते । तदा पूर्वजन्मकृतभगवदाराधनपुण्यातिशयेन भवत्येवात्मबोध इत्यभिप्रेत्याह—विक्षेपहानिरिति ॥ २७ ॥

यैरीश्वरोपासनया विशुद्धया
बुद्धेर्विशुद्धिर्बहुजन्मसञ्चिता ।
लब्धास्ति तैरैक्यपदावबोधनं
सम्प्राप्यतेऽप्याश्रमधर्म्ममन्तरा ॥२८॥

भगवदुपासनापराणां न किञ्चिदपि दुर्लभमित्याशयेनाह—यैरिति । आश्रमधर्म्ममन्तरेति । वेदानुवचनादिरूपब्रह्मचर्य्याद्याश्रमचतुष्टयधर्म्मानुष्ठानमन्तरेणापीत्यर्थः,

"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥" (गी० ७ । १४)

इति भगवद्वचनात् । शेषमतिरोहितार्थम् ॥ २८ ॥

अनेकपुण्यार्जितभक्तिरैश्वरी
यदा परोदेति दृढा विपश्चिताम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदैव तीर्णा भ्रमसंसृतिर्भवेत्
सकारणा तत्र न संशयोऽण्वपि ॥

भगवद्भक्तिप्राप्तिपर्यन्तमेव सर्वसाधनप्रयासः, तल्लाभे तु कृत
वेत्याह—अनेकपुण्यार्जितभक्तिरिति ॥ २९ ॥

श्रुतौ नृपादेर्विहितो न यद्यपि
त्यागोऽध्वरादेश्च तथापि सोऽखिल
विक्षेपहानाय परिग्रहं त्यजेद्
विचारविक्षेपकमात्मधीपरः ॥३०॥

संन्यासस्य दृष्टफलकत्वपक्षे क्षत्रियादेः संन्यासाभावे
विद्योत्पत्तिरित्युक्तम्, तत्राह—श्रुताविति ॥ ३० ॥

गृहाश्रमे यैर्जनकादिभिः श्रुते-
र्विचारजन्यात्मधियाऽत्मनि स्थिति
र्लब्धा पुरा जन्मकृतादपीह तैः
संन्यासतः सिद्धिरितीष्यतेऽपरैः ॥

विद्योत्पत्तिप्रतिबन्धकदुरितानामानन्त्यात् किञ्चिद् यज्ञादि
निवर्त्यं किञ्चित्संन्यासापूर्वनिवर्त्यमिति कर्मवच्चित्तशुद्ध
संन्यासस्यापि विद्योपयोग इति पक्षेऽपि समाधानमाह—
इति । यैर्जनकादिभिर्गृहे निवसद्भिरेव वेदान्तविचारजन्या
स्थितिर्लब्धा तैरपि पूर्वजन्मकृतात् संन्यासादिह जन्मनि सिद्धि
रिष्यतेऽभ्युपगम्यतेऽपरैरिति योजना ॥ ३१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतौ मुमुक्षोरपि साधनेष्वयं
संन्यास इष्टः सुकृतैकराशिदः।
स सूत्रभाष्यादिषु तत्त्ववीक्षणो-
पयोगिभावेन विचारितो ह्यतः ॥३२॥

"शान्तो दान्त उपरतः" ( बृ० ४।४।२३ ) इत्यादिश्रुतावुपरत-शब्दगृहीततया संन्यासस्य साधनचतुष्टयान्तर्गतत्वादप्यावश्यकमित्याह—श्रुताविति। "सहकार्य्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्" ( ब्र० सू० ३।४।४७ ) इति सूत्रभाष्ये तद्वतो विद्यावतः संन्यासिनः बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं विधीयते "तस्माद् ब्राह्मणः पाण्डित्यम्" ( बृ० ३।५।१ ) इत्यादिश्रुतौ ततः प्राग् "भिक्षाचर्य्यं चरन्ति" ( बृ० ३।५।१ ) इति संन्यासाधिकारादिति प्रतिपादनात्,

"त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता॥"

इति वार्त्तिकोक्तेश्च संन्यासापूर्वस्य विद्यासाधनवेदान्तश्रवणाद्यधिकारिविशेषणत्वमिति तस्य विद्योपयोगः सिद्ध इति तात्पर्य्यार्थः॥ ३२॥

ब्रह्मैक्यबोधोदयमुत्तमं फलं
सदा विचारेण भवेच्छ्रुतेर्गिराम्।
स यत्र पुंसः समुदेत्यविघ्नतो
वसेन्मुनिस्तत्र निजाश्रमे शुभे ॥३३॥

येषान्तु गृहस्थादीनां निर्विक्षेपविचारसिद्धिः, तत्फलञ्च तत्त्वज्ञानसिद्धिरस्ति, न तेषां संन्यासादिना कृत्यमित्याह—ब्रह्मैक्येति। तदुक्तम्—



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"जन्मान्तरेषु यदि साधनजातमासीत्
संन्यासपूर्वकमिदं श्रवणादिकञ्च ।
विद्यामवाप्स्यति जनः सकलोऽपि यत्र
तत्राश्रमादिषु वसन्न निवारयामः ॥" इति ॥ ३३

वेदान्तवाक्यश्रवणेन धीमतां
ज्ञानं चिदात्मन्यपरोक्षमुद्भवेत् ।
प्रमाणराजश्रुतिमौलिजं कथं
भवेत्परोक्षं ह्यपरोक्षवस्तुनि ॥३४

एवमधिकारमुपपाद्य वेदान्तश्रवणजन्यज्ञानस्यापरोक्ष
दर्यति—वेदान्तेति । तथा च श्रवणमेवापरोक्षज्ञानसा
भावः ॥ ३४ ॥

सम्यक्श्रुतार्थं मननेन युक्तिभिः
सम्भाव्य बुद्ध्याऽचलयाऽनुचिन्त
त्रिषु प्रधानं श्रवणं विधीयते
तदङ्गभावेन समाधिचिन्तने ॥३

किमर्थं तर्हि मननध्यानयोस्तदङ्गत्वेन विधानमित्यपेक्षा
सम्यगिति । तथा च प्राधान्यं श्रवणस्यैव मननिदि
स्तदङ्गत्वमित्यसकृदावेदितत्वादिति भावः ॥ ३५ ॥

सन्देहहान्या विपरीतभावना-
नाशेन तत्राऽस्त्युपयोग एतयोः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साक्षात्कृतिस्तु प्रतिबन्धनाशतो
भवेच्चिदात्मैक्यपदस्य धीमताम् ॥३६॥

प्रमेयगतासम्भावनाविपरीतभावनानिरासेनैवैतयोरुपकारकत्वमित्याह-सन्देहहान्येति । ननु श्रवणादिप्रकुर्वतामपि केषाञ्चित्साक्षात्कारो न दृश्यते, तत्र किं कारणम् ? इत्याशङ्क्य प्रतिबन्ध एव कारणम्, तन्नाशादनायासेनैव तत्त्वसाक्षात्कारसिद्धिरित्याशयेनाह—साक्षात्कृतिस्त्विति । तुशब्देन यावद् भूतभाविवर्त्तमानान्यतमप्रतिबन्धः तावत् तत्साक्षात्कारो न जायत इति द्योत्यते ॥ ३६ ॥

जातेऽपरोक्षे परमात्मगोचरे
ज्ञानेऽप्यसम्भावनतो विपर्ययात् ।
परोक्षकल्पं फलतस्तदीक्ष्यते
ध्यानं नयैश्चिन्तनमिष्यते ततः ॥३७॥

ननु कथं तर्हि श्रवणेनैवापरोक्षज्ञानं जायते इत्युक्तम् ? तत्राह—जातेऽपरोक्षे इति । अपरोक्षे इति च्छेदः । श्रवणात् परमात्मगोचरेऽपरोक्षे ज्ञाने जातेऽपि प्रमेयगतासम्भावनातो देहाद्यात्मत्वजगत्सत्यत्वबुद्धिरूपविपर्ययाच्च तज्ज्ञानं फलतः परोक्षकल्पमीक्ष्यते । तस्मात्तयोरसम्भावनाविपर्य्ययोर्निरासाय ध्यानं निदिध्यासनं नयैः श्रुत्यनुकूलतर्कैश्चिन्तनं मननमिष्यत इत्यर्थः ॥ ३७ ॥

ताभ्यां निरस्ते विशये विपर्य्यये
स्वयं विभात्यात्मपदं श्रुतीरितम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यावन्न साक्षात्कृतिरात्मनो दृढा
तावत्तदावृत्तिरुदारसम्मता ॥३८॥

तयोः फलं दर्शयति—ताभ्यामिति । मननध्यानाभ्यां विशये
विपर्य्यये देहाद्यात्मत्वजगत्सत्यत्वधीलक्षणे निरस्ते सति श्रुतीरितम् "तत्त्व
मसि" (छा० ६ । ८ । ७) आदिवाक्यैरवबोधितमात्मपदं स्वयम
विभाति । यद्वा, ज्ञातताख्यातिशयमन्तरेण प्रकाशत इत्यर्थः । ननु
ध्यानसहकृतश्रवणेन यदा साक्षात्कारो न स्यात्, तदा किं कर्त्तव्यं
काङ्क्षायां श्रवणादीनामावृत्तिरेव कर्त्तव्येत्याह—यावदिति ।
वृत्तिस्तेषां श्रवणादीनां पुनः पुनरावर्त्तनमेवोदाराणां सूत्रका
सम्मता । "आवृत्तिरसकृदुपदेशाद्" (ब्र० सू० ४ । १ । १)
धिकरणभाष्यादौ तस्या बहुधा निरूपितत्वादित्यर्थः ॥ ३८ ॥

धियोऽपराधक्षयतः स्वतो भवेद्
ब्रह्मात्मबोधः श्रवणाच्छ्रुतेर्गिराम् ।
यावन्न नष्टोऽखिलदोषकृद् भ्रम-
स्तावच्छमाद्यैः श्रवणादिरिष्यते॥

तदावृत्त्या पुरुषापराधक्षये ब्रह्मात्मैक्यबोधदार्ढ्यमनायासेनै
दित्याह—धिय इति । यावत्पुरुषापराधोच्छित्तिर्न जायते, ताव
कर्त्तव्येत्याह—यावदिति । तथा च दृढतत्त्वसाक्षात्कारस्योपा
भावाच्छ्रवणाद्यावृत्तिरावश्यकीति सैव कर्त्तव्येति भावः ॥ ३९ ॥

अनाद्यविद्यापरिकल्पिते जडेऽ-
ध्यासो दृढो नात्मनि संसृतेर्गृहम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मात्मनोऽभ्यास इहेष्यते तथा
दृढोऽप्यविद्यात्तयकारणं मुनेः ॥४०॥

अध्यासस्यानादिकालसिद्धत्वात्तन्नाशोऽपि दृढबोधाभ्यासजन्य-तत्त्वसाक्षात्कारेणैवेत्याह—अनाद्यविद्येति ॥ ४० ॥

तच्चिन्तनं तत्कथनं परस्परं
तद्बोधनं सद्भिरुदारबुद्धिभिः ।
तदेकनिष्ठत्वमितीष्यते यतो
ब्रह्मात्मनोऽभ्यास इहात्मबोधदः॥४१॥

ब्रह्माभ्यासस्वरूपमाह—तच्चिन्तनमिति । असन्दिग्धस्वबुद्ध्यारोहाय तस्य ब्रह्मतत्त्वस्य चिन्तनं मननम्, अभिज्ञगुर्वन्तरसंवादाय तत्कथनं परस्पराज्ञातांशप्रबोधायाऽन्योन्यप्रबोधनमित्येतैरुपायैरसम्भावनानिवृत्तिस्तदेकनिष्ठत्वेन च विपरीतभावनानिवृत्तिरिति विवेकः । आत्मबोधदार्ढ्यहेतुः—ब्रह्मात्मनोऽभ्यास इतीष्यते सद्भिरित्यर्थः । तदुक्तम्—

"तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वञ्च तदभ्यासं विदुर्बुधाः ॥" (पं० द० ७।६) इति ॥४१॥

अध्यासहानिः फलमात्मबोधतो
दृष्टं क्षुधाहानिरिवान्नभोजनात् ।
अतोऽवघातादिवदिष्यते श्रुते-
रावृत्तिराबोधमखण्डवस्तुनः ॥ ४२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अध्यासहानेर्दृष्ट फलत्वादपि तदावृत्तिरिष्टेत्याह—अध्यास रिति। आत्मबोधस्याध्यासहानिर्दृष्टं फलं भवति, अन्नभोजनस्य हानिरिव, अतः "व्रीहीनवहन्ति" इत्यादावघातादिवत् श्रुतेः आवृत्तिरखण्डवस्तुन आबोधं तत्त्वसाक्षात्कारपर्य्यन्तमिष्यते इति अत एव "आवृत्तिरसकृदुपदेशाद्" (ब्र० सू० ४।१।१) इत्यधिकरणभाष्ये "दर्शनपर्य्यवसानानि हि श्रवणादीन्यावर्त्य दृष्टार्थानि भवन्ति। यथावघातादीनि तण्डुलनिष्पत्तिपर्य्यवसानानि" (ब्र० सू० भा० ४।१।१) श्रवणादेर्ब्रह्मदर्शनार्थस्य दृष्टा "दर्शपूर्णमासिकावघातन्यायप्राप्तावृत्त्युपदेशः। अग्निचयने तु " पधस्य पूरयित्वावहन्त्यथैतदुपदधाति" इत्युपधेयोलूखलसंस्कार विहितस्यावघातस्य दृष्टार्थत्वाभावान्नावृत्तिरिति द्रष्टव्यमिति भावः।

विवेकवैराग्यशमादिसाधनै-
र्युक्तोऽधिकारी श्रुतिमौलिमानजाम्।
वृत्तिं समासाद्य समुच्छिनत्त्यदो
ज्ञानं सकार्य्यं निजबोधतेजसा ॥४३॥

विवेकादिसाधनचतुष्टयसम्पन्न एवाधिकारी समूलानर्थबाधकं तत्त्वज्ञानं प्राप्नोति नान्य इत्यभिप्रेत्याह—विवेकेति ॥ ४३ ॥

अज्ञानबाधोत्तरकाल ईयते
ब्रह्माद्वयं सिद्धमखण्डमात्मना।
प्रमाणकार्य्यं भ्रमहेतुबाधनं
स्वयंप्रकाशेऽतिशयाद्यभावतः ॥४४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मैक्यस्य स्वप्रकाशज्ञानरूपतया तत्राज्ञानबाधमन्तरेण प्रमाणजन्यातिशयादेरभावान्नान्यत्प्रमाणकृत्यमित्यभिप्रेत्याह—अज्ञानबाधोत्तरकाल इति। अखण्डब्रह्माद्वयं स्वतः सिद्धम्, अज्ञानबाधोत्तरकाले आत्मना स्वरूपेणैवेयते प्रकाशते। स्वयंप्रकाशे वस्तुनि प्रमाणकृत्यातिशयादेरभावाद् भ्रमहेतुरज्ञानं तस्य बाधनं बाध एव प्रमाणकृत्यम्, नान्यदिति योजना ॥ ४४ ॥

यथा घटादिप्रतिभास इष्यते
बुद्धिश्चिदाभासयुतार्थसाधिका ।
स्वयंप्रकाशेन तथेष्यते द्वयम्
किन्त्वान्ध्यनाशाय धियोऽस्त्यपेक्षणम् ॥४५॥

अत एवाज्ञाननाशाय वृत्तिव्याप्यत्वमपेक्ष्यते स्वप्रकाशात्मनि न फलव्याप्यत्वमपीति व्यतिरेकिदृष्टान्तेनाह—यथेति। यथा घटादि प्रतिभासे बुद्धिवृत्तिश्चिदाभासयुता सती अर्थसाधिकेष्यते, न तथा स्वयंप्रकाशे। द्वयं बुद्धिश्चिदाभासश्च नापेक्ष्यते। किन्त्वान्ध्यनाशाय अज्ञाननिवृत्तये धियो वेदान्तप्रमाणजन्यवृत्तेरपेक्षणमस्तीति योजना ॥ ४५ ॥

यथान्धकारे घटबोधसिद्धये
दीपस्तथा चक्षुरपेक्ष्यते द्वयम् ।
न दीपबोधाय तथेष्यते द्वयम्
किन्त्वक्षिणी तद्वदिहेष्यते मतिः ॥४६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतदेव दृष्टान्तेन द्रढयति—यथेति ॥ ४६ ॥

अज्ञाननाशार्थमखण्डवस्तुनि
प्रमाणजन्या मतिरिष्यते सती।
तद्व्यानतो भाति चिदद्वयं स्वतो
न ज्ञातताऽप्यात्मधियाऽत्र जन्यते॥

'इहेष्यते मतिः' इत्युक्तं विवृणोति—अज्ञाननाशार्थमिति। जडे घटादौ चिदाभासेन ज्ञातताख्यो धर्मो जन्यते घटस्फुर तथाऽत्र प्रत्यगभिन्ने ब्रह्मणि। आत्मधिया वेदान्तप्रमाणजन्य धर्मो जन्यते, तस्य स्वयंप्रकाशतया भासमानत्वादिति तात्पर्यार्थः

जडेऽस्त्यपेक्षाऽनवभासरूपिणि
द्वयोश्चिदाभासधियोरनात्मनि।
स्वयंप्रकाशे स्वत एव सर्वदा-
वभासरूपे मतिरेकलेष्यते ॥४८

पुनस्तदेव स्पष्टयति—जडे इति। इत्यभिप्रेत्यैव साम्प्रदायिकैः
"स्वप्रकाशोऽपि साक्ष्येष धीवृत्त्या व्याप्यतेऽन्यवत्।
फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ॥
बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम्।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता।
स्वयंस्फुरणरूपत्वान्नाभास उपयुज्यते ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चक्षुर्दीपावपेक्ष्येते घटादेर्दर्शने यथा ।
न दीपदर्शने किन्तु चक्षुरेकमपेक्ष्यते ॥
स्थितोऽप्यसौ चिदाभासो ब्रह्मण्येकीभवेत्परम् ।
न तु ब्रह्मण्यतिशयं फलं कुर्याद् घटादिवत् ॥" इति ॥ ४८ ॥

सा बुद्धिवृत्तिः श्रवणादिजा यदा
सन्देहशून्याऽप्यविपर्य्यया भवेत् ।
तदा तदारूढमखण्डचिद्घनं
स्वाज्ञानविध्वंसकरं तदेव हि ॥४९॥

वेदान्तप्रमाणजन्यवृत्त्यारूढं ब्रह्म चैतन्यमेव स्वावरकमज्ञानं निवर्त्तयतीति पक्षान्तरमाह—सेति । वेदान्तश्रवणादिजन्या सन्देहविपर्य्ययशून्या यदा सा चरमा बुद्धिवृत्तिर्भवेत्तदा तदारूढं तस्यां वृत्तावारूढमखण्डचिद्घनं प्रत्यगभिन्नं ब्रह्मचैतन्यं तदेव हि यत्पूर्वं तत्साक्षितया तत्साधकं हीति 'मामहं न जानामि' इत्यनुभवप्रसिद्धं सूचयति । तदेव स्वाज्ञानविध्वंसकरं स्वावरकमज्ञानमविद्याशब्दवाच्यं तस्य विध्वंसकरं निवर्त्तकमित्यर्थः ॥ ४९ ॥

य एव साक्षी निजसत्तया स्थितोऽ-
ज्ञानं पुरा स्वस्फुरणेन साधयन् ।
स एव वेदान्तविचारसिद्धधी-
वृत्तिं समारुह्य निवर्त्तयत्यदः ॥५०॥

'तदेव हि' इत्युक्तं विवृणोति—य एवेति ॥ ५० ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथा तृणादेरपि साधको रवि-
स्तद्दाहकः सूर्य्यमणौ स्थितो भ
तथा चिदात्मा तमसोऽपि साधक-
स्तद्बाधको वेदजबुद्धिवृत्ति गः ॥

ननु स्वस्मिन्नध्यस्तमज्ञानं यस्तत्साक्षितया साधयति, स क
वर्त्तको भवेदित्याशङ्क्य तत्साधकस्यापि सहकार्यन्तरस
तन्नाशकत्वं दृष्टमित्याह—यथेति ॥ ५१ ॥

ब्रह्मैक्यबोधे प्रतिकूलमात्मनोऽ-
ज्ञानं हिनस्तीति सकार्यमाधिद
प्रत्यक् चिदात्मा श्रुतिभिस्ततः स्मृतोऽ
विद्याद्यधिष्ठानतयापि सम्मतः ।

चिदात्मनः प्रत्यक्त्वेनापि तन्निवर्त्तकत्वमिति दर्शयितुं प्र
व्युत्पादयति—ब्रह्मैक्येति । स्वस्वरूपसाक्षात्कारे सति सका
माधिदमत्यन्तप्रतिकूलं त्यजतीति प्रत्यक् । हिनस्तीति फलित
"त्यज् हानौ" इति स्मरणात् । अज्ञानस्य सकार्य्यस्य
स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वमेव । नहि स्वाधिष्ठाने
त्यागेऽन्यत्र सत्त्वम्, अध्यस्तत्वव्याघातात्—अधिष्ठानाति
सत्त्वानङ्गीकारादिति भावः ॥ ५२ ॥

नारायणात्प्राग् विमुखोऽयमात्मनोऽ-
विद्याद्युपाधौ स्थित आत्मभाव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वसत्तया स्वस्फुरणेन विभ्रमं
प्रसाधयन्नेव हि संसृतिं गतः ॥५३॥

जीवस्यानादिकालमारभ्य भगवद्वैमुख्यमेव सकलानर्थहेतुः, महता पुण्यपुञ्जेन तदाभिमुख्यमेव सकलाज्ञानाद्यनर्थनिवृत्त्युपलक्षितनिरतिशयानन्दाविर्भावहेतुरित्यभिप्रेत्याह—नारायणादित्यादिद्वाभ्याम् । नराति गृह्णाति देशादिपरिच्छेदमिति नरोऽपरिच्छिन्नः परमात्मा तस्येदं तत्स्वरूपावरकमनाद्यनिर्वाच्यमज्ञानं नारं तदयते साक्षितया पश्यतीति नारायणः । यद्वा, आरा दुःखचक्राणि स्वाविद्यावृतस्वरूपतया तेषामयनं निवासस्थानं त्वंपदार्थो जीव आरायणस्तद्भिन्नो निरावरणज्ञानस्वरूपस्तत्पदार्थो नारायणस्तस्माद्वस्तुत आत्मनः स्वस्वरूपभूतात् प्रागज्ञानदशायां विमुखोऽयं जीव अविद्याद्युपाधौ कारणादिशरीरत्रये आत्मत्वेन स्थितः सन् स्वसत्तया स्वस्फुरणेन स्वस्वरूपभूतसत्तास्फूर्त्तिभ्यां विभ्रमम्—विविधं भ्रमयति स्वाश्रयं स्वविषयं प्रत्यगात्मानमिति विभ्रमोऽज्ञानं तत्कार्य्यैश्च प्रकर्षेण स्वानिष्टमपीष्टबुद्ध्या साधयन् जीवरूपेण साक्षिरूपेण च भासयन्नेव संसृतिं गतस्तत्प्रयुक्तजन्ममृत्युजराद्यनर्थनिवहपरम्परां प्राप्तः अज्ञानतत्कार्य्यशरीराद्यध्यास एव । हीति श्रुतिस्मृतिप्रसिद्धत्वात्संसारप्राप्तिर्न तु वस्तुत इत्यर्थः । तथा च तत्पदार्थभगवद्वासुदेवपराङ्मुखत्वमेव संसृतिबन्ध इति भावः ॥ ५३ ॥

स चैक्यबोधात्परमेशजीवयो-
रीशप्रसादप्रभवादुदारधीः ।
सकार्य्यमज्ञानमपारदुःखदं
प्रबाधयत्येव निजात्मनि स्थितः ॥५४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनादिभवसञ्चितपुण्यनिचयचयितकल्मषस्य पुंसो भगव भक्तिरुत्पद्यते—

"येषान्त्वन्तगतं पापं जनानां पुण्यकर्म्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥" (गी० ७

इति भगवद्वचनात् । ततः सर्वपुमर्थसिद्धिरित्यभिप्रेत्याह— य एवं त्वंपदार्थो जीवोऽविद्यातत्कार्यदेहाद्यात्मत्वाध्यासेन त्पराङ्मुखो भूत्वा संसृतिं प्राप्तः स च परमेश्वरजीव पदार्थयोरैक्यबोधात्, ईश्वरानुग्रहात्, भक्त्याराधितगोविन्द प्रभव उत्पत्तिर्यस्य तस्मादैक्यबोधादुदारधीरपरिच्छिन्नस्वस्वरू त्कारवान् सकार्य्यमज्ञानं संसारपारावारे पातहेतुत्वादनन्तदुः निजात्मनि स्थितः त्यक्तदेहत्रयाभिमानः सन् प्रबाधयत्येव पुनरुत्थानं यथा स्यात्तथा निवर्त्तयतीत्यर्थः ॥ ५४ ॥

यथा यथा ब्रह्मसुखात्मना स्थिति-
स्तथा तथा नश्यति संसृतिर्धियः ।
अखण्डबोधेऽतिदृढे तु संसृति-
र्लयं प्रयातीयमशेषतो विदः ॥

यावदयमखण्डबोधो दार्ढ्यं भजते तावन्महता प्रयत्नेन भ्याससाध्यसमाधिरेव कर्त्तव्यः, तद्दार्ढ्ये तु सर्वविक्षेपवि सुखमेव सिद्धमित्यभिप्रेत्याह—यथेति ॥ ५५ ॥

दृश्यं न यावत्प्रविलीयते धियो
निषिद्धमेतद्बहुधाऽऽगमान्ततः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तावन्न चिन्मात्रतया दृढा स्थिति-
जीवद्विमुक्तेः सुखमक्षयं विदः ॥५६॥

श्रुतियुक्तिभ्यां निश्चितस्याप्यात्मतत्त्वस्य यावद् दृढस्वानुभवारोहो न स्यात्तावत् तत्फलं नानुभूयते इत्याह—दृश्यमिति । आगमान्ततः वेदान्तैः "सार्वविभक्तिकस्तसिः" बहुधा "नेह नानास्ति किञ्चन" (बृ० ४ । ४ । १९) "अतोऽन्यदार्त्तम्" (बृ० ३ । ४ । २) । इत्यादिवाक्यैरनेकप्रकारेण निषिद्धं मिथ्यात्वादिहेतुभिर्यौक्तिकबोधेन ज्ञानमपि दृश्यं यावद्धियः सकाशान्न प्रविलीयते न प्रमार्ज्यते तावद् ब्रह्मात्मतया स्थितिर्दृढा । विदोऽपि श्रौतयौक्तिकबाधज्ञानवतोऽपि नास्ति यावज्जीवन्मुक्तेः सुखं क्षयशीलविषयविषयिभावविनिर्मुक्तं तन्नास्तीत्यर्थः ॥ ५६ ॥

वैराग्यबोधोपरतित्रयं यदा
दैवान्मिलत्यात्मविदो निरङ्कुशम् ।
तदैव जीवन्निह तत्त्ववित्सुखं
परं स चाप्नोतिविशुद्धमक्षरम् ॥५७॥

जीवन्मुक्तिसुखप्रादुर्भावस्य हेतुमाह—वैराग्येति । वैराग्यं विषयवैतृष्ण्यम्, बोधः स्वरूपसाक्षात्कारः, उपरतिश्चित्तैकाग्र्यमेतत्त्रयं वासनाक्षयमनोनाशतत्त्वबोधलक्षणं समग्रैश्वर्य्यं यदा दैवाद् महतः पुण्यपुञ्जाद् मिलति एकत्र समवैति यस्य तत्त्वविदः पुरुषधौरेयस्य स च तत्त्वविद् इहास्मिन्नेव शरीरे जीवन्नेव निरङ्कुशं विषयादिप्रयुक्ततारतम्यशून्यत्वान्निरतिशयम्, सुखं परं परमात्मस्वरूपम्, विशुद्धमाविद्यकधर्म्म-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विनिर्मुक्तम्, अक्षरमविनाशि, व्यापकञ्च आप्नोति तद्रूप
तीत्यर्थः ॥ ५७ ॥

अनेकजन्मार्जितपुण्यसञ्चयै-
र्विशुद्धबुद्धेर्हरिभक्तिरुत्तमा ।
उदेति भक्त्या विषयेभ्य उत्तमं
वैराग्यमैश्वर्य्यमिदं रमापतेः ॥

यस्मादेतत्त्रयं समुदितं प्रत्येकञ्चातिदुर्लभं भगवत्प्रसादै
तस्मादेतत्सिद्धये श्रीमन्मुकुन्दपदारविन्दमकरन्दभक्तिरेव मुमुक्षुं
र्त्तव्येत्यभिप्रेत्याह—अनेकजन्मेत्यादिपञ्चभिः। अनेकजन्मसु
धनलक्षणकर्म्मोपार्जितपुण्यसञ्चयैर्विशुद्धा बुद्धिर्यस्य तस्योत्तमा
पदप्रापिका हरेर्भक्तार्त्तिहरणशीलस्य भगवतो वासुदेवस्य भक्तिः
लक्षणा उदेति। तया भक्त्या विषयेभ्य ऐहिकामुष्मिकेभ्यो
उत्तमं तीव्रतरं वैराग्यमुदेति। भक्त्या वैराग्योदये हेतुः—इदं
रमापतेरैश्वर्य्यं सर्वविभूत्यधीश्वरी रमा लक्ष्मीस्तस्याः पतिर्मु
कुन्दस्तस्येत्यर्थः। तथा च यस्यैश्वर्य्यमिदं वैराग्यं तत्प्राप्तौ
रेव मुख्यं कारणमिति भावः ॥ ५८ ॥

बुद्धेस्तथैकाग्र्यमखण्डमुज्ज्वलं
यमादिसाध्यं भगवत्प्रसादतः।
भवेत्तथाऽद्वैतपदावबोधनं
दृश्यार्त्तिविच्छेदकमञ्जसा मुनेः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं बहुना ? भगवद्भक्त्या वैराग्यादित्रयं समकालमेव सिद्ध्यती-त्याह—बुद्धेरिति ॥ ५९ ॥

यथा यथा भक्तिरुदारपूज्यपा-
त्पादारविन्देऽतिदृढत्वमृच्छति ।
तथा तथा भोगरतिक्षयस्तथा
ब्रह्मैक्यबोधोदय आत्मनि स्थितिः ॥६०॥

एतत्त्रयस्य समकालसिद्धिप्रकारमाह—यथा यथेति । उदारैः शिव-विरिञ्चिप्रभृतिभिः पूज्यौ पादौ यस्य स उदारपूज्यपाद् भगवान्वासुदेव-स्तस्य पादारविन्दे भक्तिरनुरागो यथा यथात्यन्तदार्ढ्यमृच्छति प्राप्नोति, तथा तथा स्वभावतोऽनायासेन भोगरतिक्षयो वैराग्यं तथा ब्रह्मैक्यबोध-प्रादुर्भावः, आत्मनि स्थितिः स्वस्वरूपेऽवस्थानम्, उपरतिरिति यावत् सिद्ध्यतीत्यर्थः ॥ ६० ॥

विकल्पजालं परिहृत्य दूरतो
भक्तिं समाश्रित्य मुकुन्दपादयोः ।
विचारणीयं श्रुतिसम्मतं पदं
ब्रह्मैक्यमाबोधमबोधनुत्तये ॥६१॥

फलितमुपसंहरति—विकल्पजालमिति । नानोपायबोधकशास्त्र-श्रवणोद्भूतो यो विकल्पसमूहः "इदं कर्त्तव्यमिदं वा" इत्यादिरूपस्तं दूरतोऽविद्यमानवदुपेक्ष्य मुकुन्दपादयोर्भक्तिं तत्परत्वलक्षणां रतिं सम्य-गसंदिग्धाविपर्य्यस्ततया आश्रित्य शरण्यत्वेन स्वीकृत्य श्रुतिसम्मतं ब्रह्मैक्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदमावेद्यं तत्त्वसाक्षात्कारपर्य्यन्तं विचारणीयं श्रवणादुपायरूपेण
नीयम्, अवेधनुत्तये अज्ञानतत्कार्य्यमिथ्याज्ञानसमुच्छेदार्थं इति

"जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म्म चाऽखिलम्"॥ (गी०

इति भगवद्वचनात् ॥ ६१ ॥

जगज्जनिस्थानलया यतो हरे-
र्ब्रह्माद्वयाद्वेदशिरोगिरेरितात् ।
तद्ध्येयमावेद्यमुपास्यमादरा-
दखण्डवस्त्वास्पदमद्वयं जनैः ॥

तच्छ्रुतिसम्मतं पदं श्रीमन्मुकुन्द एव न वस्त्वन्तरमित्याशयं
जगज्जनीत्यादि । "यतो वा" (तै० ३ । १ । १ ) इत्यादिश्रुतिः
स्थलक्षणलक्षिताद् यतो ब्रह्माद्वयात् "सत्यं ज्ञानमनन्तम्"(तै०
१ ) इत्यादिश्रुतिसिद्धस्वरूपलक्षणलक्षिताद् वेदशिरोगिरा
मसि" (छां० । ८ । ७ ) इत्याद्यखण्डैक्यपरवाक्यसमूहेन
प्रतिपादितवस्तुनो हरेः सकाशाज्जगतो जन्मादीनि, तदेवादरात्
क्षणलक्षितरूपेण नानालीलास्पदत्वेन सगुणोपासनया ध्येयमवश्यं
व्यम्, तदेव कृष्णाख्यं ब्रह्मस्वरूपलक्षणलक्षितरूपेण आदराद्विधेय
गुणारोपेण निर्गुणोपासनयोपास्यम्, तदेव कृष्णाख्यं ब्रह्माण्ड
तत्त्वमस्यादिवाक्यैरैक्यरूपेण प्रतिपाद्यमादरादावेद्यमासमन्तात्
वियदादिप्रपञ्चतत्कर्तृत्वबाधेन तदनुगतजाग्रदादिप्रपञ्चतत्सम्
च वेद्यमवश्यं ज्ञातव्यमधिकारिजनैरित्यर्थः । तथा च
तात्पर्य्यविषयत्वेन परमपुरुषार्थरूपः श्रीमन्मुकुन्द एव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपेणानवरतं स्वाधिकारानुसारेण पुरुषधौरेयैः शरण्यत्वेनाश्रयणीय इति भावः ॥ ६२ ॥

दृढरतिपदमाद्यं संसृतेः पारभूतं
युगलयुगलबाहुं श्रीपतिं चक्रपाणिम्।
नवजलदसमाभं शान्तमूर्त्तिं सुखाब्धिं
सकलजगदधीशं कृष्णमन्तः स्मरामि ॥६३॥

इति प्रत्यक्तत्त्वचिन्तामणौ अष्टमं प्रकरणं सम्पूर्णम् ॥ ८ ॥

प्रकरणरचनाव्याजेन श्रीमन्मुकुन्द एव नैरन्तर्य्येणादरात् स्मर्त्तव्योऽस्माकमित्याशयेन प्रकरणार्थमुपसंहरन्परमपुरुषार्थरूपं भगवन्तमनुसन्धत्ते—दृढरतिपदमिति। कृष्णं स्वेष्टदैवतं सदानन्दघनमन्तः प्रत्यगभिन्नं स्मरामि नित्यमनुसन्दधे इत्यन्वयः। तत्र हेतुः—दृढरतिपदमिति। निरुपाधिपरप्रेमास्पदमित्यर्थः। तर्हि किं जीवरूपेण ? नेत्याह—आद्यमिति। सर्वविश्वस्याधिष्ठानतयादिकारणं तत्पदार्थमित्यर्थः। तर्हि किं मायोपाधिकं तत्पदवाच्यम् नेत्याह—संसृतेः पारभूतमिति। अविद्यातत्कार्यविनिर्मुक्ततया मुक्तैः प्राप्यमित्यर्थः। "ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याऽव्ययस्य च" (गी० १४। २७) इति भगवद्वचनात्। तर्हि किं नैयायिकाद्यभिमतं दुःखाभावमात्रं पुमर्थरूपं कृष्णाख्यं ब्रह्म ? नेत्याह—सुखाब्धिमिति। निरतिशयसुखस्वरूपमित्यर्थः। ननु कथमेवादृशस्यावाङ्मनसगोचरस्य भवादृशैरनुसन्धानं कर्त्तुं शक्यम् ?



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यत आह—सकलजगदधीशमिति । तथा च जगति मादृशा ...
सन्त्येव । तेषामनन्यशरणानां मादृशानामन्यस्या गतेरभावा...
जगदीश्वरः शरणमिति भावः । ननु तर्हि जगदधीश्वरत्वप्रयु...
कश्चित् चोभः स्याद्, नेत्याह—शान्तमूर्तिमिति । शान्ता सं...
हेतूपरामोपलक्षिता मूर्त्तिः स्वरूपं यस्य तम् । नन्वेतादृशस्य शान्त...
भगवतः किमाकाराद्यवलम्बनेनानुसन्धानम् ? इत्यत आह—...
युगलबाहुमित्यादि । अभिनवसान्द्रघनस्येवात्यन्तरमणीया संसार...
पोच्छेत्त्री आभा छविर्यस्य तं चतुर्भुजघनश्यामाद्याकारावल...
तस्यानुसन्धानमित्यर्थः ॥ ६३ ॥

प्राप्याधिकारमवलम्ब्य च दैशिकाग्र्यं
श्रुत्वा ततो निखिलवेदशिरोभिगीतम् ।
प्रत्यञ्चमद्वयसुखं प्रविशन्ति यं श्री-
कान्तं तमन्तरहमद्भुतमूर्त्तिमीडे ॥ १ ॥

नवसान्द्रघनश्याममिन्दिराकान्तमान्तरम् ।
वन्दे वृन्दावनाक्रीडं नन्दनन्दनमीश्वरम् ॥ २ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषिसदानन्दवि...
रचितायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां स्वप्रभाभि-
धायामधिकारमयूखाभिधमष्टमं प्रकरणं
समाप्तिमगमत् ॥ ८ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अथ नवमं प्रकरणम्

यस्मादखण्डमहसोऽण्डचयोऽतिशक्ते-
र्मायाविनोऽप्यनिमिषात्परमेशतोऽभूत् ॥
येन स्थितः प्रलयमेति स यत्र भूम्नि
स्वान्तस्थमद्वयसुखं तमहं प्रपद्ये ॥१॥

वृन्दारकाधिपतिमुज्ज्वलकान्तिकान्तं
शान्तं प्रशान्तजनसेव्यमशेषनाथम् ।
सौन्दर्य्यसौष्ठवसुमार्दवसारसिन्धुं
कृष्णं स्मरामि सततं करुणार्द्रमूर्त्तिम् ॥ १ ॥

अष्टमप्रकरणोपान्ते "जगज्जनिस्थानलया यतो हरेर्ब्रह्माद्वयाद्" इत्युक्तम् । तत्र किं ब्रह्माद्वयं जगज्जन्मादेर्निमित्तकारणम्, अथवा निमित्तमुपादानञ्चेत्युभयमपीत्येतद्विचारप्रधानं प्रकरणमारभमाणो भिन्ननिमित्तोपादानं भगवन्तं वासुदेवं प्रकरणप्रतिपाद्यमनुसन्धत्ते—यस्मादित्यादित्रिभिः । तं स्वान्तस्थम्, अद्वयसुखं प्रत्यगभिन्नमद्वयानन्दं परमात्मानं कृष्णमहं प्रपद्ये शरण्यत्वेनाश्रये इति सम्बन्धः । तं कमित्यपेक्षायामाह—यस्मादिति । "यतो वा" ( तै० ३ । १।१ ) इत्यादिश्रुतिसिद्धाद् यस्मात्परमेशतः अण्डचयो ब्रह्माण्डसमूहो ब्रह्माण्डानन्त्यमभूत् प्रादुरभवत् । तत्र हेतुः—मायाविन इति । मायाविनोऽप्यखण्डमहसः मायोपाधिसम्बन्धेनापि न विद्यते खण्डः सजातीयादिभेदो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देशादिकृतपरिच्छेदो वा यस्मिंस्तदखण्डं यत् महश्चैतन्यात्मं स्वरूपम्। अखण्डमहस्त्वे हेतुः—अनिमिषात्। अनु शक्तित्वादित्यर्थः। अत एवाऽतिशक्तेः शक्तिं मायाख्यां अतिक्रम्य गतः, मायातीत इति यावत्। तथा च मायां तत्कृतकलङ्कशून्यस्तस्मादित्यर्थः। एवमुत्पत्तिहेतुत्वमुक्त्वा स्थि त्वमाह—येनेति। स्थितिकाले येन परमात्मना स्थितो जीवनं प्राप्नोति, यदानन्दमात्रामुपजीवति तमिति सम्बन्धः। त्वमाह—प्रलयमिति। सोऽण्डचयो यत्र यस्मिन्नवधिभूतचैत प्राप्नोति तं प्रपद्ये इति योजना। तस्याऽऽविद्यकप्रपञ्चकृत शून्यत्वमाह—भूम्नीति। "यत्र नान्यत्पश्यति नान्यच्छृणोति द्विजानाति स भूमा..." (छा० ७।२४।१) इति श्रुतिः टीराहित्यादपरिच्छिन्ने इत्यर्थः॥ १॥

यं तत्पदार्थमखिलज्ञमनन्तशक्तिं
स्वाध्यस्तविश्वजनिपालनसंहृतीशम्।
प्राहुर्महेश्वर इति श्रुतिमौलिवाच-
स्तं श्रीमुकुन्दमनिशं कलये हृदिस्थ

"मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" (श्वे० ४ "अस्मान्मायी सृजते विश्वमेतद्" (श्वे० ४।९) "यः सर्व विद् यस्य ज्ञानमयं तपः" (मु० १।१।९) इत्यादिश्रुति मायावित्वेन परमेश्वरं विवृणोति—यमिति॥ २॥

शुद्धः स्वयं विगतदोषकलाभिरामः
श्यामः स्वधाममहिमोपनिबद्धक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्यङ्मुखाद्वयतयाऽखिलधर्मशून्योऽ-
पीदं ससर्ज य उदारगतिस्तमीडे ॥३॥

तस्य जगदध्यासाधिष्ठानत्वेऽपि वस्तुतो मायातीतत्वादलुप्तचैतन्य-स्वभावत्वमव्याहतमित्यभिप्रेत्याह—शुद्ध इति। यः श्यामः श्याम-सुन्दरो घनश्यामः श्रीकृष्णः स्वयं शुद्धोऽपीदं जगत्ससर्ज, तमीडे स्तौमीत्यन्वयः। स्वयंशुद्धत्वे हेतुः—प्रत्यगित्यादि। बाह्याभ्यन्तरे-न्द्रियविषयसम्पर्कजन्यत्वविनिर्मुक्तं यत्प्रत्यग्रूपं सुखं तदेवाऽद्वयं ब्रह्म तद्रूपत्वादखिलागन्तुकानागन्तुकधर्मशून्यः अत एवोदारा अपरिच्छिन्ना गतिर्गम्यं फलभूतं स्वरूपं यस्य सः। उदारगतित्वे हेतुः—स्वधामेत्यादि। स्वप्रकाशमहिम्नोपनिबद्धः स्वकटाक्षगोचरे वशीकृतः कामः सङ्कल्पहेतु-र्माया यस्य सः, अत एव विगताः स्वत एव निरस्ता दोषकलाः कामक्रोधादिसकलदोषहेतुभूताः शक्तयो यस्मात्; अत एवाभिरामो सुन्दरः। यद्वा, अभितो रमन्ते शिवसनकादिप्रभृतयो योगिनोऽस्मिन्, अभितो वा तान् रमयतीत्यभिरामः, विगतदोषकलश्चासावभिरामश्च विगतदोषकलाभिरामः। यद्वा, विगतदोषकला अविद्याकामकर्म्मादि-रूपा येभ्यस्ते अभितो रमन्तेऽस्मिन्नित्यर्थः। तथा च नित्यशुद्धबुद्धा-द्वयानन्तानन्दमुक्तस्वभावं सकलवेदान्तसिद्धं स्वस्वरूपमहिम्नि सदा-स्थितमेव सन्तं भगवन्तं वासुदेवमावेदयन्त्यः श्रुतयस्तस्य जगज्ज-न्मादेरभिन्ननिमित्तोपादानकारणत्वमद्वैततत्त्वे बुद्ध्यवतारायानुवदन्तीति भावः ॥ ३ ॥

ब्रह्माद्वयं सकलकारणमामनन्ति
श्रौता न तत्परिणतिं भजते ह्यसङ्गम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तामन्तरा कथमिदं प्रकृतित्वमीयात्
क्व व्योम दृष्टमखिलात्मतयाऽऽततं

एवमभिन्ननिमित्तोपादानं ब्रह्मानुसन्धाय तदेवोपपा[illegible]
स्थापयति—ब्रह्माद्वयमिति। श्रौता वेदान्तिनः सक[illegible]
पादानमद्वयं ब्रह्मेत्यामनन्ति कथयन्ति, काऽत्रानुपपत्ति[illegible]
तदद्वयं ब्रह्म कथं परिणतिं परिणामं भजते? हि [illegible]
"असङ्गो ह्ययं पुरुषः" (बृ० ४। ३। १५)। "अस[illegible]
सज्जते" (बृ० ४। ४। २२) इत्यादिश्रुतेः। न च मा[illegible]
स्तस्य। तमन्तरेणैव तस्य जगत्कारणत्वं किन्न स्यात्? [illegible]
तं विना कारणत्वानुपपत्तेः। इत्याह—तामिति। परि[illegible]
स्वत एवापरोक्षं ब्रह्म कथं प्रकृतित्वमुपादानत्वमीयात् प्राप्नु[illegible]
असङ्गस्य निष्कलस्य कूटस्थस्योपादानत्वं न दृष्टचरमित्या[illegible]
कुत्र व्योम तथाविधमाकाशमखिलं घटपटाद्याकारेण [illegible]
स्वविकारेषूपादानतया व्याप्तं दृष्टं लोके इत्यर्थः॥ ४॥

लोके मृदादिसविकारमनेककार्या-
कारेण दृष्टमिदमप्यमितं तथा चे[illegible]।
तर्ह्येति तद्विकृतिमद्वयमित्ययुक्तं
वेदान्तिनां कथमिदं मतमस्तदोष[illegible]

अनुपपत्तिमेव द्रढयति—लोके इति। यथा लोके[illegible]
घटाद्याकारेण सविकारं परिणममानं मृदादिरूपं कार्यं दृष्टं [illegible]
मितमपरिच्छिन्नं ब्रह्मापि चेत्स्यात्, तर्हि तदद्वयं विकृतिं प[illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्र्यम्, तत्तवात्यन्तमनिष्टत्वादयुक्तम्; असङ्गत्वनित्यकूटस्थत्वादि-
ह्गापत्तेः । कथमिदं वेदान्तिनां मतं ब्रह्मोपादानकारणवादः अस्तदोष-
रगतकलङ्कतया निर्दुष्टं स्यादित्यर्थः । एतदुक्तं भवति—ब्रह्म जगदा-
रेण परिणमते उपादानकारणत्वाच्चेत्, तदा उपादानत्वं नाम वस्तुनः
र्य्यरूपापत्तिः, सा च परिणाममन्तरेणानुपपन्ना । परिणामो नाम
रणस्य स्वसमानसत्ताककार्य्यात्मतारूपो विक्रियाविशेषः । यदि
पि सोऽपि नाश्रीयेत, तर्हि ब्रह्म जगदुपादानं न भवेत् । लोके च
विकारमेव मृदादिकारणमनेकाकारेण घटशरावोदञ्चनादिभावमाप-
मानं दरीदृश्यते; ब्रह्मणोऽपि तथैव भवन्मते कारणत्वं सम्भविष्यति ।
या चेदमनुमानम्—विमतं ब्रह्म सविकारं भवितुमर्हति, उपादानकार-
त्वात्; यदित्थं तत्तथा, यथा मृदादि, तथा चेदं ब्रह्म, तस्मात्तथेति ॥५॥

अत्रोच्यते तदकलं विमलं स्वभानं
यन्नेति नेति निगमान्तवचस्सु गीतम् ।
तन्निष्प्रपञ्चमविकारमखण्डबोधं
निश्चीयते न विकृतिं भजते कदाचित् ॥६॥

"निष्कलं निष्क्रियम्" (श्वे० ६ । १९) "नेति नेति" (बृ०२ ।
। ६) "अस्थूलम्" (बृ० ३ । ८ । ८) इत्यादिश्रुतिसहस्राश्रयणेन
ह्मणो विकारित्वं निष्प्रपञ्चता चेति तावन्निश्चीयते । न च सर्वात्मत्व-
र्यकारणत्वश्रुतिव्याकोपः । तासां निष्प्रपञ्चब्रह्मप्रतिपत्तिप्रयोजनत्वा-
नरस्तनिखिलविशेषं ब्रह्म न साक्षाद् विधिमुखेन प्रतिपादयितुं शक्यम्;
तः प्रतीयमानप्रपञ्चरूपतामारोप्य प्रपञ्चसाक्षितया तद्विलक्षणे ब्रह्मणि
प्रपञ्चप्रतिषेधे सति निरस्तसमस्तरूपब्रह्मप्रतिपत्तिरवकल्पते । अन्यथा
ह्मणः प्रपञ्चात्मत्वप्रतिपत्तेः प्रयोजनाभावादुपदेशोऽनर्थकः स्यात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न वा ब्रह्मणः प्रपञ्चभावानभ्युपगमे सर्वोपादानत्वश्रुतिविरोध
शङ्क्यः, स्वप्नमायावदेव कल्पनामात्रेण कारणत्वव्यपदेशोपपत्ते
प्रेत्य समाधानं प्रतिजानीते—अत्रोच्यते इति। समाधानमिति
प्रतिज्ञातमर्थं विवृणोति—तदिति। तदद्वयं ब्रह्म अकलं निरस्त
विमलं नित्यकूटस्थतयाऽत्यन्तस्वच्छम्, स्वभानं स्वप्रकाशम्, कदा
विकृतिं न भजते इत्यन्वयः। कुतो न विकृतिं भजते इत्यत्र
यदिति। यद्वस्तु "नेति नेति" (बृ० २। ६। ६) इत्यादि
न्तवचस्सु वेदान्तवाक्येषु गीतं प्रतिपादितम्, तन्निष्प्रपञ्चं निरस्त
लप्रपञ्चम्, अविकारं नित्यकूटस्थम्, अखण्डबोधमपरिच्छिन्न
यतो निश्चीयते वेदान्तैरिति योजना ॥ ६ ॥

सर्वात्मता सकलकारणता श्रुतिर्या
सा निष्प्रपञ्चपरमात्मपदप्रतिष्ठा।
भ्रान्तिप्रतीतजगतः प्रतिषेधनेन
ध्वस्ताखिलभ्रमपदं गमयत्यखण्डम्

तर्हि "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः" (तै
२। १) "तत्तेजोऽसृजत" (छा० ६। २। ३) "स विश्वकृद्
विश्वस्य कर्त्ता" (बृ० ४। ४। १८) इत्यादीनां प्रपञ्चं प्रति ब्रह्म
त्ववादिनीनां "सर्वं खल्विदं ब्रह्म" (छा० ३। १४। १) "आ
सर्वम्" (छा०। ७। २५। २) इति श्रुतीनां ब्रह्मणः सर्वात्म
नीनाञ्च का गतिरिति तत्राह—सर्वात्मतेति। निष्प्रपञ्चपरम
प्रतिष्ठातात्पर्येण पर्यवसानं यस्याः सा तथा भ्रान्त्या प्रतीतस्य
प्रतिषेधनद्वारा ध्वस्तं स्वत एव निरस्तमखिलभ्रमाणां मिथ्या
पयाणां पदं निवासस्थानमज्ञानं यस्मिन् तदखण्डं वस्तु ब्रह्म

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गमयति । पर्य्यवसानगत्या तदेवाववोधयति साधनचतुष्टयसम्पन्नाधिकारिजनेभ्य इत्यर्थः ॥ ७ ॥

निर्भेदतत्त्वमिदमात्मपदं न साक्षा-
च्छक्यं श्रुतेर्विधिमुखेन गिराऽपि वक्तुम् ।
तस्मात्समस्तजडसाक्षितया विविक्ते
ब्रह्मण्यशेषमधिरोप्य पुनर्निषिद्धम् ॥ ८ ॥

तदेव विवृणोति—निर्भेदतत्त्वमिति । इदमात्मपदं विधिमुखेन "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० २ । १ । १ ) इत्येवं रीत्या श्रुतेर्गिरा साक्षादभिधावृत्त्या वक्तुं न शक्यमित्यन्वयः । तत्र हेतुः—निर्भेदतत्त्वमिति । निरस्तसमस्तविशेषणविशेष्यजातिव्यक्तिगुणगुणिसम्बन्धसम्बन्धिभावादिभेदतया शब्दप्रवृत्तिनिमित्ताभावादेवावाच्यं तत्त्वमित्यर्थः । तस्मादन्यस्या गतेरभावात्समस्तजडसाक्षितया विविक्ते स्वत एव विलक्षणे ब्रह्मणि अशेषं मिथ्याजडपरिच्छिन्नादिधर्म्मकं जगदारोप्य "नेति नेति" ( बृ० २ । ६ । ६ ) इत्यादिश्रुतिसमूहैः पुनरपवादेन निषिद्धमित्यर्थः ॥ ८ ॥

स्वाप्नप्रपञ्चवदिदं निजमाययास्मि-
न्नध्यस्तमस्य जगतोऽपि च कारणत्वम् ।
आरोपितं परपदे न तु वस्तुनस्त-
द्धेतुर्ह्यसङ्गमजडं श्रुतिसम्मतं स्यात् ॥९॥

"तदेतद्ब्रह्मापूर्वमनपरम्" ( बृ० २ । ५ । १९ ) "न तस्य कार्य्यं करणञ्च" ( श्वे० ६ । ७ ) इत्यादिश्रुतिसिद्धकार्य्यकारणभावविनिर्मुक्ते



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मणि कारणत्वमप्यारोपितं श्रुतिरनुवदतीत्याह—स्वाप्नप्रप
नहि जडपरिच्छिन्नदुःखमृषात्मकस्य जगतः सच्चिदानन्दानन्त
ब्रह्म जगदाकारेण परिणममानमायाधिष्ठानत्वमन्तरेण कारणं
भावः। एतेन कारणत्वाद्ब्रह्मणो मृदादिवत्सविकारत्वानुमा
सर्पादिकारणभूतरज्ज्वादिष्वनैकान्तिकत्वादिति भावः ॥ ९॥

मायासहायमखिलं सृजतीश्वरत्वा-
त्सर्वज्ञमात्मनि जगन्मनसाप्यचिन्त्
तर्काद्यगम्यमुरुशक्तिकमागमान्तै-
र्वेद्यं निमित्तमिह कारणमस्त्यभेदम्।

फलितमुपसंहरति—मायासहायमिति। तस्मादागमान्तै
तन्मायासहायं मायोपहितं सर्वज्ञमुरुशक्तिकमनन्तशक्तियुतं
भूतभौतिकजातं जगत् तर्काद्यगम्यमत एव मनसाप्यचिन्त्यं
स्वस्मिन्नेवेहाधिष्ठानरूपे सृजति ईश्वरत्वान्निमित्तं कारणमु
भेदमभिन्नमेव भवति अभिन्ननिमित्तोपादानं ब्रह्मैवेत्यर्थः ॥१०॥

नन्वस्तु चेतनतया परमेश्वरोऽयं
कार्य्ये निमित्तमखिले समवाय्यतो
कुम्भादिकं प्रति यथाऽस्ति कुलालमुख्
स्तद्वन्महेश इति युक्तमिहाऽनुमातु

अभिन्ननिमित्तोपादानं ब्रह्मेत्यसहमानः शङ्कते—
भुवनविरचनकार्य्यनिमित्तमेव ईश्वरो न समवायिकारणम्,
चेतनस्य हि कुलालादेः घटादिकार्य्यनिमित्तकारणत्वमेव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

समवायिकारणत्वम्; ईश्वरस्यापि तथैव युक्तमनुमातुमिति समुदितोऽर्थः ॥ ११ ॥

क्षित्यङ्कुरादिरचनां प्रति नेश्वरोद्धो-
पादानकारणमतः स निमित्तमस्ति ।
एवञ्च तेऽभिमतमस्ति कथं विरुद्धं
ब्रह्मैव कारणमिति स्वत आगमाद्वा ॥१२॥

अनुमानमेव दर्शयति—क्षित्यङ्कुरादिरचनामिति । विमतं क्षित्यङ्कुरादिभूतभौतिकलक्षणं कार्य्यं न चेतनोपादानम्, कार्य्यद्रव्यत्वाद्; घटशकटादिवदिति । विमत ईश्वरो न द्रव्यसमवायिकारणम्, चेतनत्वात्; कुलालादिवत् । तस्मादीश्वरो निमित्तकारणमेव, न समवायिकारणम् । एवञ्च ब्रह्मैव उपादानकारणमिति कथं स्वतः स्वबुद्ध्या कल्पितम्, आगमाद्वाऽभिमतं तव नोभयथाऽपि युक्तम्, विरुद्धत्वादित्यर्थः । चेतनोपादानत्वे हि कार्य्यस्य कारणस्वभावानुगमाज्जगतश्चेतनत्वप्रसङ्गः । अचेतनं चैतज्जगदुपलभामहे । किञ्च ईश्वरस्य तदुपादानत्वे तस्य मृदादिस्थानीयत्वात्तदधिष्ठाता कुलालादिवदन्यश्चेतनो वक्तव्यः । उपादानाधिष्ठात्रार्लोके भेदेनोपलम्भात् । तथेदमनुमानम्—विमतं कार्य्यं जगद् भिन्नोपादानाधिष्ठातृकम्, कार्य्यद्रव्यत्वाद्; रथवेश्मादिवदिति शङ्कितुरभिप्रायः ॥ १२ ॥

अत्रोच्यते जगदिदं स्वजनेः पुराऽऽसी-
दव्याकृतं सदमलं परमेव शान्तम् ।
आत्मैव नान्यदिति वेदवचोभिरेकं
चिन्मात्रमेव जगतो जनकं निरुक्तम् ॥१३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्" ( छा० ६।
"आत्मा वा इदमग्र एक एवासीत्" ( बृ० १ । ४ । १ )
रासीदमृतं न तर्हि" ( उ० नि० ) इत्यादिश्रुतिशतेन जगतः
श्चेतनकारणमात्रस्वरूपव्यतिरिक्तसमस्तवस्तुप्रतिषेधात् न त
नुमानं साध्विति समाधानं प्रतिजानीते—अत्रोच्यत इति
जगन्नामरूपात्मकं स्वोत्पत्तेः प्रागव्याकृतं मायाशबलं ब्रह्मैवा
ब्रह्म च सद्रूपं विशुद्धं शान्तं सर्वविभ्रमातीतं परमेव वस्तु
परमात्मैवासीदित्यर्थः । "नान्यत्किञ्चन मिषत्" (ऐ०
इत्यादिश्रुत्यर्थपर्यालोचनया एकं चिन्मात्रं ब्रह्मैव जगतो जनक
मुपादानञ्च भवतीति निश्चीयते । निरुक्तञ्च वेदवाक्यैरित्य

ब्रह्मैकमेव न ततो व्यतिरिक्तमासी-
द्धेत्वन्तरं विरचने जगतोऽखिलस्य।
वेदान्तसम्मतमतर्क्यमलिङ्गमच्छं
तर्कैः कथं स्वमतिजैरितरद्ब्रवीषि

एतदेव पुनर्द्रढयति—ब्रह्मेति । अखिलस्य जगतः भूवर्
विरचने निर्माणे ब्रह्मैकमेव हेतुर्न ततो ब्रह्मणो व्यतिरिक्तं हेत्वन्तरं
वेदान्तसम्मतं वेदान्तप्रमाणसिद्धम्, सृष्टेः पुरा अतर्क्यं तर्क
अलिङ्गं हेतुदृष्टान्तवर्जितम्, अच्छं वस्त्वन्तरसम्पर्कशून्यं
ब्रह्मासीदित्यन्वयः । एवं सति कथं त्वं स्वबुद्ध्युत्प्रेक्षितैस्तर्कै
रमाण्वादिवस्त्वन्तरं हेतुत्वेन ब्रवीषीति योजना ॥ १४ ॥

जातस्य सर्वमिदमात्मवपुश्च सच्च
त्यच्चाभवत्विति गिराऽखिलहेतुरुक्तः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

ब्रह्मैव चेतनमखण्डमतोऽस्य तच्चो-
पादानमेकमखिलाधिपतिर्निमित्तम् ॥१५॥

ननूत्पन्नस्य जगतो दृश्यमाननानाकारणत्वान्यथानुपपत्त्या कारणा-न्तरं कल्प्यते, सर्वापेक्षया अन्यथानुपपत्तिर्हि बलीयसीत्याशङ्क्य श्रुतिवि-रोधादेव कल्पनाया अनुत्थानान्मैवमित्याह—जातस्येति। उत्पन्नस्य च पुनः "सच्च त्यच्चाभवद्" (तै० २।६) "इदं सर्वं यदयमात्मा" (बृ० २।४।६) "ब्रह्मैवेदं विश्वम्" (मु० २।२।११) इत्यादिश्रुतिगिराखिलस्य सच्छब्दवाच्यमूर्त्तप्रपञ्चस्य त्यच्छब्दवाच्यामूर्त्तप्रपञ्चस्य च हेतुरखण्डचैतन्यं ब्रह्मैवेति निश्चीयते। अतोऽस्य प्रपञ्चस्य तच्च ब्रह्मैवोपादानं तदेकमेवाखिलाधिपतित्वान्निमित्तमित्यर्थः। तथा च नानाजगदाकारेण परिणममानमायाधिष्ठानत्वेन ब्रह्मैव नानाकारेण प्रतीयते, न तेन हेत्वन्तरं कल्प्यमिति भावः॥ १५॥

ब्रह्मेदमित्यपि समानपदत्वयोगः
सङ्गच्छते न परमं यदि हेतुमात्रम्।
वस्त्वन्तरे सति पुरा जगतो जनेर्नो
ब्रह्माद्वितीयमिति वाक्यमिहार्थवत्स्यात्॥१६॥

यद्यन्यथानुपपत्तेर्बलीयस्त्वं तर्हि श्रुतार्थान्यथानुपपत्तिरेव बलीयसी किन्न स्याद्? इत्यभिप्रेत्याह—ब्रह्मेदमिति। "ब्रह्मैवेदं सर्वम्" इति समानपदत्वयोगः समानपदत्वं समानाधिकरणत्वम्, योगः सम्बन्धः सामानाधिकरण्यरूपसम्बन्धः श्रूयमाणो न सङ्गच्छते। यदि परमं ब्रह्म हेतुमात्रं निमित्तमेव स्यादित्यर्थः। नह्यनुपादानकारणस्य कार्य्य-सामानाधिकरण्यं समञ्जसमिति भावः। वस्त्वन्तरसद्भावे सति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रागुत्पत्तेः "एकमेवाऽद्वितीयम्" ( छा० ६ । २ । १ ) इत्य यावधारणमर्थवन्न स्यादिति योजना । सजातीयादिनानात्वे नाऽद्वितीयावधारणश्रुतेर्बाध एव स्यादिति भावः ॥ १६ ॥

नैवानुमानबलतः श्रुतिसम्मतार्थं
निर्णेतुमर्हति यतो विषयो न तस्य ।
तात्पर्य्यतो हि निगमान्तगिरां स्वशक्तेः
निर्णेतुमर्हति पुमान् परमार्थवस्तु ।

न चानुमानावष्टम्भेन श्रुत्यर्थनिर्णयो युक्तः, अतद्गोचरत्व स्येत्याह—नैवेति । तस्य तर्कस्य श्रुतिसम्मतोऽर्थो ब्रह्मरूपो वि भवतीत्यर्थः । किन्तु स्वशक्तेः—शब्दशक्तेस्तात्पर्य्यानुसारेण र्थवस्तु निर्णेतुं पुमानर्हतीति योजना ॥ १७ ॥

श्रुत्युक्तलिङ्गबलतो जगतो जनेः प्रा-
गासीदखण्डममलं सुखबोधरूपम् ।
तन्माययोपहितमस्य निमित्तमस्त्यु-
पादानकारणमपीति विनिश्चितञ्च ।

एतदेव स्पष्टयति—श्रुत्युक्तेति । "एकमेवाद्वितीयम्" ( छा० ६ । २ । १) इति विशेषणानामर्थवत्त्वाय षड्विधलिङ्गगम्यत्वात् चैकरसं ब्रह्म जगतः प्रागुत्पत्तेः स्वरूपेण नित्यशुद्धबुद्धमुक्त अनाद्यनिर्वचनीयमायोपाधिकं निखिलजगदुपादाननिमित्तका युक्तमाश्रयितुम्, विनिश्चितञ्च सद्भिरिति समुदायार्थः ॥ १८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भेदानुमानमपि वेदविरोधतोऽस-
द्विश्वस्य कारणमिदं यत आत्मतत्त्वम् ।
हेतुर्निमित्तमुभयं न ततो विभिन्नं
ब्रह्मैव सर्वमिदमागममानसिद्धम् ॥ १६ ॥

यत्तूक्तम्—भिन्ननिमित्तोपादानं जगत्, कार्य्यद्रव्यत्वाद्, रथादिवदिति । तदप्यसङ्गतमिति दूषयति—भेदानुमानमपीति । जगतोऽभिन्ननिमित्तोपादानप्रतिपादकागमविरोधे सति तत्कारणभेदानुमानस्यानुविशीर्णत्वात् । रथादेः परिच्छिन्नकारणत्वाद्भिन्ननिमित्तोपादानत्वमस्तु । न तु मूलकारणस्यापि ब्रह्मणः परिच्छेदकल्पना युक्ता "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" (छा० ७ । २४ । १) इत्यादिश्रुतिप्रतिपिद्धसर्वपरिच्छेदत्वादिति तात्पर्य्यार्थः । यदपीदमुक्तम्—ईश्वरो जगदुपादानं न भवति, चेतनत्वात् कुलालादिवदिति, तदप्यसदित्याह—विश्वस्येति । कुलालादि हि जीवत्वादनुपादानं द्रव्यस्य न तु चेतनत्वादिति भावः । यदपीदमवादि—जगदचेतनोपादानम्, द्रव्यत्वाद्, घटादिवदिति, तदप्यचारु इत्याह—हेतुरिति । "आत्मन एवेदं सर्वम्" (छा० ७ । २६ । १) इति सर्वस्यागमेनैव चेतनोपादानत्वाभ्युपगमात् । न च घटादेर्मृदादिकारणान्वयव्यतिरेकविरोध इति शङ्क्यम्, मूलकारणस्यैव द्वारत्वेन मृदादेरन्यथासिद्धत्वात् । तस्माद् "ब्रह्मैवेदं सर्वम्" इति सामानाधिकरण्यप्रतिपादकागमप्रमाणसिद्धं जगतोऽभिन्ननिमित्तोपादानं ब्रह्मेति तात्पर्य्यार्थः ॥ १६ ॥

मायाप्रधानमिदमस्य चिदद्वयन्तू-
पादानमस्ति निजमुख्यतया निमित्तम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मादिदं सदनृतं सुखदुःखमिश्रं
चिज्जाड्ययुक्तमपि भात्युभयस्वभा[illegible]

यदपीदमुत्प्रेक्षितं जगतश्चेतनोपादानत्वे तस्य चेतन[illegible]
तद्दूषयति—मायाप्रधानमिति। अस्य जगत इदं चिद्रू[illegible]
मायाप्रधानं परिणममानमायाधिष्ठानत्वेनोपादानमस्ति। कि[illegible]
चैतन्यप्राधान्येन निमित्तं यस्मात् कार्ये कारणस्वभावानुगम[illegible]
तस्मादिदं जगत् सदनृतसुखदुःखचित्त्वजाड्ययुक्ततया [illegible]
विभाति, नहि केवलं चेतनमेवोपादानं वयं ब्रूमो येन [illegible]
जगतः प्रसज्ज्येत, किन्तु मायोपहितम्। तथा च "घटोऽस्ति भा[illegible]
इति सत्तातः पृथक्कृते, "घटो नास्ति न भाति" इति चोभ[illegible]
गतिः कार्य्यमात्रे दृश्यते। नहि कारणस्वभावस्य सर्वस्यानुगति[illegible]
सम्प्रतिपन्नकार्य्येऽपि कारणगतसर्वस्वभावाननुगमदर्शनात्
कार्य्ये स्वभावान्तराननुगमोऽपि सम्भवति, घटशरावादि[illegible]
कारणे विद्यमानस्य विशिष्टक्रियासमर्थस्वभावस्य सर्वलोक[illegible]
तस्माच्चेतनब्रह्मनिखिलजगन्निमित्तोपादानकारणमिति तात्पर्य[illegible]

मायाऽस्त्यनादिरखिलात्मतयाऽऽत्मशक्ति[illegible]
सैषा विवर्त्तत उदारचिदञ्चिताऽ[illegible]
नैव प्रधानमपि नाणुरपीश्वरो नै·
तन्निर्मितौ प्रभवतीह नयैर्न शून्यम्[illegible]

एवं स्वसिद्धान्तमवस्थाप्येदानीं प्रधानपरमाणुतार्किका[illegible]
शून्यादिकारणवादान् वेदविरुद्धान् दूषयिष्यन् प्रथमतो [illegible]
स्वसिद्धान्तमवलम्बते—मायेति। अनाद्यनिर्वाच्या माया [illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रात्मनश्चिद्रूपस्य ब्रह्मणः शक्तिरिव पारतन्त्र्यादिगुणविशिष्टतया तदाश्रया तद्विषया "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" (श्वे० ४ । १०) इत्यादिश्रुत्यनूदिताऽत्यन्तासम्भावितप्रदर्शिनी अस्ति। सैषा माया साक्षिप्रत्यक्षगम्या, उदारा अपरिच्छिन्ना या चिच्चैतन्यं तदञ्चिता चित्प्रतिबिम्बगर्भा अद्धा साक्षादखिलजगदाकारेण विवर्त्तते। तदधिष्ठानतयैव ब्रह्मणो जगज्जन्माद्यभिन्ननिमित्तोपादानत्वमित्यर्थः। एतन्निर्मितौ एतस्य भूतभौतिकप्रपञ्चस्य निर्मितौ निर्माणे मनसाप्यचिन्त्यरचनात्मिकायां प्रधानं कापिलपातञ्जलैरभिमतम्। यथा घटशरावादयो भेदा मृदात्मतयाऽन्वीयमाना मृदात्मकसामान्यपूर्वका लोके दृष्टाः, तथा सर्वे एव बाह्या आध्यात्मिकाश्च भेदाः सुखदुःखमोहात्मतयाऽन्वीयमानाः सुखदुःखमोहात्मकसामान्यपूर्वका भवितुमर्हन्ति। यत्तु तथाविधं सामान्यम्, तत् त्रिगुणं प्रधानमचेतनं चेतनस्य भोगमोक्षप्रयोजनार्थं महदादिविकारात्मना परिणमते। प्रधीयतेऽस्मिन् प्रलये सूक्ष्मावस्थापन्नं महदादिविकारजातमिति प्रधानम्—सत्त्वरजस्तमसां साम्यावस्थालक्षणं तत्त्वम्—नैव प्रभवति। लोके ह्यल्पतरमपि गृहप्रासादादिशिल्पं कुशलतरैरेव प्रेक्षावद्भिर्निर्मीयमाणं दृष्टम्, नाऽचेतनैः। किमङ्ग यन्मनसाऽप्यचिन्त्यरचनात्मकैकवस्तुस्वभावं जगदित्यर्थः। एवं प्रधानकारणवादं सामान्यतो निरस्य परमाणुकारणवादकाणादसौत्रान्तिकवैभाषिकार्हताभिमतं निरस्यति—नाणुरिति। यथा पटादयस्तन्त्वादिभिरवयवैरारभ्यन्ते, एवं तन्त्वादयोऽपि स्वावयवैरंश्वादिभिः, तेऽपि ततोऽपि न्यूनैः कार्प्पासावयवैरिति क्रमेणावयवपरम्परा निरवयवेषु परमाणुषु विश्राम्यतीति भूतचतुष्टयपरमाणव एव सर्गादौ द्व्यणुकादिक्रमेण महापृथिव्यादीन् आरभन्ते इति काणादगौतमीयैः, परमाणव एव क्षणिका अनियतस्वभावा बाह्याभ्यन्तरवस्त्वाकारेण संहन्यन्ते इति सौत्रान्तिकीयादिभिश्चाभिमतः अणुः परमाणुः। जातावेकवचनम्। एतन्निर्मितौ न प्रभवतीति सम्बन्धः। दध्यङ्कुरा-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दावारम्भादर्शनान्महत एव महदुपादानत्वदर्शनाच्च परमा-
भ्युपगमेऽपि तेषां संयोगासम्भवादेवं वक्ष्यमाणत्वाच्च, कचिद्
शाखावयवोत्पत्तिदर्शनात्, परिमाणभेदेऽपि प्रत्यभिज्ञया द्रव्यं
रवयवावयविनोः कार्य्यकारणभावे विनिगमनाविरहाच्चेति
अस्तु तर्हि "क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशे
( यो० सू० १ । १ । २४ ) केवलासङ्गचिद्रूपोऽन्यादृशो वा।
ङ्कुरादिकं सकर्त्तृकम्, कार्य्यत्वाद्, घटादिवदित्याद्यनुमानैः
प्रधानस्य परमाण्वादेर्वा प्रवर्त्तनेनाधिष्ठाता केवलनिमित्तकार
वदवः पातञ्जलगौतमकाणादतान्त्रिकपाशुपतान् प्रत्याह—
नेति । तार्किकाभिमत ईश्वरोऽपीहास्यां विचित्ररचनायां
प्यचिन्त्यरूपायां न प्रभवति । नयैर्युक्तिभिर्न समर्थो भवति।
नयैरनुमानैः साधितोऽपीश्वरो न प्रभवतीत्यन्वयः । अन्यत्र
नुमानसम्भवात् "तर्काप्रतिष्ठानात्" ( ब्र० सू० २ ।
परस्परविप्रतिषेधात् विशेषावधारणहेतुश्रुत्यनुसाराच्चेत्यर्थः।
तर्हि शून्यमेव जगद्धेतुः, मृतपिण्डबीजादीनां पूर्वावस्थोपमर्दे
तापत्तावेव घटाङ्कुरादिजन्मदर्शनात्। यथाऽऽहुः—"नानुपमृद्य
वात्" इति । शून्यवादिनां मतं निरस्यति—न शून्यमिति
मपि नयैरित्यत्राऽप्यनुपज्यते । युक्तिभिरेतन्निर्मितौ न प्रभवति
सर्गादौ शून्यं ससाक्षिकं निःसाक्षिकं वा हेतुरुच्यते। आ
साधकसाक्षिणः सत्त्वात्सर्वशून्यासिद्धेः । द्वितीयेऽपि सर्व
चरीभूतं साक्षिण्यभास्यमानं शून्यमेव न सिद्ध्यति, दूरे तस्य
त्वम् । बीजावस्थोपमर्देऽपि बीजाङ्कुरोभयानुगतमृदादिस्वरू
तस्यैव घटाङ्कुराद्यनेकावस्थोपादानत्वसम्भवेन दृष्टान्ताप्रतिपत्ते
वस्तु न बीजादिस्वरूपस्थायिशून्यतापादनमुपमर्दः, 
सर्ववस्तूनां सत्त्वोपगमात् । किन्त्वङ्कुराद्यवस्थया तिरोभाव
भावः ॥ २१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वातन्त्र्यमस्ति न जडस्य न चित्त्वचेष्टे
नाऽनाश्रयं किमपि कर्त्तुमिह क्षमं तत् ।
तत्साश्रयं यदि तदा श्रुतिसम्मतं स्या-
न्मायाभिधं प्रकृतिरस्य चिदाश्रया सा॥ २२॥

एवं सामान्यतो निराकृतेषु वादान्तरेषु केषाञ्चिदस्वतन्त्रप्रज्ञानां मुमुक्षूणाम् "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति जायमानञ्च पश्येत्" ( श्वे० ५ । २ ) । इत्यादिश्रुतिभिः कपिलादीनां माहात्म्य-ख्यापनात्तच्छिष्यपरम्परासु तेषां सार्वज्ञ्यादिप्रसिद्धेस्तद्दर्शितमोक्षोपा-यप्रतिपादकग्रन्थेषु भ्रमात्प्रवृत्तिः स्यात् । तथा सति अन्धगोलाङ्-गूलन्यायेन तदवलम्बने श्रौतसन्मार्गपरिभ्रंशात् पुरुषार्थाद् व्याह-न्येरन्निति सूत्रकारादिदर्शितरीत्या तन्मतानि दूषयिष्यन् प्रधानमल्ल-निर्बर्हणन्यायेन कापिलं मतमादौ निरस्यति—स्वातन्त्र्यमिति । गुण-साम्यावस्थालक्षणस्य प्रधानस्य जडस्य स्वातन्त्र्यं नास्ति । ततश्च सर्गादौ चलनेन साम्यावस्थातः प्रच्युतं सद् महदादिविकारं जनयेत् । तच्चलितुमेव न तावत्प्रभवतीत्याह—न चित्त्वचेष्टे इति । चित्त्वं चैतन्यम्, चेष्टा क्रिया तयोरसत्त्वे जडस्य प्रधानस्य स्वतश्चैतन्य-शून्यत्वात् चेतनान्तरानधिष्ठितत्वाच्च । लोके हि मृत्सुवर्णाद्यचेतनं चेत-नान्तराधिष्ठितमेव कार्योन्मुखप्रवृत्तिकं दृष्टम् । दृष्टानुसारिणी ह्यन्यत्र कल्पनेत्यर्थः । ननु यथा वत्सविवृद्धये गवादूधसः क्षीरमचेतनमेव प्रवर्त्तते, यथा वा नद्यादिजलं लोकोपकाराय स्वयमेव स्यन्दते; तथा प्रधानमचेतनमपि पुरुषस्य भोगापवर्गसिद्धये स्वत एव प्रवर्त्तिष्यते इत्या-शङ्क्याह—नाऽनाश्रयमिति । न विद्यते आश्रयोऽधिष्ठानभूतचैतन्यं यस्य प्रधानस्य तदनाश्रयं न किमपि कर्त्तुमिहास्यां विचित्ररचनायां मनसाप्यचिन्त्यरूपायां क्षमं समर्थं भवतीत्यर्थः । तत्र पयःप्रवृत्तेर्धेनु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्नेहवत्सचोषणादिचेतनव्यापारसापेक्षत्वेन जलस्यन्दनादेर्नौक्तृ
निमित्तान्तरसापेक्षत्वेनोभयत्रापि "यः पृथिव्यां तिष्ठन् पृथि
यम्" ( बृ० ३ । ७ । ३ ) इति सर्वान्तर्यामिपरमेश्व
तेश्च दृष्टान्तासिद्धेरिति भावः। यदि तत्प्रधानमचेतनमपि
क्रियेत, तदा नामान्तरेण निर्वचनीयमज्ञानं मायाभिधं माया
श्रुतिसम्मतमेव स्यात्। तदाऽस्मन्मतप्रवेशः स्याद्, यतोऽस्म
माया चैतन्याश्रया प्रकृतिरुपादानत्वेन स्वीकृताऽस्माभिरित्यं

भोगोऽप्यसङ्गिनि कथं न च भोक्तृता स्या
भोग्यस्य कोऽर्थ इह कस्य वदा
कीदृग्विवेक इह कस्य च तेन किं स्याद्
मोक्षोऽप्यसङ्गत इतोऽस्य मतश्च दु

एवमभ्युपेत्य पराभिमतौ भोगमोक्षौ, तत्सिद्धये सर्गो
सम्भवतीत्युक्तम्। इदानीं तयोरप्यनुपपत्तिरिति दर्शयति—भो
दृक्शक्तिमत्त्वात् पुरुषो भोक्ता, सर्गशक्तिमत्त्वाच्च गुणा भो
भोक्तृभोजकशक्त्योर्वैयर्थ्यं माभूदित्यौत्सुक्यात् प्रवृत्तौ भोक्तृभो
योस्तप्यतापकयोरभिमानलक्षणसम्बन्धादर्थसिद्धो भोगस्ता
सांख्याभिमतो भोगोऽपि असङ्गिनि वस्तुतो गुणसम्बन्धशून्ये,
गुणसम्बन्धप्रयुक्तातिशयानाधारे इति यावत्, एतादृशे पुरुषे
प्रकारेण स्यात् ? स प्रकारो वक्तुमशक्य इत्यर्थः। अकर्त्तैव
कर्म्मफलानां भोक्ता, प्रकृतिश्च कुर्वाणाऽप्यभोक्त्रीत्य
सांख्यानामयुक्त इत्याह—न चेति। अकर्त्तुः पुरुषस्य न
स्यात्, कृतनैष्फल्याकृताभ्यागमधर्माधर्मावबोधकशास्त्रानै
पत्तेः। ननु रजसा सत्त्वे तप्यमाने सत्त्वानुसारी पुरुषोऽपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भोक्तृत्वमुपचर्य्यते इति चेत्, न; नह्युपचारमात्रेण भोक्तृतासिद्धिः। यथाऽग्निर्माणवक इत्युपचारमात्रान्माणवको दहति प्रकाशयति वेति भावः। किञ्च प्रधानं पुरुषस्य भोगार्थं प्रवर्त्तमानं स्वार्थमपि कञ्चिदुद्दिश्यैव प्रवर्त्तेत, भृत्यदारादीनां स्वार्थपुरस्कारेणैव राजाद्युपभोगाय प्रवृत्तिदर्शनात्। न च भोक्तृशक्तिहीनस्य तस्य कश्चित्स्वार्थः सम्भवतीत्यभिप्रेत्याह—भोग्यस्येति। इह पुरुषभोगे भोग्यस्य प्रधानस्य कोऽर्थः—कः स्वार्थः? येन प्रवर्त्तेतेति शेषः। चेतनस्य प्रवृत्तिरेव स्वार्थनिबन्धना नाचेतनस्येति यद्युच्येत, तर्हि प्रयोजनोद्देशेन प्रवृत्तिरपि चेतनस्यैवेति भोगमोक्षार्थं प्रधानप्रवृत्तिरित्यसङ्गतमेवेति भावः। एतेनौत्सुक्यनिवृत्त्यर्थं प्रवृत्तिरित्यपि निरस्तम्, औत्सुक्यस्यापि चेतनधर्म्मत्वात्। ननु प्रधानपुरुषयोः पङ्ग्वन्धयोरिव प्रत्येकं प्रवृत्त्यसामर्थ्येऽप्यनाद्यविवेकप्रयुक्तपरस्पराविवेकलक्षणसम्बन्धादेकतामिवापन्नयोः प्रवृत्तिर्भोगश्च सेत्स्यतीत्याशङ्क्याविवेकं तदाश्रयञ्च दुर्निरूपत्वेन निरस्यति—कस्येति। अविवेकः प्रवृत्तेः, उत कार्य्याणाम्, किं वा पुरुषस्य धर्म्मः? नाद्यौ, अचेतनानां चेतनधर्म्मविवेकाश्रयत्वाप्रसिद्धेः। न तृतीयः, निर्विकारासङ्गचिन्मात्रस्वरूपस्याविवेकाख्यधर्म्मसम्बन्धायोगात्, अविवेकान्तरात्तदुक्तावनवस्थाद्यापत्तेः अनयैव दिशा बुद्धितद्धर्म्मैरहं ममेत्यभिमानलक्षणः सम्बन्धो निरसनीयः। अविवेकस्य दुर्निरूपत्वं दर्शयति—वदेति। भोः सांख्यवादिन्! त्वं वद, कीदृगविवेकस्तवाभिमतः इति। किं विवेकज्ञानाभावः; उतैक्यज्ञानम्; उताहो तत्संस्कारः? नाद्यः, सांख्यैरभावाख्यतत्त्वान्तरानभ्युपगमाद्, अधिकरणात्मकाभावस्य विवेकज्ञानोत्तरमपि सत्त्वेनानिर्मोक्षप्रसङ्गाच्च। न द्वितीयः, भिन्नयोरैक्यज्ञानस्याऽसद्विषयत्वासम्भवादन्यथाख्यात्यनभ्युपगमाच्चाऽनिर्वाच्यैक्यसिद्धावस्मन्मतप्रवेशापत्तेः; परैर्भ्रान्त्यात्मकविशिष्टज्ञानानभ्युपगमाच्च। अत एव न तृतीयः, अनुभवमृते संस्कारायोगादिति भावः। अविवेकोक्तदोषान् विवेकेऽपि दर्शयति—विवेक इह

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कस्येति। इह प्रकृतितत्कार्य्ययोरन्यतरस्मिन् विवेकश्चेत्
सम्भवति, पुरुषेऽप्यसङ्गत्वान्निर्विकारत्वाद्धर्म्मधर्म्मिभाव
स्यादित्यर्थः। पराभिमतविवेकज्ञानस्य मोक्षहेतुत्वं नि
किमिति। पुरुषे आध्यासिकस्य ज्ञाननिवर्त्यबन्धस्या
गुणानाञ्च नित्यत्वान्मोक्षासम्भवाद् विवेकज्ञानवैफल्या
कपिलाभ्युपगतमुक्तेरपुरुषार्थत्वाच्छास्त्रवैफल्यञ्चेत्यभिप्रेत्याह-
पीति। निःसौख्यत्वात् पाषाणादिकल्पस्तदभिमतो मो
एव। तथा च मोक्षार्थी पुरुषः शास्त्रे न प्रवर्त्ते
तन्मतनिरासमुपसंहरति—इत इति। अस्य सांख्य
मोक्षयोरयुक्तत्वादित्यर्थः। अतोऽस्य कापिलस्य मतं
शास्त्रञ्च उक्तदोषनिवहेन दुष्टम्, दोषयुक्तत्वादनुपादेय
इत्थं कापिलदर्शनस्य बहुतरतर्कगाढत्वशङ्का निरस्ता। शि
सर्वज्ञत्वसिद्धत्वादिप्रसिद्धिस्तु कणादगौतमबुद्धार्हतादिष्व
न चैषां सिद्धान्तानामैकमत्यम्, न वा कस्मिंश्चिदपि
प्रमाणमस्ति। ब्रह्मकारणत्वैकात्म्यादिपरप्रत्यक्षश्रुतिविरुद्ध
सर्वेषां समानम्। "ऋषिं प्रसूतम्" ( श्वे० ५।
श्रुतिस्तु सगरपुत्राणां प्रतप्तुर्भगवदवतारस्य माहात्म्य
नाऽवैदिककपिलस्य। न चायमेव स इति भ्रमितव्यम्
रत्वेन निराकरणव्याघातात्। अतोऽन्य एवासौ श्रुति
अन्तु कपिल इति द्रष्टव्यम् ॥ २३ ॥

संयोग एव परमाणुषु दुर्घटः स्यात्
सोऽव्याप्यवृत्तिरणुषूचित आश्रिते
स्युस्तेऽणवोऽवयविनो यदि नेष्यतेऽसौ
तेभ्यः कथं घटपटादिजगज्जनिः स्यात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं प्रधानकारणतावादं निरस्य परमाणुकारणतावादं निरस्यति—संयोग एवेति। काणादगौतमीयानामेषा हि प्रक्रिया—परमाणवः केवल दोधूयमानाः कञ्चित्कालमनारब्धकार्य्याः यथायोगं रूपादिमन्तः पारिमाण्डल्यपरिमाणाश्चाऽवतिष्ठन्ते। ततः सर्गादौ जीवादृष्टवशादीश्वरेच्छया परस्परं संयुज्य द्व्यणुकादिक्रमेण कृत्स्नं कार्य्यमारभन्ते। परमाण्वादिकारणगतरूपादिगुणाश्च क्रमेण द्व्यणुकादौ स्वसमानजातीयं गुणान्तरमारभन्ते। परमाणुद्व्यणुकगते अणुत्वह्रस्वते तु न परिमाणान्तरमारभेते, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमेनाणुजन्यस्याणुतरत्वप्रसङ्गात्। किन्तु परमाणुद्वित्वसंख्यया द्व्यणुके अणुत्वह्रस्वत्वे, द्व्यणुकत्रित्वसंख्यया च त्र्यणुके महत्त्वदीर्घत्वे चेति जायेते। परमाणवस्तु नित्या निरवयवाश्चेति तां प्रक्रियां दूषयिष्यन् परमाणुष्वाद्यक्रियाया अभावात् संयोग एव न सम्भवतीत्यभिप्रेत्याह—संयोग इति। परमाण्वोः संयोगः किमेकदेशेन ? उत कार्त्स्न्येन ? नाद्यः, एकदेशाभ्युपगमे निरवयवत्वभङ्गापत्तेरित्यभिप्रेत्याह—सोऽव्याप्यवृत्तिरिति। संयोगस्य अव्याप्यवृत्तित्वनियमादित्यर्थः। न द्वितीयः, कार्त्स्न्येन संयोगे उपचयासम्भवेन द्व्यणुकस्यापि परमाणुत्वापत्तेः; संयोगस्याव्याप्यवृत्तित्वनियमभङ्गापत्तेः निश्छिद्रे एकस्मिन्नपरस्य प्रवेशाद्यसम्भवेन कार्त्स्न्येन संयोगस्यानुभवानारोहाच्च। तत्तद्दिगवच्छेदेन कल्पितप्रदेशे संयोग इति चेत्, न; कल्पितस्य कार्य्यनिर्वाहकत्वे मायावादाभ्युपगमापत्तेः। तथा च द्व्यणुकाद्यनुत्पत्तौ कथं सृष्टिस्ते स्यात् ? अवयवावयविनोः समवाय एव सम्बन्ध इति चेत्, न; तस्य सम्बन्धिभ्यां भेदे ताभ्यामसम्बद्धस्य संयोगस्य सम्बन्धत्वादर्शनात्, सम्बन्धिव्यवस्थानुपपत्तेश्च। सम्बन्धान्तरञ्चेत्तस्यापि सम्बन्धान्तरमित्यनवस्थादिप्रसङ्गात्। किञ्च, अत्यन्तभिन्नयोः कुण्डबदरयोरिव संयोग एव सम्बन्धो न्याय्यः। स च पूर्वसिद्धयोः क्रियाधीन एवेति सम्बन्धानुपपत्तिरित्यतो द्व्यणुकादिपरम्परया घटपटादिप्रपञ्चोत्पत्तिस्तत्कथं स्याद्, न कथमपीत्यर्थः। अयं भावः—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न तावद् द्वित्वत्रित्वादिसंख्यायाः परिमाणहेतुत्वं सम्भवति। प्रलये
रात्र्यभावेन जीवानामपेक्षाबुद्ध्यसम्भवेन द्वित्वोत्पत्त्यसम्भवात्, ई
पेक्षाबुद्धेश्चानादेर्द्वित्वोत्पादकत्वाभ्युपगमे द्वित्वस्योत्पत्तिकाला
चयादनादित्वापत्तौ परमाणुद्वित्वादेर्जन्यत्वातिरिक्ततृतीयविधा
र्नाशानापत्तेश्च अपेक्षाबुद्धिनाशस्य द्वित्वादिनाशहेतुत्वाभ्युपगमात्
बुद्धेर्नाशायोगात्। अतो द्व्यणुकादिपरिमाणमेव तत्र हेतु
बलादभ्युपगन्तव्यमित्यणुतरत्वप्रसङ्गो दुर्वार एवेति ॥ २४ ॥

नेशः क्षमोऽप्यकरणोऽक्षवतोस्त्यनर्थोऽ-
धिष्ठातुमेत्यदयताद्यपि तार्किकाणाम्।
सार्वज्ञ्यमुख्यमपि नित्यमिहेशितुश्चे-
त्सर्वं भवेज्जनिभृतिक्षयकृत् सदाऽस्य ॥

इत्थं परमाणुकारणतावादे निरस्ते योगिमाहेश्वरकणभक्षाक्ष
पादानां प्रकृत्याद्यधिष्ठातृकेवलनिमित्तकारणेश्वरवादोऽप्यद्वितीयात्म
शेषपर्य्यवसिताभिन्ननिमित्तोपादानकारणत्वरूपश्रौतपक्षप्रतिपक्षत्वाद्
पतो निरसनीय एवेति तन्निरासायाऽऽह—नेश इति। तार्किका
तर्कप्रधानानामनुमानेनैव कारणतत्त्वं निरूपयतां योगिप्रभृतीनां
अकरणः करणानि बाह्याभ्यन्तरेन्द्रियाणि, एतच्छरीरगुणानाम
लक्षणम्, शरीरं बाह्योपकरणानि च गुणास्तत्तत्कार्यानुकूलेच्छाप्र
दयस्तद्रहितश्चैतन्यमात्रस्वभावोऽन्यादृशो वा ईशः पराभिमत
अधिष्ठातुमण्वादीनिति शेषः, अणून् रूपादिहीनान् परमाणून्
प्रधानञ्चाधिष्ठातुं कार्य्यानुगुणतया प्रवर्त्तयितुं न क्षमो न समर्थ
शरीरकरणोपकरणसम्पन्नश्चेतनो हि कुलालादिर्मूर्त्तं सावयवं रूप
मन्मृदादि चक्षुरादिनोपलभ्य, हस्तादिना स्पृष्ट्वा घटादिभावं नयति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्टम् । भवदभिमतेश्वरस्तु तद्विपरीतस्तद्विपरीतमुपादानं नोपलब्धुं स्प्रष्टुं वा चमत इत्यर्थः । नन्वस्तु कुलालादेरिव ईश्वरस्यापि देहेन्द्रियादिकं का हानिः ? तत्राह—अक्षवत इति । देहेन्द्रियादिमत्त्वमपीश्वरस्य चेत्तदा अक्षवत इन्द्रियादिमतः अनर्थः सुकृतदुष्कृतफलभोगलक्षणः संसारः प्रसिद्ध ईश्वरस्यापि प्रसज्ज्येत, देहादेर्भोगायतनत्वादिनियमादिति भावः। किञ्च, ईश्वरः करुणानिधिर्वीतरागः स्वतन्त्रः प्राणिदुःखनिदाने सर्गे न प्रवर्त्तेत । प्रवर्त्तमानश्च पराधीनः स्वार्थरागी वा स्यात् । तत्राद्ये तस्य प्रवर्त्तयितान्यस्तस्याप्यन्य इत्यनवस्था अस्मदादिसाम्यञ्च स्यादिति । द्वितीये दूषणमाह—एत्यदयताद्यपीति । अदयता निर्दयत्वम्, आदिपदाद्वैषम्यं गृह्यते । नैर्घृण्यवैषम्यदोष एति प्राप्नोति, विषमसृष्टिकर्त्तृत्वादीश्वरस्येत्यर्थः । कांश्चिद् देवादीन् स्वभावसुखिनः करोति, नारकानतिदुःखिनो, मानुषादीनुभयस्वभावानिति निष्कारणमेव विषमसृष्टिकर्त्तुर्वैषम्यनैर्घृण्यं प्रसज्ज्येयातामित्यर्थः । अपिशब्देन सर्गादौ प्रवृत्तिवैषम्यव्यवस्थाहेतुत्वेन प्राणिकर्म्माण्यपेक्षमाणस्य तस्याभ्युपगमेनाचेतनस्य स्वतः प्रवृत्त्ययोगात् कर्म्म ईश्वरेण फलारम्भाय प्रवर्त्तनीयम्, कर्म्मणा चेश्वरः प्रवर्त्तनीय इत्यन्योन्याश्रयापत्तिरिति द्योत्यते । नन्वसङ्गोदासीनचिद्रूप ईश्वरः प्रधानस्यामूर्त्तस्याधिष्ठानेऽस्त्वसमर्थः, नित्यज्ञानेच्छाकृतिमान् सर्वमूर्त्तद्रव्यसंयोगी तु मूर्त्तैः परमाणुभिः पृथिव्यादीन् सृजतीति युक्तमिति कणभक्षाक्षचरणयोः पक्षमपि विशेषतः परीक्ष्य निरस्यति—सार्वज्ञ्यमुख्यमपीति । चेद् यदि ईशितुः पराभिमतेश्वरस्य नित्यमनवरतमेव सार्वज्ञ्यमुख्यं भवेत्—सर्वविषयकैकज्ञानवान् सर्वज्ञस्तस्य भावः सार्वज्ञ्यं मुख्यमादि । तेन सर्वविषयकैकेच्छावत्त्वं सर्वजनानुकूलैकयत्नवत्त्वञ्च गृह्यते । तत्तद् दूषणमाह—सर्वमिति । तदा सर्वं कार्य्यं सदा भवेत्, नियतकालफलपुष्पोद्गमादिव्यवस्था न स्यादित्यर्थः । दूषणान्तरमप्याह—जनिभृतिलयकृदिति । एकस्या एवेच्छायाः सिसृक्षारिरक्षिषासंजिहीर्षारूपत्वादमोघत्वाच्च समस्तकार्य्याणां जनिरु-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्पत्तिः, भूतिः स्थितिः, क्षयो ध्वंसः, तान् करोतीति जनिभृतिक्षयकृत् अस्य प्रपञ्चस्य सदा भवेत्—यौगपद्येन कर्त्ता स्यात्। एकैककृत् सृत्वा तत्तद्वस्तूत्पत्तिक्षणातिरिक्तयोरनाद्यन्तयोः पूर्वोत्तरकालयोः कर्तृ विपर्यासमवधानाद् मोघैव, क्षणमात्रञ्च सफलेत्यसम्भावितकल्प गगनेऽपि कदाचिन्नानाकुसुमाद्यलङ्कृतारामोदयकल्पना स्यात्। सञ्जिहीर्षायामपीति। किञ्च, क्षित्यादिकं सकर्तृकमित्याद्यनुमानं सिद्ध्यन् जीवत्पुरुषकेशलोमादिदृष्टान्तसम्भवाल्लाघवाच्चोपादानाभि सिद्ध्यतु; किमन्यादृशेन। यदि च कुलालादिदृष्टान्तमेवाव बाह्योपादानसापेक्ष एवानुमीयते, तर्हि तद्वदेवेश्वरस्य कार्योत्पत्तौ शरीराद्यपेक्षापि स्यादित्यादिदोषान्तरसमुच्चयार्थोऽपिशब्दोऽत्र इति ॥ २५ ॥

> नाऽभावतोऽस्य जनिरस्त्यविशेषतो नो
> वैचित्र्यमप्यनुगतो सदितीह न स्यात्।
> केन प्रथा किमिति सर्वमपीह नेष्टं
> सर्वस्य सर्वत इतो मतमस्य दुष्टम् ॥

इत्थमर्द्धवैनाशिकानां वैशेषिकादीनां समये निरस्ते हेतु विशेषात् सर्ववैनाशिकबौद्धराद्धान्तं निरसितुमवसरः। चत्वारः बौद्धशिष्याः—सौत्रान्तिकः, वैभाषिकः, योगाचारः, माध्यमिकश्च। तत्र बुद्धेन आद्ययोर्बाह्यार्थेष्वभिनिवेशमालोक्य तदाशयानुरोधेन सर्वशून्यतालक्षणे तत्त्वे तयोर्बुद्धेरवताराय बाह्यार्थवादमभ्युपेत्य सिद्धान्तोऽभिहितः। तृतीयस्य त्वीषत्परिपक्वचित्तस्य विज्ञानमात्रास्तित्व वादेन। चतुर्थस्य मुख्याधिकारिणस्तु साक्षादेव शून्यवाद उपदिष्टः। यथाऽऽहुः—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"देशना लोकनाथानां सत्त्वाशयवशानुगाः ।
भिद्यन्ते बहुधा लोके उपायैर्बहुभिः पुनः ॥
गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणा ।
भिन्नापि देशनाऽभिन्ना शून्यताद्वयलक्षणा ॥" इति ।

तत्राऽऽद्यास्त्रयो मुख्यबुद्धसिद्धान्तनिराकरणेनैव निरस्तप्राया भगवद्बादरायणभगवत्पादादिभिः सूत्रभाष्यादिषु सर्वेषां बाह्यवादानां निरस्तत्वादिति तन्निरासाय नेह यत्यते, ग्रन्थगौरवभयादनात्मविचाराच्च; इत्यभिप्रेत्य शून्यवादिमतं निरस्यति—नाभावत इति । अत्यन्तासतः अभावादस्य प्रत्यक्षादिप्रमाणगोचरस्य भावपदार्थस्य जनिरुत्पत्तिर्नास्ति, क्वचिदपि देशे काले वा तथा न दृष्टं न श्रुतञ्चेत्यर्थः । यद्यभावाद्भावोत्पत्तिः स्यात्, चिरविनष्टबीजेभ्यः शशविषाणादिभ्यश्च सदैवाङ्कुराद्युत्पादः स्यात् । न च तथा दृश्यत इति भावः । किञ्च, बीजाद्युपमर्दस्य मृत्पिण्डाद्युपमर्दस्य शशशृङ्गादेश्च निरुपाख्यस्य वैलक्षण्याभावादङ्कुरघटादीनां परस्परवैलक्षण्यं न स्यादित्याह—अविशेषत इति । अविशेषाद् व्यावर्त्तकधर्मशून्यात् शून्याद् घटाङ्कुरादिविचित्रं परस्परव्यावर्त्तकं गुणक्रियासामान्यविशिष्टं न स्यात्, कारणवैचित्र्यं विना कार्य्ये तदयोगात् । यदि तूत्पलादेर्नैल्यादीव अभावेऽपि विशेषा अभ्युपगम्येरन्, तर्ह्यभावत्वमेव भज्येतेति भावः । किञ्च, यद् येनान्वितं प्रतीयते तत्तस्यैव विकारः, यथा कटकादयो हाटकस्य । तथा च सत्सदिति सदन्वितप्रतीतिगोचरस्य जगतः सदेवोपादानम्, नासत् । तथा सति असदन्वितत्वेनैव प्रतीतिप्रसङ्गादित्याह—अनुगत इति अभावेनाऽन्विते जगति घटोऽसन् पटोऽसन्नित्येवंरूप एवानुगतः प्रत्ययः स्यात्, न तु सन् सन्निति । न च तथा कस्यचित्प्रतीतिरस्तीति सदेवोपादानमित्यर्थः । किञ्च, ग्राहकाभावादलीकस्य प्रथैव न सिद्ध्यति, दूरापास्तं तस्य कारणत्वमित्यभिप्रेत्याह—केनेति । त्वदभिमताभावस्य प्रथा प्रसिद्धिः केन ? न तावत्प्रत्यक्षेण, अवस्तुन इन्द्रियसम्बन्धायोगात् । अत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एव सहचाराद्यग्रहान्नानुमानेनापि । नाऽप्यनुपलब्ध्या; तस्या
मानत्वानभ्युपगमात् । नापि साक्षिणा, तदभ्युपगमे सर्वशून्यत्व
क्षणिकविज्ञानानां स्वमात्रगोचरत्वात्; शून्येन तेषां सम्बन्धाघट
त्यर्थः । निर्विशेषस्याप्यभावस्य विचित्रजगज्जननस्वाभाव्ये तस्य सा
कत्वात् सर्वकार्य्याणां सर्वत्रोत्पत्तिः स्यादित्याशयेनाह—किमिवं
सर्वमपि कार्य्यं सर्वतः सर्वत्र किमिति न स्यात् ? एवं सर्वदा
त्मकञ्च किमिति न स्यात् ? इत्यपि बोद्धव्यम् । अत एव कृषीवल
नापि कृष्यादिप्रयत्नमभीष्टसिद्धिः स्यात्, अभावस्य सर्वत्रसुलभ
इत्याशयेनाह—इष्टमिति । सर्वस्य प्रयत्नं विनाऽपीष्टं सर्वमभीष्टं
किमिति न स्यात् इह सर्वस्मिञ्जगति । तथा च कृष्यादिप्र
स्यादित्यर्थः । किञ्च, सर्वशून्यताज्ञानस्य फलं नैरात्म्यलक्षणा
स्तवाऽभिमता । सा च न पुरुषार्थः, प्रत्युतानर्थ एव । नहि
दात्मनो नाशमसत्त्वं वा स्पृहयति, प्रत्युत द्वेष्ट्येव । इति शून्य
प्रणीतशास्त्रस्य वैफल्यमनर्थार्थत्वञ्चेत्यभिप्रेत्याह—इत इति ।
भोगमोक्षविरोधित्वादस्य सर्वशून्यवादिनो मतं दुष्टं सर्वथा दोषग
त्वादनुपादेयमित्यर्थः ॥ २६ ॥

नैको भवेद्बहुविधो यदि साप्तविध्यं
जीवादयो न किमितीदमिहाऽव्यवस्थ
स्यात्संशयोऽवधृतिरप्यथ बन्धमोक्षा-
नैकान्त्यमेवमिह भाति गतह्रियस्ते ॥

एवं मुक्तकच्छानां समये निरस्ते विवसनसमयः प्रसङ्गा
ते ह्येवमाहुः—जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षाख्याः सप्त पदा
सङ्क्षेपतस्तु जीवाजीवौ द्वावेव पदार्थौ । बोधात्मको

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

जडवर्गस्त्वजीव इति । तयोरेव जीवास्तिकायः, पुद्गलास्तिकायः, धर्म्मास्तिकायः, अधर्म्मास्तिकायः, आकाशास्तिकायश्चेत्यपरः पञ्चधा विभागक्रमः । अस्तिकायशब्दः पदार्थवाची । तत्र जीवास्त्रिविधाः—अर्हन्मुख्या नित्यसिद्धाः, तच्छिष्यपरम्परासु मुक्ताः; साम्प्रतिका बद्धाश्चेति । पुद्गलास्तिकायः—पृथिव्यादिचतुष्टयम्, स्थावरजङ्गमञ्चेति षोढा पूर्यते । गलति चेति व्युत्पत्तेरुपचयापचयधर्म्मा । मोक्षमार्गप्रवृत्त्यनुमेयो धर्म्मास्तिकायः । संसारस्थित्यनुमेयस्त्वधर्म्मास्तिकायः । लोकालोकाकाशभेदेनाकाशास्तिकायो द्विविधः । आद्यः,अधस्ताद्बद्धस्थानम् । द्वितीयः, उपरिष्टान्मुक्तोपसृप्यः पौरुषज्योतिः । विषयेष्वास्रावयतीत्यास्रवः—इन्द्रियवृत्ति आस्रवस्रोतः । संवृणोतीति संवरः—शमदमादिः । पुण्यापुण्याख्यसर्वकर्म्मनिर्जरहेतुत्वाद् निर्जरः—तप्तशिलारोहणादिः । बन्धः—अष्टविधं कर्म्म । तत्र आर्हतदर्शनान्न मुक्तिः, आर्हतदर्शनमप्रमाणम्, नानातीर्थङ्करदर्शितमार्गेषु को विशेष इत्येवं त्रिविधानिश्चयहेतवः सन्मार्गप्रवृत्तिविघ्नश्चेति चतुर्विधम् । क्रमाद्—ज्ञानावरणीयम्, दर्शनावरणीयम्, मोहनीयम्, अन्तरायञ्चेति चतुःसंज्ञं श्रेयोविघातित्वाद् घातिकर्म्म । मम वेदितव्यं तत्त्वम् अस्ति, तच्चैतन्नामकम्, अहमार्हतशिष्यपरम्परात्मकगोत्रप्रविष्ट इति त्रिविधज्ञानहेतवे सावज्ञानोदयं (?) जीवनसम्पादकञ्चेति चतुर्विधम् । क्रमाद्—वेदनीयम्, नामिकम्, गोत्रिकम्, आयुष्कञ्चेति चतुःसंज्ञं श्रेयोनुकूलत्वादघातिकर्म्म इत्यष्टविधं कर्म्म । विगलितसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्याऽऽत्मनः उपर्युपर्यलोकाकाशेऽवस्थानम्—मोक्षः । धर्म्माधर्म्मबन्धात् संसारे निमग्नस्य जीवस्य तत्त्वज्ञानात्तद्विच्छेदे जलतुम्बिकान्यायेन सततोद्धूर्वगमनं मोक्ष इत्यनेन बन्धमुक्तस्योद्धूर्वगमनं दृष्टम्; यथा पञ्जरमुक्तशुकस्य, यथा वा वारिनिर्भिन्नपरिणतैरण्डबीजस्य, यथा वा दृढपङ्कलिप्तजलनिमज्जनप्रक्षीणपङ्कलेपशुष्कालाबुफलस्य । इह त्वनादिकालप्रवृत्तबन्धविगमात् सततो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्धूर्वगमनमिति तेषामाशयः। एते सप्त पदार्था अनैकान्तस्वभावाः प्रतिपादनाय सप्तभङ्गीनयं नाम न्यायमवतारयन्ति। तद् यथा—स्यादस्ति स्यान्नास्ति,स्यादस्ति च स्यान्नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेति। स्यादेकः स्यादनेकः, स्याद् भिन्नः, स्यादभिन्न इति सर्वधर्म्मेषु विकल्पा बोध्याः। अस्माच्च न्यायात् सर्वानैकान्त्यसिद्धिः सप्त चैकान्त्यभङ्गाः कथं कदा कदा च प्रसरन्तीत्यपेक्षायामनन्तवीर्य्य आह—

"तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत्।
स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते॥
क्रमेणोभयवाञ्छायां प्रयोगः समुदायभृत्।
युगपत् तद्विवक्षायां स्यादवाच्यमशक्तितः॥
आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते।
अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः।
समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यते॥" इति।

सदसदुभयैकान्ते भग्ने अनिर्वाच्यत्वनियमभङ्गाय चतुर्थो भङ्गः तेष्वेव पक्षेषु तत्तद्वाद्युक्तानिर्वचनीयत्वैकान्त्यभङ्गायोत्तरे भङ्गाः। सर्वत्र 'स्यात्' इति कथञ्चिदित्यर्थको निपातः सर्वथानैकान्त्यद्योतनाय। तथा चाहुः—

"स्याद्वादः सर्वथैकान्त्यत्यागात् किंवृत्तचिद्विधेः।
सप्तभङ्गनयापेक्षो हेयाहेयविशेषकृत्॥" इति।

किंवृत्तचिद्विधेः किंशब्दचिच्छब्दगोचरत्वात् सर्वथा नैकान्त्यम्। तथाहि—यदि वस्त्वस्त्येव, तर्हि सर्वदा सर्वात्मनाऽस्त्येवेति न तदादित्साजिहासे स्याताम्; हानोपादानाभावत्वात्। अनैकान्त्ये तु कादाचित्के क्वाचित्के च ते उपपद्येते। तन्निराचिकीर्षुराह—नैक इति। एकोऽभिन्नः स्तम्भकुम्भादिरस्तित्वनास्तित्वादिविरुद्धधर्म्मैर्बहुविधः सप्तप्रकारो न स्याद्, एकत्र

धर्म्माणामसमावेशात् । समावेशे च विरोधोच्छेदप्रसङ्गात् परस्परविरोधेन धर्म्माणां मिथ्यात्वकल्पनेऽपि धर्म्मिस्वरूपस्य सदैकरूपस्यैव परिशेषाच्चानैकान्त्याभावात् । यत्परमार्थतोऽस्ति ब्रह्मतत्त्वम्, तदस्त्येव; न नास्तीत्यपलपितुं शक्यम्, आत्मापलापेऽपलापस्याप्यसिद्धेः । व्यवहारे जगद्रूपमपि व्यावहारिकप्रमाणसिद्धमधिष्ठानब्रह्मसत्तया अस्त्येवेत्येकरूपमेव । न च तथा सति क्वचिदस्ति क्वचिन्नास्तीति द्विविधव्यवहारानुपपत्तिः, सत एव वस्तुनो देशकालसम्बन्धविशेषमपेक्ष्य परिच्छिन्नरूपेण कल्प्यमानयोः सत्त्वासत्त्वयोर्वस्तुसंस्पर्शो न, तदैक्यरूप्याविरोधित्वात् । परमार्थदृष्टौ तु तत्सम्भावनैव नास्तीति धर्म्मनिरूपणे कस्मिन्ननैकान्त्यमिति भावः । किञ्च, अनैकान्त्यवादिनः पदार्थेषु साप्तविध्यप्रतिपादनानुपपत्तिस्तस्याप्यनैकान्त्यादिस्वप्रक्रियाव्याघातश्चेत्यभिप्रेत्याह—यदीति । यद्येकोऽर्थो विरुद्धसाप्तविध्यलक्षणानैकान्त्यवान् भवति, तर्हि त्वया पदार्थविभागे पदार्थेषु दर्शितं साप्तविध्यञ्च सप्तप्रकारकत्वमपि तद्वदनैकान्तिकं स्यादित्यर्थः । तथा च सप्त पदार्था इति प्रतिज्ञाविरोध इति भावः । अथवैकस्मिन् वस्तुनि विरुद्धं त्वदुक्तसाप्तविध्यलक्षणमनैकान्त्यमपि किमनेकान्तं न स्याद्, अपि तु भवेदेव । तथा च सर्ववस्तुष्वनैकान्त्यनियमासिद्धिरेवेत्यर्थः । अथवा साप्तविध्यमनैकान्तिकं न वा उभयथाप्यनैकान्त्यनियमासिद्धिः । आद्ये आत्माश्रयादिश्चेत्यभिप्रेत्याह—यदीति । किञ्च, जीवादिस्वरूपमप्यनियतरूपञ्चेत् परस्परसङ्कीर्णस्य नियतरूपेण विभागानुपपत्तिश्चेत्यभिप्रेत्याह—जीवादय इति । जीवादयस्त्वदभिमतपदार्थाः तथा—स्याज्जीवः, स्यादजीव इत्यादिभङ्गसम्भवादनेकान्तस्वभावाः किमिति न भवेयुरिति विपरिणामेन सम्बन्धः । अनियते च शास्त्रार्थे शिष्याणामनाश्वासात् प्रवृत्तिर्न स्यात् । कस्यचित्कथञ्चित्प्रवृत्तावपि धर्म्माधर्म्मयोस्तत्फलयोश्च साङ्कर्य्यादनर्थावाप्तिरपि स्यादिति भावः । न केवलं शास्त्रार्थे एव शिष्याणामेव प्रवृत्त्यनुपपत्तिः, किन्तु कस्यापि क्वापि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रवृत्त्यनुपपत्तिरन्नादौ विषादौ च तृप्तिमरणसाधनत्वानैकान्त्यात्
दित्याशयेनाह—इदमिति । अनैकान्त्ये इह तव मते इदं जगत्सर्व
मव्यवस्थं हानोपादानोपयोगिसदसद्व्यवस्थाशून्यं स्यादित्य
तथा च स्याद्वादो हेयाहेयविशेषकृदित्येतद्विपरीतमिति भावः। कि
त्वदभिमतानैकान्त्यज्ञानं विरुद्धनानाकोट्यंशविरोधाद्विरुद्धं न
कोट्यवगाहित्वादित्यर्थः। संशयः संशयात्मकज्ञानं स्याद्, एक
धर्म्मिणि विरुद्धनानाकोट्यवगाहि ज्ञानं संशय इति तल्लक्षणयो
त्यर्थः। तथा च तस्याऽप्रमात्वाच्छास्त्रस्याप्रामाण्यं स्यादिति भावः
चानैकान्त्यस्य वस्तुयाथात्म्यत्वाद् न तदवगाहने उक्तदोषः इति पु
वस्तुनि विकल्पासम्भवेन तस्य वस्तुयाथात्म्यत्वासिद्धेः। अथवा यदि
रुद्धकोट्यवगाहित्वेऽप्यनैकान्त्यज्ञानं प्रमा स्यात्, तदा स्थाणुर्वा पु
वेति संशयोऽपि तथा स्यात्। स्थाणुपुरुषयोर्भेदस्याप्यनैकान्त्यादित्य
येनाह—संशय इति। नानाकोट्यंशे विरोधात् सन्देहत्वेन सर्वा
सिद्धोऽपि प्रत्ययोऽवधृतिर्वस्तुयाथात्म्यनिश्चयः स्यादित्यर्थः। अपि
जैनैः शरीरपरिमाणो जीव इत्यभ्युपगमात् तथाविधस्य च सा
त्वावश्यम्भावाद् मनुष्यदेहपरिमितस्य बाल्याद्यवस्थाभेदे हस्तिमश
देहप्राप्तौ च व्यापनसम्मानयोरवयवोपचयापचयावन्तरेणासम्भ
चितापचितयोर्भेदादुत्पत्तिविनाशधर्म्मताप्रसक्तावभिनवोत्पन्नस्य नि
रणो बन्धो विनष्टे च तस्मिन्नन्यस्य निष्कारणो मोक्षश्च
स्थितः कल्पितः स्यादित्याशयेनाह—अथेति। अस्त्येवानैकान्त्य
अव्यवस्था तत्रेयमपराप्यव्यवस्थेति द्योतनार्थमथशब्दः। नि
योर्बन्धमोक्षयोरनैकान्त्यमव्यवस्था अस्थितिरसम्भव इति वा
अथवा निष्कारणमेव बन्धमोक्षकल्पने पूर्वमुक्तानामर्हदादीनां
प्रसङ्गः, विनैव शास्त्रीयोपायं सर्वेषां मोक्षप्रसङ्गः, ततो बन्धप्रसङ्ग
नैकान्त्यमनियमः स्यादित्यर्थः। तत्कल्पितपरमाणुकाल
पदार्थविशेषा धर्म्माधर्म्मादयो मोक्षोपायादयश्च सर्वानै

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समर्थयद्भिस्तैरेव पराहताः, न पृथग्दूषणार्हा इति स्वोक्तिव्याहतं सर्व-प्रमाणविरुद्धञ्च जैनदर्शनमिति दर्शयन्नुपसंहरति—एवमिति । इहाऽनैकान्त्यमते ते तव जैनस्य गतह्रियो गतवसनस्य निर्लज्जस्योन्मत्तस्य सर्वानैकान्त्यमेव भाति, न कुत्रापि निश्चयः । एवमुक्तदोषगणैस्तव सर्वानैकान्त्यवादो मदिरादिना मत्तस्य, ग्रहावेशादिना परवशचित्तस्य निरर्थकजल्पनमिव भाति सचेतसामिति शेषः । तथा च सर्वथाऽनुपादेय इति भावः ॥ २७ ॥

तस्माच्चिदाश्रयतयाऽखिलहेतुरेषा
मायाऽद्वितीयविषया जगतां सवित्री ।
ज्ञानेन याति विलयं न सती न तुच्छा
विश्वस्य कारणतया सदसद्विभिन्ना ॥२८॥

एवं निरस्तेषु वादिगणेषु विजयमुद्घोषयन्निव प्रकृतम् "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" ( श्वे० ४ । १० ) इति श्रौत-कारणतावादं निगमयन्नुपसंहरति—तस्मादिति । अन्यस्य कारणत्वासम्भवादेषा माया श्रुत्यनूदिता चिदाश्रयतया चैतन्यं ब्रह्मैवाश्रयोऽधिष्ठानं यस्यास्तद्भावस्तत्ता तया चैतन्याश्रयत्वेन रूपेणाद्वितीयविषया तदेव अद्वितीयं ब्रह्म विषयो यस्याः सा ब्रह्मात्मैकाश्रयविषया अखिलहेतुरखिलस्य भूतभौतिकस्य प्रपञ्चस्य हेतुरुपादानमत एव जगतां भूतभौतिक-कार्य्याणां सवित्री उत्पादयित्री । जगदाकारेण परिणममानमायाधिष्ठानत्वेनैव ब्रह्मणः कारणत्वम्, न साक्षात् । अन्यथा "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्" ( बृ० २ । ५ । १९ ) "न तस्य कार्य्यं करणञ्च विद्यते" ( श्वे० ६ । ८ ) इत्यादिश्रुतिविरोधापत्तिर्दुर्वारा स्यादिति भावः । तस्या ज्ञाननिवर्त्यत्वेन प्रपञ्चकारणत्वेन सदसद्वैलक्षण्यादनिर्वाच्यत्वं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दर्शयति—ज्ञानेनेति। एषा माया ज्ञानेन विलयं याति, तस्मान्न सद्रूपा, विश्वस्य भावरूपस्य कारणतया न तुच्छा अत्यन्ता... तस्मादेषा सदसद्विभिन्ना अनिर्वचनीयेत्यर्थः ॥ २८ ॥

कार्य्यञ्च विश्वमपि मायिकमात्मतत्त्वे
ध्यस्तं समस्तमनृताहिवदेव रज्जौ।
ब्रह्मात्मनाऽस्ति सदिदं निजरूपतोऽस-
न्नासन्न सन्न्विदमनिर्वचनीयमेव ॥२९॥

मायाकार्य्यस्य प्रपञ्चस्याप्यात्मन्यध्यस्ततया रज्जुसर्पादि... थ्यात्वमित्याह—कार्य्यमिति। ब्रह्मात्मनाऽधिष्ठानरूपेण सत्... स्याऽधिष्ठानानतिरेकादित्यर्थः। निजरूपतः अध्यस्तत्वरूपेणास... युक्तिदृष्ट्या त्वनिर्वचनीयमित्यर्थः ॥ २९ ॥

सृष्टेः पुराऽत्यसदिदं यदि तर्हि न स्या-
दुत्पत्तिरस्य शशशृङ्गखपुष्पवच्च।
सम्बन्धमप्यसदिदं न भजेत् स्वहेतौ
सम्बद्धवस्तुनि हि कारणयोग इष्टः ॥...

प्रपञ्चस्यानिर्वाच्यत्वेन मिथ्यात्वदृष्टिकरणायासत्कार्य्यवादं ... यति—सृष्टेः पुरेति। न तावत्प्रागुत्पत्तेरत्यन्तमसत्कार्यमनुत्प... न्नादाकाशकुसुमवदित्यर्थः।

नन्वाकाशकुसुमस्य कारणाभावादनुत्पत्तिर्न त्वसत्त्वात्, पुनरसतोऽपि कारणसम्भवादुत्पत्तिरविरुद्धेत्याशङ्क्यासतो घटादे... णेन सम्बन्धानुपपत्तेरसम्बद्धस्य कारणानुपयोगाद् नैवमित्याह—

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्यमिति। इदं कार्यमसच्चेत्तर्हि स्वहेतौ सम्बन्धमपि न भजेत्। सम्बद्धवस्तुनि हि घटादौ कारणस्य योग इष्ट इति योजना। यथाहुः सांख्याः—शक्तिमद्धि कारणम्, शक्तिश्च कारणनिष्ठा कार्यस्य सूक्ष्मावस्थैव। तथा च शक्त्यात्मना मृदादौ सत एव घटादेराविर्भावाय कारणान्तराणि, नासतः सत्त्वाय। असतो ह्युत्पत्त्यभ्युपगमे तत्रासत्त्वाविशेषात् सिकताभ्योऽपि तैलनिष्पत्तिप्रसङ्गात्। न चासत्त्वात् कारणेनासम्बद्धं तेनोत्पादयितुं शक्यमिति कारणोपादानवैयर्थ्यप्रसङ्गाच्च। किञ्च, असत उत्पत्तिः सती चेत्, कारणानां वैयर्थ्यम्; असती चेत्, तस्या उत्पत्तिरन्या तस्या अन्येत्यनवस्था, पटादिरूपा चेत्, पट उत्पत्तिरित्यनर्थान्तरम्। आद्यक्षणसम्बन्धोऽपि सम्बन्धिसिद्ध्यधीन इति स्वरूपतः कारणे सदेव पटाद्याविर्भवतीति सिद्धमिति। वस्तुतस्तु सत आविर्भावाय कारणकलापोपादानमिति सतोऽपि आविर्भावः सन् वा असन् वा। आद्ये, सामग्र्युपादानवैयर्थ्यम्। द्वितीये• त्वसत्कार्य्याभ्युपगमः स्याद्। इति दोषसामान्यान्न सांख्याभिमतो घटादेः स्वतः सत उत्पादलक्षणः सत्कार्य्यवादः साधुः। किन्तु यथेदानीं घटादिकं ब्रह्मसत्तयैव सत्, एवमुत्पत्तेः प्रागपि। नहि कारणब्रह्मसत्तातिरेकेण कार्य्ये पृथक् सत्तास्ति, "वाचारम्भणं विकारो नामधेयं तत्सत्यं स आत्मा (छा० ६। १। ४) तदनन्यत्वमारम्भणशब्दादिभ्यः" (ब्र० सू० २। १। १४) इत्यादिश्रुतिसूत्रप्रमाणात्। आविर्भावतिरोभावौ तु मायामयस्यानिर्वचनीयावेवेति तत्त्वम्॥ ३०॥

सामर्थ्यमस्ति यदि हेतुगमप्यलोको-
त्पत्तौ तदा खकुसुमादिकमप्यतः स्यात्
तद्योग्यतापि न च सत्त्वमसत्त्वबाधा-
न्नान्यत्स्वपक्षविलयात्तव तर्कबुद्धेः॥३१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अथ कारणव्यापारादेव तेनाऽसम्बद्धमपि किञ्चिदसद्रूपं कारणसामर्थ्यं हीदृशमित्याशङ्क्याह—सामर्थ्यमिति। यदिदं कारणनिष्ठं सामर्थ्यमलीकस्यात्यन्तासत उत्पत्तावुत्पादने, तदा... विशेषात् खकुसुमादिकमपि अतः कारणात् स्यादुत्पद्येतेत्यर्थः। असतोऽपि योग्यस्यैव कारणव्यापारादुत्पत्तिर्न सर्वस्येत्याशङ्क्य तद्योग्यतापीति। तस्याऽसतो योग्यत्वं किं सत्त्वं निरुपाख्यविलक्षणत्वम्? उत निरुपाख्यतामात्रमेव? अथवा निरुपाख्यस्यैव कश्चिद् धर्म्मः? इति विकल्प्याद्यं दूषयति—न चेति। असत्त्वबाधात्, सत्कार्य्यवादभङ्गप्रसङ्गादित्यर्थः। द्वितीये सर्वमसद्योग्यमेवेति सर्वमुत्पद्येत। तृतीये स धर्म्मोऽपि निरुपाख्य एव, तद्विलक्षणो वा? आद्ये असति असदन्तरादविशेषात्। द्वितीयं प्रत्याह—नान्योऽपि अन्यो निरुपाख्यविलक्षणश्चेत्, तर्हि सत्यः स्यात्? अनिर्वचनीयो वा? उभयथाऽपि तव तर्कबुद्धेस्तार्किकस्यासत्कार्य्यवादिनः स्वस्यासत्कार्य्यवादस्य विलयाद् भङ्गापत्तेरित्यर्थः ॥ ३१ ॥

नेदं हि सत्यमपि जन्म भजेन्न सत्त्वं
हेतोर्न वा सफलता स्वत एव सिद्धेः।
अद्वैतवादिनिगमान्तविरोधतोऽदो
विश्वं ततोऽप्युभयतोऽस्ति विलक्षणं तत्॥

एवमसत्कार्य्यवादं निरस्य सांख्याभिमतं सत्कार्य्यवादं निराकरोति नेदमिति। अयमर्थः—जन्मनः प्रागपि कार्य्यस्य घटादेः सत्त्वे कुलालादिकारकव्यापारवैयर्थ्यं स्यात्। कार्य्यसत्त्वाय हि कारकव्यापारः। तच्चेत्प्रागेव सत्, किंविषयः पुनः कारकव्यापारः स्यात्? सतोऽपि कार्य्यस्याभिव्यक्तये कारकव्यापारो न सत्त्वाय,

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न; अभिव्यञ्जकवैषम्यात् । अभिव्यञ्जको ह्यादित्यादिः स्वविषय-रूपादीन् स्वगोचरदेशस्थान् युगपदविशेषेणाभिव्यनक्ति । तथा कुला-लादिव्यापारोऽपि यदि मृदादिविषयो घटाद्यभिव्यञ्जकः स्यात्, तदा स्वगोचरमृदादिगतं घटशरावादिकार्य्यजातं युगपदेवाभिव्यञ्जयेत् । न च तथा दृश्यते, तस्मात् स्वतः सत उत्पादलक्षणः सत्कार्य्यवादोऽपि वेदान्ताभिमताद्वितीयसिद्धान्तविरुद्धत्वान्न साधुरिति मनसि निधाय आह—अद्वैतवादिनिगमान्तविरोधत इति । फलितमुपसंहरति—ततोऽपीति । तदद्दो विश्वं सृष्टेः पूर्वमुभयतो विलक्षणमनिर्वाच्य-मेवेति सिद्धमिति दिग्विजयः ॥ ३२ ॥

मायामये जगति नास्ति नयप्रवेशोऽ-
सम्भाव्यमानकलनात्मतया हि तस्याः ।
मिथ्यैव सा तदुदयस्य तथात्वमेव
ब्रह्मावबोधविनिवृत्तिरिह प्रसिद्धा ॥ ३३ ॥

नन्वेवं मायायां तत्कार्ये च विकल्प्यमाने भवदुक्तमनिर्वचनीयमपि कथं सिद्ध्येत् ? इत्याशङ्क्य सम्भाव्यमानावभासरूपत्वान्मायाया न तत्र सदसतोर्वितर्कशलाकाप्रवेश इत्याह—मायामय इति । तस्या मायाया इत्यर्थः । हीति लोकप्रसिद्धमायाया अप्यसम्भाव्यमान-रचनापटीयस्त्वं दृष्टमिति नाणुमात्रविकल्पस्यावकाशोऽस्तीत्यर्थः । तदु-क्तम्—"अलङ्कारो ह्ययमस्माकं यद् युक्तिप्रमाणाभ्यां दुर्घटत्वं सुघ-टत्वे कल्पितत्वं भवेद्" इति । वार्त्तिककारैरप्येतदुक्तम्—

"सेयं भ्रान्तिर्निरालम्बा सर्वन्यायविरोधिनी ।
सहते न विचारं सा तमो यद्वद् दिवाकरम् ॥
अविद्याया अविद्यात्वमिदमेवाऽत्र लक्षणम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्विचारासहिष्णुत्वमन्यथा वस्तु सा भवेत् ॥
यद्विचारासहिष्णुत्वं तस्यां स्यात्तदलङ्कृतिः ।" इति।

नन्वस्तु मायापरिणामत्वं प्रपञ्चस्य, तथापि न मिथ्यात्वं मायायाः "स्वाभाविकी ज्ञानबलक्रिया च" ( श्वे० ६ । ८ ) "देव शक्तिं स्वगुणैर्निगूढाम्" ( श्वे० १ । ३ ) इत्यादिश्रुतिषु ब्रह्म स्वभावत्वयोः श्रवणेन परमार्थसत्यत्वात् । तत्परिणामस्यापि तत्स त्ताकत्वानपायादित्याशङ्क्य तस्या मिथ्यात्वमुपपादयितुं प्रतिजानीते मिथ्यैवेति । सा माया मिथ्यैव स्वाधिकरणवृत्तिव्याप्यवृत्ति प्रतियोगिन्येवेत्यर्थः । अयं भावः—न त्वदुदाहृतश्रुतेस्त्वदुक्तोऽर्थः तस्या निर्गुणचिदेकरसब्रह्मस्वभावत्वे 'स्वगुणैर्निगूढाम्' 'ज्ञानबल च' इति त्वदुदाहृतवाक्यशेषविरोधात् "न तस्य कार्य्यं कार विद्यते", ( श्वे ० ६ । ८ ) "साक्षी चेता केवलो निर्गुणश्च" ( ६ । ११ ) इति पूर्वोत्तरसन्दर्भविरोधात् । स्वगुणैर्निगूढा गुणानां स्वपदविशेषणस्वारस्येन ब्रह्मसम्बन्धव्यावर्त्तनाच्च । "देवात्मशक्तिम्" इत्यस्य देव एवात्मा तात्त्विकं रूपं यस्याः स्याधिष्ठानव्यतिरेकेण तात्त्विकरूपाभावादिति वा । अन्योन्या देवस्य सर्गादिव्यवहारनिर्वाहकत्वाच्च उपचाराद् देवस्य स्व मिति वार्थः । एवं "स्वाभाविकी" इत्येतदप्यनन्याधीनत्व न कश्चिद् दोषः । ब्रह्मावबोधमात्रेण निवृत्तिश्रवणादपि तस्या त्वमित्याह—ब्रह्मेत्यादिना । ब्रह्मणः प्रत्यगभेदेनावबोधः त्कारस्तेन विशेषणसकार्य्याया निवृत्तिर्बाधो यस्याः सा वेदान्तशास्त्रे प्रसिद्धा ।

"तस्याभिध्यानाद् योजनात्तत्त्वभावाद् ।
भूयश्चान्ते विश्वमाया निवृत्तिः ।" ( श्वे० १ । १० )

इति कार्य्यैः सह निवृत्तिः प्रसिद्धैवेत्यर्थः । यद्वा, इह मिथ्याभूतेऽर्थे बहुशः मायेति गीः प्रसिद्धा, ऐन्द्रजालिकोपदर्शित

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्वादौ हि मायेयमिति सर्वजनव्यवहारः । सूत्रकृतोऽपि "मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" ( ब्र० सू० ३ । २ । ३ ) इति स्वाप्नरथादौ मायाशब्दप्रयोगः ।

"माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ! ।
सर्वभूतगुणैर्युक्तं न मां पश्यन्ति सूरयः ॥"

इति भगवताप्यवास्तवत्वेन प्रतिपिपादयिषिते विश्वरूपे मायाशब्दप्रयोगः कृत इत्यादौ प्रसिद्धेत्यर्थः । इत्थञ्च तन्तुद्वयवन्मायासमुच्चितं वा, मायाशक्तिकं वा, परिणममानमायाधिष्ठानं वा ब्रह्म जगदुपादानमस्तु, सर्वथाऽपि मायेव दुर्निरूपस्वभावत्वाज्जगन्मिथ्यैवेत्याह—तदुदयस्येति । तस्या ब्रह्मैकाश्रयविषयत्वेन प्रसिद्धाया मायायाः सकाशादुदय उत्पत्तिर्यस्य विश्वस्य तस्याऽपि तथात्वमेव मिथ्यात्वमेवेत्यर्थः ॥३३॥

यावन्न चात्मधिषणा श्रुतिवाक्यजा स्या-
त्तावन्मृषापि सकलव्यवहारयोग्यः ।
मात्रादिरस्ति निजबोधसमुद्भवे तु
ब्रह्मैव सर्वमथवाऽनृतमात्मभिन्नम् ॥३४॥

ननु न मिथ्याभूतस्यार्थक्रियासामर्थ्यम्, नहि शुक्तिरजतेन कङ्कणं कर्त्तुं शक्यम्, न वा मृगतृष्णाम्भसि स्नातुं शक्यमित्याशङ्क्य किं मिथ्याभूतस्यार्थस्य भ्रान्तिकाले तथात्वाभावः ? उत बाधकाले ? इति विकल्प्य आद्ये उत्तरमाह—यावदिति। आत्मधिषणा आत्मतत्त्वसाक्षात्कारः मात्रादिः प्रमातृप्रमाणप्रमेयादिः सर्वोऽपि पदार्थो यावद्बाधं सकलव्यवहारयोग्य एवेत्यव्याहतमित्युक्तमधस्तादित्यर्थः । स्वाप्नवधादौ च स्नानपानादि तदानीं सर्वानुभवसिद्धम्, शुक्तिरजतादेरपि पुरुषप्रवर्त्तकत्वाद्यर्थक्रियाकारिता कचिदस्त्येवेति भावः । द्वितीयेऽप्युत्तरमाह—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निजवोध इत्यादिना। तत्त्वसाक्षात्कारे जाते तु भ्रान्तेरू- सर्वमध्यस्तं प्रमात्रादिरूपं जगद्ब्रह्मैवेति। यद्वा, आत्मभिन्नं सर्वं तुच्छमेवेत्येवमुभयथाऽपि जगतो बाध एव फलित इत्यर्थः॥ ३४॥

स्वप्ने यथाऽश्वगजयानमुखं मृषापि
द्रष्टुस्तदास्ति सकलव्यवहारयोग्यम्।
जाग्रत्तथा जगदिदं व्यवहारयोग्यं
द्रष्टुर्भवेद्भ्रमजमेव मृषापि तावत्॥ ३५॥

कल्पितस्यापि यावदज्ञानभावि व्यवहारयोग्यत्वमुक्तं पुनः स्प- स्वप्नदृष्टान्तेन—स्वप्ने इति। निगदव्याख्यातं पद्यम्॥ ३५॥

अध्यस्तमात्मनि जगन्न ततो विभिन्नं
नाभिन्नमप्यतिविरुद्धतयाऽनयोः स्यात्।
नह्येकता सदसतोरपि युक्तितोऽतोऽ-
निर्वाच्यमेव निगमान्तगिरेति सिद्धम्॥

इत्थं कारणस्वरूपपर्यालोचनेन जगतो मिथ्यात्वं कल्पि- यावद्बाधं व्यवहारयोग्यत्वञ्च प्रदर्श्य "वाचारम्भणं विकारो ना- मृत्तिकेत्येव सत्यम्" (छा० ६। १। १) "तदनन्यत्वमारम्भ- दिभ्यः" (ब्र० सू० २। १। १४) इत्यादिश्रुतिसूत्रोपदर्शितरीत्या भेदाभेदाभ्यां निर्वक्तुमशक्यतया जगतोऽनिर्वाच्यत्वमितोऽप्यतो- दयन्नुपसंहरति—अध्यस्तमिति। आत्मन्यध्यस्तत्वादेव जगतः ष्ठानाद्भिन्नं न भवति। नाप्यभिन्नं सदसतोरैक्यायोगादि- अनयोरिति। ब्रह्मजगतोः सदसतोरतिविरुद्धतया, हीति लोकवेद-

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नह्येकता युक्तिसिद्धेति योजना । अत एव तदनन्यत्वमित्यधिकरणभाष्ये "अनन्यत्वं व्यतिरेकेणाभावः कार्य्यस्यावगम्यते" (ब्र० सू० भाष्य० २ । १ । १४) इति "न खल्वनन्यत्वमित्यभेदे ब्रूमः किन्तु भेदं व्यासेधामः" (ब्र० सू० भाम० २ । १ । १४ ) इति भामत्याञ्चोक्तम् । अतोऽनिर्वाच्यमेव युक्तितो वाचारम्भणश्रुत्यनुगुणतर्कैः "सर्वं खल्विदं ब्रह्म" (छा० ३ । १४ । १) "नेह नानास्ति किञ्चन" (बृ० ४ । ४ । १९) इत्यादिविधिनिषेधमुखप्रतिपादकनिगमान्तगिरा वेदान्तवाक्यैरिति सिद्धमित्यर्थः ॥३६॥

तस्माज्जनिस्थितिलया यत ईश्वरात्स्यु-
स्तद्ब्रह्म विद्धि परमात्मपदाभिधेयम् ।
वेदान्तसिद्धमखिलस्य तदेव हेतु-
र्मायासहायमखिलज्ञमनन्तशक्ति ॥ ३७ ॥

एवं स्वसिद्धान्तं जगतोऽनिर्वाच्यत्वेन मिथ्यात्वं प्रसाध्य तत्पदार्थस्य मायाशबलस्य ब्रह्मणो जगज्जन्माद्यभिन्ननिमित्तोपादानकारणत्वव्यवस्थापनं परमप्रकृतमुपसंहरति—तस्मादिति । "यतो वा इमानि भूतानि जायन्ते" ( तै० ३ । १ । १ ) ।

"यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिँश्च प्रलयं यान्ति पुनरेव युगक्षये ॥"

(म० भा० अनु० अ० २५४ । ११) "जन्माद्यस्य यतः" (ब्र० सू० १ । १ । २) इत्यादिश्रुतिस्मृतिसूत्रेभ्यो यत ईश्वराद् मायोपहितचैतन्यादखिलस्य भूतभौतिकप्रपञ्चस्य जनिस्थितिलयाः स्युः, तत्परमात्मपदाभिधेयं ब्रह्म विद्धि—"तद् विजिज्ञासस्व तद्ब्रह्म" (तै० ३ । १) इति भृगुवल्ल्यां प्रतिपादितरीत्या जानीहि । यद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावतया वेदान्तप्रतिपाद्यं तदेव मायासहायं मायोपहितं सत् सर्वज्ञं सर्वशक्ति सर्वस्य हेतुरभिन्ननिमित्तोपादानमिति वेदान्तसिद्धमिति योजना ॥ ३७ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्ब्रह्म शक्तिशबलं वियदादिविश्वं
सृष्ट्वा क्रमेण निजवीक्षणतो विचित्रम्।
नानेव भाति जगदीश्वरजीवभेदा-
देकं विशुद्धमपि यद्वदुपाधितः खम्॥३

नन्वित्थं भवदुक्तदिशा प्रपञ्चजन्माद्यभिन्ननिमित्तोपाद- ब्रह्मैव "सर्वं खल्विदं ब्रह्म" (छा० ३। १४। १) इत्यादिश्रु- च्चेत्तर्हि जगज्जीवेश्वरादिभेदप्रतीतिः किंनिबन्धना इत्याशङ्क्य तत्कार्य्यरूपोपाधिनिबन्धनैव भेदप्रतीतिरित्यभिप्रेत्याह— तत्परिणममानमायाधिष्ठानत्वेनाभिन्ननिमित्तोपादानं ब्रह्म वस्तु- मद्वितीयं विशुद्धमपि शक्तिशबलं मायोपहितं सत् "तदैक्षत बहु (छा० ६। २। ३) इत्यादिश्रुतिसिद्धनिजवीक्षणतो वियदादि- साधारणं क्रमेण—"तस्माद्वा एतस्मादात्मनः आकाशः सम्भूत शाद्वायुः" (तै० २। १। १) इत्यादिश्रुतिसिद्धक्रमेण भौतिकरूपमसाधारणञ्च सृष्ट्वा जगद्भूतभौतिकरूपम्, ईश्वर जीवाः प्राणधारणोपाधिविशिष्टाः तेषामन्योन्यभेदः जगदीश्वरजी- नानेव भाति प्रतीयते। तत्र दृष्टान्तः—यद्वदिति येन प्रकारेण घटमणिकमल्लिकाद्युपाधिभेदेन खमाकाशं नानेव प्रतीयते योजना॥ ३८॥

सर्वेश्वरोऽखिलगुरुः पुरुषोत्तमोऽतः
सृष्ट्वाऽखिलं स्थिरचरात्मकदेहजालम्।
जीवात्मना स च विभुः प्रविवेश तत्र
स्वस्मिन् स्थितोऽपि बहुधा प्रविभाति शुद्ध

"तत्सृष्ट्वा तदेवानुप्राविशद्" ( तै० २ । ६ । १ ) इत्यादिश्रुत्यर्थ-पर्यालोचनया ब्रह्मैव जीवरूपेण चराचरदेहेषु प्रविष्टमिति दर्शयंस्तत्प-दार्थं भगवन्तं वासुदेवं सर्वाकारेण ध्येयत्वेन ज्ञेयत्वेन च वर्णयति—सर्वेश्वर इति । "एष सर्वेश्वरः" ( बृ० ४ । ४ । २२ ) इति श्रुतेः, अत एवाखिलस्य ब्रह्मादेर्विश्वस्य गुरुः सर्वकलोपदेष्टा पुरुषोत्तमो भगवान् वासुदेवः तत्र देवादिदेहान् सृष्ट्वा स्वयं जीवात्मना प्रविवेश, "क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत" ( गी० १३ । २ ) इति भगवद्वचनात् । स्वस्मिन् स्वे महिम्नि स्थितोऽपि स्वतः शुद्धोऽपि सर्वभेदविनिर्मुक्तोऽपि बहुधा नानारूपेण प्रविभातीत्यर्थः ॥ ३९ ॥

> व्योमादिविश्वमखिलं निजमाययेशः
> कुर्वन्नसङ्गवपुषा स्वमहिम्नि भूम्नि ।
> तिष्ठन्न मायिकगुणैः समवैत्यलिप्तः
> स्वात्मावबोधविनिवृत्तगुणप्रवाहः ॥४०॥

मायया कर्त्तृत्वादिरूपेण सर्वं कुर्वन्नपि नित्यकूटस्थतया निर्लेप एवास्तीत्याह—व्योमादीति । स्वमहिम्नि भूम्नि अपरिच्छिन्नस्वभाव-तयाऽखण्डमहिम्नि तिष्ठन् नित्यं तत्स्वरूप एव भगवान् वासुदेवो मायिकगुणैः कारणस्वरूपैर्न समवैति—तल्लेशेनापि न सम्बध्यते । तत्र हेतुः—अलिप्त इति । अखण्डाद्वैततया असङ्गो नित्यकूटस्थ इत्यर्थः, "असङ्गो नहि सज्जते" ( बृ० ४ । ४ । २२ ) इति श्रुतेः । तत्रापि हेतुः—स्वात्मेत्यादिः । स्वात्मावबोधेन नित्यनिरावरणस्वरूपज्ञानमहिम्ना विशेषेण नित्यमेव निवृत्ता गुणात्मिका माया तत्कार्य्यं संसाररूपः प्रवाहश्च यस्मिन् स चेति विग्रहः ॥ ४० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सृष्टिस्थितिप्रलयकारणताविशुद्धे
मायाश्रये भगवतीश्वर आत्मतन्त्रे।
आरोपितात्मसहसैव निवृत्तमाये
वेदान्तगीर्भिरिति निश्चितमात्मविद्भिः॥

ननु जगज्जन्मादिकारणत्वाक्रान्तस्य कथमलिप्तत्वमित्याशङ्क्याह सृष्टीति। वस्तुतो नित्यविशुद्धे भगवति सृष्ट्यादिकारणता आरोपिता। तत्र हेतुगर्भं विशेषणम्—मायाश्रय इति। मायाधिष्ठाने तदधिष्ठानमात्रमेव कारणत्वम्।

तदुक्तम्—"अपूर्वानपरं ब्रह्म तस्य कार्य्यं न कारणम्।
अधिष्ठानत्वमात्रेण कारणं ब्रह्म गीयते॥" इति।

तथा च तस्य निर्लेपत्वमव्याहतमित्यर्थः। एतदेव विशेषणत्रयेण विशदयति—ईश्वर इति। कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थ एवात्मतन्त्रे सर्वत्र हेतुः—आत्मेत्यादिः। स्वरूपप्रकाशेनैव निवृत्ता माया यस्मिन् इत्युक्तविशेषणविशिष्टं तत्त्वं वेदान्तवाक्यैस्तत्त्वविद्भिर्विनिश्चितमिति योजना॥ ४१॥

तस्मादयं हि भगवान् परमेश्वरत्वा-
दज्ञानहेतुकभवाम्बुधिकर्णधारः।
आराध्य आत्मपदबोधसमुद्भवार्थं
मोक्षेप्सुभिः सततमादरतोऽतिभक्त्या॥

सकलवेदान्तरहस्यतत्त्वज्ञानं भगवद्भक्त्यधीनं "यमेवैष वृणुते तेन लभ्यः" (मु० ३।२।३) "यस्य देवे परा भक्तिः" (श्वे० ६।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥"

(गी० ७ । १४) "तदभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्य्ययौ" (ब्र० सू० २ । ३ । १३) इत्यादिश्रुतिस्मृतिसूत्रकदम्बैर्भगवद्भक्तिरेव सकलपुमर्थपर्य्यवसायिनी मुमुक्षुभिरादरेण कर्त्तव्यत्वेन विहितेत्याह—तस्मादिति । यस्मात् संसारतरणोपायोऽन्यो नास्ति तस्माद् अयं हि स्वभक्तानां नित्यापरोक्षो भगवान् भजनीयगुणैरलङ्कृतः परमेश्वरत्वादनन्तकल्याणगुणो मुमुक्षुभिरात्मपदस्य ब्रह्मैक्यस्य बोधस्तदुत्पत्तये सततमनवरतमादरतस्तत्परत्वेन अतिभक्त्या अतिशयेन भक्तिर्भजनं तया आराध्यः । आराध्यत्वे हेतुः—अज्ञानेत्यादिः । अज्ञानहेतुको यो भवाम्बुधिः संसारसमुद्रस्ततः पारोत्तारणे कर्णधारः । नहि भगवन्तं विहाय कोऽप्यन्यः संसारतारकः प्रसिद्धोऽस्ति । तथा च स एवाचार्य्यरूपेण स्वात्मरूपेण च साक्षात् तत्त्वबोधदानेनोद्धर्त्तेति भावः ।

"तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि न चिरात् पार्थ ! मय्यावेशितचेतसाम् ॥"

(गी० १२ । ७) ।

इति भगवद्वचनादिति ॥ ४२ ॥

यावन्न कृष्णपदपद्मयुगे सुखाब्धौ
प्रेम्णाऽर्पिता स्वमतिरुज्ज्वलभावनाढ्या ।
तावच्चिदद्वयसुखात्मविबोधसिद्धौ
नास्ति प्रवृत्तिरपि मोक्षफलावसाना ॥४३॥

एतदेव व्यतिरेकमुखेन द्रढयति—यावदिति । यावत् स्वमतिः श्रवणादिनवधाभक्त्या उज्ज्वला तद्व्यतिरिक्तरसानाक्रान्ततया अत्यन्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वच्छा या भावना तया युक्ता प्रेम्णा अनुरागेण कृष्णपदारविन्द सुखाम्बुधौ नार्पिता भवेत् तावत्प्रत्यगभिन्नाद्वयानन्दतत्त्वावबोध प्रयोजनिका या वेदान्तश्रवणादौ प्रवृत्तिः सा मोक्षफला नास्ति न भवेत्, किन्तु श्रममात्रैकफला, अनर्थपर्य्यवसायिनी स्यादित्यर्थः ॥ ४३ ॥

तत्त्वंपदार्थपरमेश्वरजीवभेदा-
ध्यासैकहेतुविनिवृत्तिकरीशभक्तिः ।
प्रेम्णाऽत एव पुरुषोत्तमपादपद्मे
स्वान्तं समर्प्य फलसङ्गमृते स सेव्यः ॥

सकलानर्थोन्मूलिनीं भगवद्भक्तिमुपपादयंस्तत्प्रकारं दर्शयति तत्त्वमिति । तत्त्वंपदार्थयोः परमेश्वरजीवयोर्यो भेदाध्यासस्तस्यैक हेतुः कारणमज्ञानं तस्य विशेषेण सकार्य्यस्य निवृत्तिकरी ईशस्य श्रीकृष्णस्य भक्तिरित्यर्थः । अत एव पुरुषोत्तमपादपद्मे स्वान्तमन्तःकरणं समर्प्य स भगवान् पुरुषोत्तमः फलसङ्ग सेवनीय इति योजना ॥ ४४ ॥

तत्सेवयैव विमले सुविवेकयुक्ते
वैराग्यशान्तिमुखसाधनयोग्यताढ्ये ।
स्वान्ते स्वयं निजसुखात्मचिदद्वयाच्छं
प्रादुर्भवेन्मुकुर आत्ममुखं यथाच्छे ॥

सेवनफलं स्पष्टयति—तदिति । तस्य भगवतो वासुदेवस्य निर्मले सुष्ठुविवेकयुक्ते अत एव वैराग्यादिसाधनैर्या योग्यता

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्कारार्हता तया सम्पन्ने स्वान्ते चेतसि स्वयमनायासेन निजसुखात्मकं चिदद्वयं स्वच्छं स्वरूपं प्रादुर्भवेत्, स्वच्छे दर्पणे स्वकीयं मुखमिवेति योजना ॥ ४५ ॥

आकाशवायुशुचिवारिभुवो विवर्त्ता
यस्यात्मनो भगवतो स्युरनन्तशक्तेः ।
स्वज्योतिषाऽपगतसंसृतिदोषमूर्त्ते-
स्तद्भक्तिरेव भवबीजनिवृत्तिहेतुः ॥४६॥

भगवद्भक्तेरवश्यकर्त्तव्यतां प्रदर्शयन् प्रपञ्चस्य भगवद्विवर्त्तत्वं दर्शयति—आकाशेति । स्वज्योतिषां स्वरूपप्रकाशमहिम्नैवापगतः संसृतिरूपो दोषो यस्याः सा मूर्त्तिः स्वरूपं यस्य तस्य भक्तिरेव भवबीजस्याविद्यादेर्निवृत्तिहेतुरित्यर्थः। तस्य कस्येत्यपेक्षायामाह—आकाशेत्यादिना। यस्यात्मनः प्रत्यक्तत्त्वस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य भगवतो भजनीयगुणगणालङ्कृतस्य श्रीकृष्णस्य आकाशादयो विवर्त्ताः स्युस्तस्येत्यर्थः। आकाशादिविवर्त्ताधिष्ठानत्वे हेतुः—अनन्तशक्तिरिति ॥४६॥

स्वाध्याययज्ञतपआदिजशुद्धियुक्ता
धीरा विवेकविरतिप्रभृतीड्यगुणयाः ।
श्रीवासुदेवपदयुग्मसरोजगन्धं
नित्यं भजन्ति परया श्रुतिजन्यभक्त्या ॥४७

भगवद्भक्तिरपि भगवदाज्ञापालनलक्षणस्वधर्म्माचरणेनैव पुरुषधौरेयाणां जायते इत्याह—स्वाध्यायेत्यादिना । स्वाध्यायादिस्वधर्म्माच-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रणेनैव शुद्धान्तःकरणा अत एव धीरा विषयैरक्षुब्धचित्ताः, तत्र हे...
विवेकेत्यादिः। विवेकवैराग्यादय ईड्याः स्तुत्या ये गुणास्तैः ...
सन्तः नित्यमनवरतं श्रीवासुदेवपदारविन्दमकरन्दसुगन्धं भ्रम...
परया प्रेमलक्षणया भक्त्या भजन्तीति सम्बन्धः। श्रुतिजन्यभक्तेः
श्रुतिः—श्रवणम्, कीर्त्तनादेरप्युपलक्षणमेतत्।

> "श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्।
> अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥"
>
> (भा० ७।५।२३) ...

तत्रैकाङ्गस्यापि प्राधान्यविवक्षया श्रुतिमात्रस्य ग्रहणम्। तदुक्तं
> "श्रीविष्णोः श्रवणे परीक्षिदभवद्वैयासकिः कीर्त्तने।
> प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने॥
> अक्रूरस्त्वभिवन्दने कपिपतिर्दास्ये च सख्येऽर्जुनः।
> सर्वस्वात्मनिवेदने बलिरभूत् कृष्णाप्तिरेषां परम्॥" इति।

> ज्ञानं तदैक्यविषयं स्वयमेव तेषाम्
> प्रादुर्भवेत्तत इहैव विमुक्तबन्धाः।
> तिष्ठन्ति नित्यसुखमोक्षपदे विशुद्धे
> विध्वस्तभेदधिषणा कृतकृत्यतृप्ताः॥४...

भगवत्पदाम्भोजानुरागिणां तत्त्वज्ञानं तत्फलं मोक्षप्राप्तिश्चा...
सिद्ध्यतीत्याह—ज्ञानमिति। तेन परमात्मना तत्पदार्थेन त्वंप...
प्रत्यक्तत्त्वस्यैक्यमेव विषयो यस्य ज्ञानस्य तत्तदैक्यविषयं ज्ञानं ...
स्वप्रयत्नं विनैव भगवत्प्रसादादेव तेषां परया भक्त्या भगवन्तं ...
प्रादुर्भवेत्। तत इहैवास्मिन्नेव शरीरे विध्वस्ता तत्त्वज्ञानेनाज्ञान...
बाधिता भेदधिषणा जगज्जीवत्वादिभेदप्रतीतिर्येषां ते विमुक्त...

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रमातृत्वादिबन्धविनिर्मुक्ताः सन्तः अत एव कृतकृत्यतया तृप्ताः सन्तः नित्यसुखं मोक्षाख्यं यत्पदं विशुद्धं निरञ्जनाख्यं तस्मिंस्तिष्ठन्ति—तद्रूपा भवन्तीत्यर्थः ॥ ४८ ॥

स्वाविद्ययाऽऽवृतधियां भगवत्पदाब्जाद्
वैमुख्यमेव भवमृत्युभयाम्बुराशौ ।
पातैकहेतुरिति निश्चितमागमान्तै-
स्तस्मात्तदङ्घ्रिकमले निरता महान्तः ॥ ४९ ॥

स्वस्वरूपावरणेन भगवत्पराङ्मुखत्वमेव संसारसिन्धुपातहेतुः, तस्मात् तदाभिमुख्यमेवावश्यं सम्पादनीयमित्याह—स्वाविद्ययेति । स्पष्टार्थं पद्यम् ॥ ४९ ॥

विश्वं समस्तमजडं जडमात्मनीशेऽ-
ध्यस्तं समूलममृतेऽनुगतेऽच्छबोधे ।
दृश्यं विहाय तत आत्मपदं विशुद्धं
ब्रह्मैक्यमेव सुधियो हि विदन्ति तत्त्वम् ॥ ५० ॥

अत एव भगवद्भक्ताः सम्यग् वेदान्तरहस्यं दृश्यात्यन्ताभावोपलक्षितं नित्यसुखं ब्रह्मैक्यमनायासेन जानन्तीत्याह—विश्वमिति । समूलमविद्यासहितं समस्तं विश्वं जडं घटादिदृश्यरूपमजडं प्रमातृत्वादिरूपमात्मनीशे मायोपहिते, वस्तुतोऽमृते नित्यमुक्तस्वभावे, अनुगते व्यापकचैतन्ये, अच्छबोधे शुद्धज्ञानस्वरूपेऽध्यस्तम् । तत्र ये सुधियो हरिभक्तिशोधितान्तःकरणा दृश्यमविद्यातत्कार्यं विहाय मिथ्यात्वेन बाधितं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विनिश्चित्य ततो दृश्याद् विलक्षणमात्मपदमतो विशुद्धं ... मखण्डैकरसं तत्त्वमनारोपितम्, हि श्रुत्यादिप्रसिद्धम्, विदन्ति ... त्कुर्वन्तीत्यर्थः ॥ ५० ॥

संसाररोगपरिपीडितचित्तदेहा
आब्रह्मलोकमवधीरितभोगवाञ्छाः ।
शान्त्यादिसाधनगणैरजरामराख्यं
जिज्ञासवोऽभयपदं गुरुमाश्रयन्ते ॥५१॥

येन क्रमेण जानन्ति तं क्रमं दर्शयन्नधिकारिविशेषणं दर्शयति संसारेति। संसार एव दुश्चिकित्स्यव्याधितया रोगस्तेन परित: समन्तात् पीडितश्चित्तरूपो देहो येषान्ते यतः सर्वत्र क्षयातिशयादि दृष्ट्या आब्रह्मलोकं तत्पर्य्यन्तमवधीरिता तिरस्कृता भोगवाञ्छा यैः तेन सम्यग् विवेकवैराग्यसम्पन्ना इति फलितम्। ततः शान्त्यादि साधनगणैः संयुता अजरामराख्यं जरामरणोपलक्षितसर्वसंसार विनिर्मुक्तमभयपदं ब्रह्म जिज्ञासवो ज्ञातुमिच्छवो गुरुमात्मवेत्तारं माश्रयन्ते—सेवाप्रणिपातादिभिरनुकूलयन्तीत्यर्थः ॥ ५१ ॥

तेनोपदिष्टपरमैक्यमखण्डतत्त्वं
वेदान्तगीर्भिरनुचिन्त्य नयैरवेक्ष्य ।
बुद्ध्वा स्वयं सुखघनं प्रविशन्ति धाम
स्वाराज्यलाभकृतकृत्यतयाऽभितृप्ताः ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेनेति । सेवादिना स्वस्मिन् प्रसादाभिमुखीकृतेन गुरुणोपदिष्टं परमैक्यम्—परा उत्कृष्टा मा प्रमा ययोस्तत्त्वंपदलक्ष्ययोस्तौ परमौ तयोरैक्यमखण्डतत्त्वं वेदान्तगीर्भिस्तत्त्वमस्यादिवाक्यैः, नयैः श्रुत्यनुकूलतर्कैरनुचिन्त्य मननं कृत्वा, अवेक्ष्य निदिध्यासनं कृत्वा, स्वयं स्वानुभवेन बुद्ध्वा—अयमहमस्मीति साक्षात्कृत्य स्वेनैव राजत इति स्वराट् ब्रह्मतत्त्वं तस्य भावः स्वाराज्यं तस्य लाभस्तेन स्वाराज्यलाभेन कृतं कृत्यं यैस्ते तद्भावस्तत्ता तयाऽभितस्तृप्ता निरङ्कुशां तृप्तिं प्राप्ताः सन्तः सुखघनमानन्दैकरसं धाम स्वज्योतीरूपं प्रविशन्ति तत्स्वरूपा भवन्तीत्यर्थः ॥ ५२ ॥

कार्य्या मनुष्यवपुषा श्रुतिसारबोध-
प्राप्त्यै हरौ रतिरतो यत एव धीरैः ।
गोविन्दपादरतिभिः परमं पदं तत्
प्राप्यं सुखेन न चिरं भगवत्प्रसादैः ॥५३॥

अतिदुर्लभमधिकारिशरीरं प्राप्यैतदेव सम्पादनीयमित्याह—कार्य्येति । यतोऽन्यथागतिर्नास्तीत्यतः श्रुतिसारो ब्रह्मैक्यं तद्बोधप्राप्त्यै मनुष्यवपुषाऽधिकारिशरीरेण धीरैः हरौ रतिरेव कार्य्येत्यन्वयः । कुत इत्यत आह—यत इति । गोविन्दपादयो रतिरनुरागो येषान्ते तैरत एव भगवतः प्रसादोऽनुग्रहो येषां ( येषु ? ) ते तैर्भगवदनुगृहीतैस्तदेतत्परमं पदं सुखेनानायासेन, न चिरमप्रतिप्रतिबन्धेन प्राप्यं भवति, नान्यैरित्यर्थः ॥५३॥

माया यदाश्रिततयाऽखिलविश्वहेतु-
र्विक्षेपशक्तिरखिलानपि मोहयन्ती ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जीवान् स एव निगमान्तविनिश्चितोऽद्धा
सर्वेश्वरोऽखिलगुरुर्भगवत्पदार्थः ॥५४॥

ननु ब्रह्मादयो भगवत्त्वेन बहवः श्रूयन्ते, तत्र को वा मुख्यो भगवत्पदार्थः ? यत्रानुरागोऽव्यभिचारेण कर्त्तव्यः स्यादिति तत्राह—"मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" ( श्वे० ४ । १० ) श्रुतेर्माया यदाश्रितरूपेणाऽखिलस्य विश्वस्य हेतुर्भवति विचित्रकार्य्योत्पादिका शक्तिर्यस्याः सा अखिलान् ब्रह्मादीनपि मोहयन्ती वरीवर्त्ति, स एव मायानियन्ता सर्वेश्वरत्वेन श्रुतिः अखिलानां ब्रह्मादीनामपि गुरुरखिलकलोपदेष्टा भगवान् अद्धा साक्षात् निगमान्तविनिश्चितो भगवत्पदार्थः "एष ... ( क० ५ । १२ ) "एष सर्वस्येशानः" ( बृ० ५ । ६ । १ ) "एष ... धिपतिरेष लोकपालः" ( कौ० ३ । ८ ) ।

"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।" ( गी० ७ । ... )
"मयाऽध्यक्षेण प्रकृतिः सूयते स चराचरम् ॥" ( गी० ९ । ... )

इत्यादिश्रुतिस्मृतिकदम्बैः प्रतिपादितो मुख्यो भगवच्छब्दः श्रीकृष्ण एवेत्यर्थः ।

"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्त्तते ।
श्रीकृष्णो भगवच्छब्दः सर्वकारणकारणे ॥"

इति विष्णुपुराणवचनात् ॥ ५४ ॥

साकल्यतोऽखिलगुणा भगशब्दवाच्या
वैराग्यधर्म्मयशऐश्वरबोधलक्ष्म्यः ।
यस्मिन् वसन्त्यखिलदोषविवर्जितास्तेऽ
सावीश्वरोऽस्ति जगतां भगवत्पदार्थः ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"ऐश्वर्य्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥"

इति स्मृतौ समग्रस्येति सर्वत्रान्वेति । तेन समग्रैश्वर्य्यादिसम्पन्नस्यैव सर्वेश्वरस्य भगवत्त्वं मुख्यमित्यभिप्रेत्याह—साकल्यत इति । साकल्येनाखिलगुणवैराग्यधर्म्मयशऐश्वर्य्यबोधलक्ष्म्यो भगशब्दवाच्यत्वेन शास्त्रप्रसिद्धास्ते यस्मिन् निखिलदोषसम्पर्कशून्या वसन्ति, न कदापि वियुज्यन्ते; असौ भगवत्पदार्थो भगवच्छब्दार्थो मुख्यो जगतां ब्रह्मादीनां तदधिष्ठितलोकानां चेश्वरो नियन्ताऽस्तीत्यविवादमित्यर्थः । तथा चान्यत्र भगवच्छब्दप्रयोगो गौण एवेति भावः ॥ ५५ ॥

स्वातन्त्र्यमेव परमेश्वरभावचिह्नं
तत्तत्पदार्थगतमक्षयमाहुरेतत् ।
नाविद्ययावृतधियां क्वचिदक्षतं स्यात्
किन्त्वीश्वरार्पितधियां तदनुग्रहेण ॥५६॥

ननु ब्रह्मादीनां भगवत्त्वमौपचारिकम्, मुख्यन्तु भगवतो वासुदेवस्यैव, तत्र किं नियामकमित्याशङ्क्य निरङ्कुशस्वातन्त्र्यमेव नियामकमित्याह—स्वातन्त्र्यमेवेति । परमेश्वरभावस्य सर्वेश्वरत्वस्य चिह्नमसाधारणधर्म्मः स्वातन्त्र्यमेव । तच्च स्वातन्त्र्यं तत्पदार्थे भगवति वासुदेवे गतं तत्रैवाधिष्ठितम्, अक्षयमविनाशि आहुः श्रुतयः स्मृतयश्चेत्यर्थः । निरवधिकानतिशयस्वातन्त्र्यं भगवत्येव पर्य्यवसन्नमित्यर्थः । एतत् स्वातन्त्र्यमविद्यावृतधियां मायाच्छादितचेतसां क्वचिद्देशे काले वा क्षतमव्यभिचारि न भवति, किन्त्वीश्वरार्पितधियां भगवदर्पितबुद्धीनां तस्यैव भगवतोऽनुग्रहेण भवति, तदपि न सर्वथा निरङ्कुशम्, यथा ब्रह्मादीनां भगवत्पारतन्त्र्यमावश्यकमित्यर्थः ॥ ५५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैराग्यधर्म्मयशआदिगुणा जनानां
नारायणार्पितधियामपवर्गनिष्ठाः।
आराध्य एष भगवानत आदरेण
प्रेम्णा मुमुक्षुभिरुदारगतीप्सुभिश्च॥

अतो वैराग्याद्यैश्वर्यसिद्धये भगवान् वासुदेव एवाराधनीयो मु
भिरित्याह—वैराग्येति। नारायणार्पितधियां वैराग्यादयो गुणा
निष्ठा मोक्षपर्यवसायिनो भवन्ति। अतो मुमुक्षुभिरादरेणैव भगव
रायण आराध्यः,

"आदरेण यथा स्तौति धनवन्तं धनेच्छया।
तथा चेद्विश्वकर्त्तारं को न मुच्येत बन्धनात्॥"

इति वचनात्। उदारगतीप्सुभिश्च चस्त्वर्थे उदारः अपरि
गुणगणास्पदं भगवान् वासुदेवः स एव गतिः, यद्वा, उदारा
वर्गपर्यन्तं पदार्थमात्राभिलापशून्यानां प्रह्लादादीनां पुरुषार्थ
गतिः प्राप्यतया फलं सौन्दर्यमाधुर्य्यसौष्ठवाद्यनन्तकल्याणगु
लङ्कृततया सगुणमूर्त्तिस्तदीप्सुभिस्तन्मात्राभिलापिभिः भक्तियु
प्रेम्णा अनुरागेणैव भगवान्नारायणः प्रह्लादादिवद् भोगमोक्षाभिला
निरुपाधिपरप्रेमास्पदतया आराध्यो नैरन्तर्येण सेव्य इत्यर्थः।
च तदाराधनमेव परमपुरुषार्थपर्यवसानभूमिरिति भावः॥५६॥

आराधिते भगवतीश्वर आत्मतत्त्वे
किं दुर्ल्लभं जगति मायिक आविरिञ्च
स्वानन्दवारिधिनिमज्जितचेतसां स्या-
द्विध्वस्तभेदपरमात्मपदे स्थितानाम्॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानवैराग्याद्यर्थं भगवदाराधनमित्युक्तिरप्यन्यतो विरज्य भगवदाभिमुख्यसम्पादनाय । वस्तुतस्तु भगवद्भक्तिरेव परमपुरुषार्थो ज्ञानवैराग्यादीनामवर्जनीयतयाऽवान्तरफलत्वमित्याशयेनाह—आराधित इति । भगवति सर्वसौन्दर्यसारसर्वस्वे ईश्वरे अवश्यम्भजनीये आत्मतत्त्वे परप्रेमास्पदे आराधिते सति स्वानन्दवारिधौ भगवदाराधनातिशयेन निमज्जितम्—तद्व्यतिरिक्तं सर्वमप्यनादृत्य तत्रैव नितरां प्रविष्टं चेतो येषाम्, विध्वस्तः स्वत एवाद्वैतस्वरूपमहिम्ना बाधितो भेदो यस्मिन् परमात्मपदे तत्र स्वभावत एव स्थितानां पुरुषधौरेयाणां मायिके जगति आविरिञ्च्यं ब्रह्मलोकाद्यैश्वर्य्यपर्यन्तं किं दुर्लभं स्यात् ? अपि तु सर्वस्य तत्रैवान्तर्भावात् सर्वं प्राप्तमेवेत्यर्थः ॥५७॥

आराधनं बहुविधं विहितं मुरारे-
स्तत्राप्यनन्यशरणत्वमुदारभक्तिः ।
सर्वं विहाय भगवच्चरणारविन्दे
प्रेम्णा धियः स्थितिरखण्डसुखाप्तिहेतुः॥५८॥

किं लक्षणं भगवदाराधनम् ? यस्मिन्कृते सर्वं पुमर्थजातं सुलभं स्यादित्याकाङ्क्षायामाह—आराधनमिति । श्रुतिस्मृतितन्त्रादिष्वधिकारभेदाद्रुचिवैचित्र्याच्च मुरारेर्भगवतो वासुदेवस्य बहुविधमाराधनं आराधनप्रकारेषु विहितम् । तत्रापि तेष्वपि प्रकारेषु मध्ये उदारभक्तिः उदारा सर्वोत्कृष्टा भक्तिः, उदारस्य भगवतो वासुदेवस्य अभिमता भक्तिरिति वा अनन्यशरणत्वमेव "तमेव शरणं गच्छ सर्वभावेन भारत ! ।" (गी० १८ । ६२)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" (गी० १८
"मामेव ये प्रपद्यन्ते"(गी०७।१४)"तमेव चाद्यं पुरुषं
"अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ।"
"सकृदेव प्रपन्नाय तवास्मीति च याचते ।"

इत्यादिभगवद्वाक्यकदम्बैः सम्मतमित्यर्थः । अतः सर्वं वि
मविद्यमानं वा धर्मजातं विहायोपेक्ष्य भगवतो वासुदेवस्य चरणं
प्रेम्णानुरागेण धियो निश्चयात्मिकायाश्चेतोवृत्तेः स्थितिर्नैश्चल्य
सुखस्यापरिच्छिन्नानन्दैकरसस्वरूपावस्थानलक्षणस्य मोक्षस्य प्राप्ति
व्यभिचरितसाधनमित्यर्थः, "तत्प्रसादात् परां शान्तिं स्थानं प्र
शाश्वतम्" ( गी० १८ । ६२ ) इत्युक्तेः ॥ ५८ ॥

स्वान्ते स्थितोऽयमयिता परमेश्वरोऽयं
साक्षी सुहृत्तमतया भजनीयकीर्तिः ।
ध्यातोऽर्चितो दिशति मोक्षसुखं विशुद्धं
भक्त्या निजार्पितधियां स्वपदावबोधः

स्वस्वामिभावेन वा, सख्येन वा, स्वात्मत्वेन वा भगवदाराधनं
पुमर्थपर्यवसायी भवत्येवेत्यभिप्रेत्याह—स्वान्त इति । इहैव
सन्नयं परमेश्वरः "यो विज्ञाने तिष्ठन्"( बृ० ३ । ७ । २२ )
न्तर्यामिब्राह्मणोक्तरीत्या यमयिता

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥" (गी०

इति भगवद्वचनात् सर्वभूतनियन्तृत्वेन प्रसिद्धो यः स
ध्यातोऽन्तर्यामिरूपेणाऽर्चितश्च सन् भक्त्याऽनुरागेण निजे

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

निवेशिता धीर्यैस्तेषां स्वपदाववोधात् प्रत्यगभिन्नब्रह्मज्ञानदानेन मोक्ष-सुखं दिशति ददातीत्यन्वयः।

"तमेव शरणं गच्छ सर्वभावेन भारत।

तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥"(गी०१८।६२)

इति भगवद्वचनात् स एव परमेश्वरः सुहृत्तमतया सौहार्देन सख्येनेति यावद् ध्यातोऽर्चितश्च सन् मोक्षसुखं दिशतीति सम्बन्धः।

"भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्।

सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति॥" (गी०५।२९)

इति भगवद्वचनात् स एव साक्षी सर्वबुद्धिवृत्तिसाक्षिरूपेण ध्यातः स्वपदाववोधदानेन विशुद्धं मोक्षसुखं दिशतीति सर्वत्राऽनुपपद्यते। सर्वत्र हेतुः—भजनीयकीर्त्तिरिति। तथा च दास्येन वा, सख्येन वा, स्वात्मत्वेन वा सर्वथा भगवान् वासुदेव एव भजनीय इति सिद्धमिति भावः॥५९॥

प्रत्यक्पराग्द्वयसुखात्मपदाववोधे
सम्यग्विशुद्धमतयोऽधिकृता विरागाः।
सा शुद्धिरीशभजनात् सकलाङ्गयुक्ता
स्यान्नाऽन्यथा युगशतैः क्रतुकोटिभिर्वा॥६०॥

किं बहुना वेदानुवचनादिसाध्यसत्त्वशुद्धिस्तत्फलं विवेकादिसाधनचतुष्टयमपि भगवत्स्मरणकीर्त्तनादिभिरेवानायाससाध्यम्, नान्यथा प्रयत्नसहस्रेण कल्पशतेनापीत्यन्वयव्यतिरेकाभ्यां भगवद्भजनमेव द्रढयति—प्रत्यगित्यादिना। स्पष्टार्थकं पद्यम्॥ ६०॥

यस्माद् विशुद्धमतयो निगमान्तवाचां
तात्पर्य्यमद्वयसुखामृतमात्मतत्त्वम्।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बोद्धुं क्षमास्तत उदारगुणो मुकुन्दो
ध्येयोऽर्च्य आदरत आन्तरशुद्धयेऽद्धा॥

एतदेव पुनर्द्रढयति—यस्मादिति। स्पष्टार्थं पद्यम्॥६१॥

शुद्धः स एव भगवान्निगमान्तभूमिः
स्वज्योतिषाऽपहतमायिकधर्म्मपुञ्जः।
प्रत्यक्चिदद्वयतयाऽखिलभेदशून्यो
मायातिगः सुखघनः पुरुषोत्तमत्वात्॥

शुद्धशबलान्तर्यामिश्यामसुन्दरचतुर्भुजाद्याकारेण स एक एव
वान् मुकुन्दो यथाधिकारं यथारुचि आराध्यः परमपुमर्थसिद्धये इ
शयेनाह—शुद्ध इत्यादिनवभिः। तत्रादौ "तत्त्वमसि" (छा० ६।८
इत्यादिमहावाक्यप्रमेयमखण्डैकरसं ब्रह्मैक्यं शुद्धं वेद्यत्वेना
शुद्ध इति॥६२॥

मायाश्रयः स च विभुः स्वगुणैरनन्तै-
रानन्दहेतुभिरशेषकलङ्कशून्यैः।
युक्तोऽस्य सर्वजगतो जननादिहेतु-
र्नासङ्गतां त्यजति पुष्करवत् स्वयम्भूः॥

मायाधिष्ठानत्वेन जगज्जन्मादिहेतुत्वेऽपि अनन्तकल्याणगु-
निलयस्य "सत्यकामः सत्यसङ्कल्पः" (छा० १।८।५) "

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

सर्वविद् यस्य ज्ञानमयं तपः" ( मु० १ । ९ ) इत्यादिश्रुतिसिद्धस्य तस्यैव भगवतो निर्दोषगुणाधारत्वेनोपास्यत्वमाह—मायाश्रय इति ॥६३॥

सृष्ट्वेदमाविशति तत्र वशी स्वशक्त्या
जीवात्मनेश्वरतयाऽतिविशुद्धबोधः ।
तत्तन्नियामकतयाऽपि विभाति मायो-
पाध्याद्यसङ्गवपुषाऽखिलवृत्तिसाक्षी ॥६४॥

विश्वं सृष्ट्वा सर्वान्तर्यामिरूपेण च तत्र प्रविष्टस्यापि निर्लेपत्वं वदंस्तस्यैव भगवतोऽन्तर्यामिब्राह्मणोक्तरीत्या सर्वनियन्तृत्वेनोपास्यत्वमाह—सृष्ट्वेति ॥ ६४ ॥

सर्वात्मताऽस्य निगमान्तवचःप्रसिद्धा
बाधेऽखिलस्य यदबाधितमद्वयाच्छम् ।
स्थानत्रयेऽनुगतमेकरसं घटादि-
ज्ञानेऽपि भाति न तथापि विभाति साक्षात् ॥६५॥

ननु वस्तुतो नित्यशुद्धबुद्धमुक्तस्वभावस्य मायोपहितत्वेन सर्वव्यापकस्य सर्वान्तर्यामिरूपेण सर्वत्रानुगतत्वेन च विद्यमानस्य भगवतो वासुदेवस्य चतुर्भुजाद्याकाराक्रान्तत्वं किमर्थमित्याशङ्क्यावाङ्मनसगोचरस्य सर्वव्यवहारानास्पदवेदान्तप्रमेयस्य महतामपि दुर्लभस्य स्वभक्तानां सज्जनानां बुद्ध्यारोहाय नास्तिकानां मुखभङ्गाय चोपासनादिसौकर्य्यसिद्धये नित्यशुद्धबुद्धमुक्तस्वभावस्यैव ब्रह्मणः स्वेच्छया चतुर्भुजाद्याकारप्रादुर्भावकरणं बहुप्रयोजनकमित्यभिप्रेत्याह—सर्वात्मतेति । "सर्वं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

खल्विदं ब्रह्म" ( छा० ३ । १४ । १ ) इत्यादिश्रुतौ सर्वात्मता मूर्त्तामूर्त्तप्रपञ्चस्य अखिलस्य "नेति नेति" ( बृ० २ । ६ । ६ ) श्रुत्या बाधे यद् बाधावधित्वेन अबाधितम्, अद्वयम्, अच्छं ब्रह्म दिस्थानत्रये अन्योन्यव्यावृत्तेऽप्यनुगतमेकरसत्वेन साक्षिरूपं घटादिज्ञानदशायामपि प्रमात्रादिष्वनुगतं तत्साक्षिरूपं घटादि तदधिष्ठानरूपञ्च भाति—स्वयमेव प्रकाशतया स्फुरति। तथा तत्कार्याध्यासप्रतिबन्धेन साक्षात्तत्त्वज्ञानमन्तरेण न विभातीत्यर्थः॥

तस्मादमी निजपदं सुजनाः सुखेन
पश्यन्तु मामिति निधाय हृदीश्वरो
श्यामं चतुर्भुजमखण्डगुणैकधाम
स्वीयं वपुः सृजति शुद्धमुपासनार्थम्॥

तस्मादिति। यस्मादेवं तस्मादीश्वरः करुणानिधिरयं मुकुन्द इति हृदि निधाय श्यामसुन्दरम्, चतुर्भुजम्, किरीटकौ लयाङ्गदहाराद्यसाधारणभूषणभूषितम्, स्वाभाविकानवधिकान नन्तानन्तकल्याणगुणगणालङ्कृतम्, निरतिशयसौन्दर्य्यमाधुर्य मार्दवश्रियामेकधाम, शुद्धं सच्चिदानन्दमेव, स्वीयमसाधारणं वपु कानामुपासनार्थं सृजति स्वेच्छया प्रादुर्भावयति। किमिति हृदि येत्यत आह—अमी इति। सुखेनाऽनायासेन अत्यन्तदुर्लभ सुजना भगवदाराधनेन लब्धसफलजन्मानः पुरुषधौरेया निज णमखण्डैकरसं तत्त्वं मां पश्यन्तु साक्षात्कुर्वन्तु इत्येवमित्यर्थः॥

स श्रीपतिः स्मितकटाक्षमहोत्रलोकै-
र्ध्येयो युतो भवनिधेरमितादगाधात्।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उद्धर्त्तुमीप्सुभिरनन्तसुखेप्सुभिश्च
स्वात्मानमेव शरणं सगुणोऽगुणश्च ॥६७॥

एतादृशं करुणासिन्धुं भगवन्तं कृतज्ञं दीनबन्धुं शरण्यादिगुणाधारं श्रीमुकुन्दं नैरन्तर्येण मनसि निधाय सज्जना भजन्ति। ततश्च सर्वैः स एव सगुणो निर्गुणश्च भगवान् मुकुन्द एव सततमेव सेव्य इत्यभिप्रेत्याह—स इति। स एव श्रीपतिः अनन्तविभूत्यधिष्ठात्र्या देव्या लक्ष्म्याऽऽश्रितत्वाद् भगवान् वासुदेवः स्मितेन मन्दहसितेनोपलक्षितो यः कटाक्षः, महश्चालौकिकं तेजः, करुणारसार्द्रावलोको वीक्षणम्, तैर्युतो भक्तानुग्रहैकव्यग्रो भवनिधेः संसारसिन्धोरमितात् तन्मूलकर्मादीनामानन्त्यात् पारावारवर्जिताद् अत एवागाधादिगुणकत्वेन दुस्तरात् स्वात्मानमुद्धर्त्तुमीप्सुभिरनन्तसुखं मोक्षमीप्सुभिः पुरुषैर्ध्येयः सगुणः अनन्तकल्याणगुणसागरः स एव भगवान् निर्गुणः चकारात् ज्ञेय इत्यर्थः। यद्वा, स्वात्मानमुद्धर्त्तुमीप्सुभिर्मुमुक्षुभिः सगुणो निर्गुणश्च ध्येयो ज्ञेयश्च। तथाऽनन्तसुखेप्सुभिर्भक्तिरसिकैः भोगमोक्षाभिलाषशून्यैरनन्तसुखं भगवन्तं श्यामसुन्दरमेवेप्सुभिः सगुण एव ध्येयो ज्ञेयश्चेत्यर्थः॥ ६७॥

स्वां वैष्णवीमखिलहेतुरनन्तशक्तिं
स्वज्ञानबाधितकलां चितिं बिम्बयुक्ताम्।
आश्रित्य दर्शयति मूर्त्तिमलौकिकीं स्वा-
मानन्दसागरमुपासकभावसिद्ध्यै॥६८॥

अनन्तशक्तिमायाधिष्ठानत्वेन भगवतो वासुदेवस्य अपरिच्छिन्नस्यापि सच्चिदानन्दघनैकमूर्त्तिप्रदर्शनेन करुणासिन्धुत्वशरण्यत्वादिस्वभाव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एव व्यज्यते इत्यभिप्रेत्याह—स्वामिति । स्वज्ञानेन स्वस्वरूपबोधा-
त्मना बाधिताः स्वत एव निरस्ताः कलाः संसरणादिशक्तयो यस्याः
तथा च सर्वव्यामोहकमपि मायाशक्तिः स्वस्वभावमविद्यमानवत् इ
भगवद्वीक्षणाङ्गने पराभूतेव तिष्ठतीति भावः । स्वां स्वाधीनां माया
स्वप्रतिबिम्बगर्भामधिष्ठाय स्वामसाधारणीमलौकिकीं चिदानन्दा
मूर्त्तिमानन्दसमुद्भूताम् उपासकानां निजभक्तानां भावः प्रेमाति
स्वस्मिन् विषये अत्यन्तानुरागस्तस्य सिद्ध्यै तदाविर्भावाय अखिलं
भगवान् दर्शयति—निजभक्तदृग्गोचरतां नयतीत्यर्थः ॥ ६८ ॥

स्वाभाविकामृतसुखाद्वयतत्त्वबोधः
साक्षादुदेति सुमते रसिकान्तरस्य ।
पादारविन्दमकरन्दसुधोत्सवेऽस्य
कृष्णस्य तच्छरणमेव गतस्य पुंसः ॥६

अत एव श्रीमूर्त्तिचरणारविन्दध्यानरसिकस्य तत्त्वज्ञानम-
मनन्तोपायैरसाध्यमप्यनायासेन स्वत एव सिद्ध्यतीत्यभिप्रेत्या
स्वाभाविकेति । अस्य करुणासिन्धोः श्रीकृष्णस्य पदारविन्द
रन्द एव सुधा पीयूषं तस्या उत्सवः, सैव वा परममङ्गलम्, तत्र
कान्तरस्य नित्यं तदास्वादने तत्परान्तःकरणस्य, अत एव सुमतेः
स्तच्छरणं कृष्णशरणमेव गतस्य, पुंसः सफलपुरुषजन्मनः स्वा
यदमृतमविनाशि सुखमद्वयतत्त्वं तस्य बोधः साक्षात्कारः
प्रतिबन्धेनेहैव जन्मनि उदेति स्वयमेवाविर्भवतीत्यर्थः ॥ ६९ ॥

तस्मादखण्डसुखबोधसमुद्भवेऽस्मिन्
मुख्याधिकार उदितः श्रुतिभिर्मुमुक्षोः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृष्णाङ्घ्रिपद्ममकरन्दसुगन्धलुब्ध-
स्वान्तस्य नेतरधियो जगतीति सिद्धम्॥७०॥

तस्माद्भगवद्भक्तस्यैव तत्त्वज्ञानोदयफलकवेदान्तविचारे सम्यगधिकारः, "यस्य देवे परा भक्तिः" ( श्वे० ६ । २३ ) "मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते" (गी० १३ । १८) इति श्रुतिस्मृतिभ्याम्; नान्यस्येति सिद्धमित्युपसंहरति—तस्मादिति । अखण्डसुखं ब्रह्मैक्यं तस्य बोधो ज्ञानं तस्य समुद्भव उत्पत्तिर्यस्माद् वेदान्तविचारात् तत्रेत्यर्थः । शेषं सुगमम् ॥ ७० ॥

एवं च वेदवचसां परमेश्वरेऽस्मिन्
विश्वोद्भवस्थितिलयाश्रयकारणेऽद्धा ।
मुख्यान्वयोऽस्ति मत आत्मविदां विशुद्धे
मायातिगे भगवतीत्यपि सिद्धमिष्टम् ।७१।

तथा च "तत्तु समन्वयाद्" ( ब्र० सू० १ । १ । ४ ) इत्यधिकरणोक्तरीत्या सर्वेषां वेदान्तानामद्वितीये ब्रह्मणि समन्वयोऽपि सिद्ध इत्याह—एवञ्चेति । पूर्वापरपर्यालोचनया साक्षात्परम्परया वा वेदवचसाम् "सर्वे वेदा यत्पदमामनन्ति" ( कठ० २ । १५ ) इति श्रुतेः अस्मिन् स्वप्रकाशतया परोक्षस्वभावे परमेश्वरे मायोपहिते वस्तुतो मायातिगे अत एव विशुद्धे मायातत्कार्यसम्पर्कदोषविनिर्मुक्ते भगवति वासुदेवे विश्वोद्भवस्थितिलयानामाश्रयोऽधिष्ठानमुपादानमिति यावत् कारणं निमित्तं तस्मिन् अभिन्ननिमित्तोपादाने ब्रह्मणि अद्धा साक्षाद् मुख्यान्वयोऽस्ति । आत्मविदां व्यासादीनां मतोऽभिमत इतीष्टमपि सिद्धमित्यर्थः । तथा च "सत्यकामः सत्यसङ्कल्पः" (छा० ६ । ८ । ५)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"यः सर्वज्ञः सर्ववित्" ( मु० १ । १।६ ) "एष लोकाधिपतिरेष लोक-
पालः" ( कौ० ३ । ८ ) "एष वशी" ( क० ५ । १२ ) "एष सर्वे-
शानः" ( बृ० ५ । ६ । १ ) "सत्यं ज्ञानमनन्तं ब्रह्म" (
२ । १ । १ ) "स विश्वकृत्" ( बृ० ४ । ४ । १३ ) "यो ब्रह्माणं वि-
धाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" ( श्वे० ६ । १
"एष सर्वेश्वरः" ( बृ० ४ । ४ । २२ ) इत्यादिरूपेण
भगवन्तं वासुदेवं सगुणमनन्तकल्याणगुणनिलयं प्रतिपादयन्तो
पर्यवस्यन्तीति भावः ॥ ७१ ॥

तत्त्वंपदार्थपरिशोधनमागमान्तैः
कृत्वेशभक्तिमपि शास्त्रविदां मतेन ।
बोद्धव्यमद्वयपदं भवपाशमुक्त्यै
साम्राज्यसौख्यपरमामृतसिद्धयेऽद्धा ॥

विस्तरेणोक्तमर्थं श्रोतृबुद्धिसौकर्याय सङ्क्षिप्य दर्शयति—
मिति । शास्त्रविदां मतेनेत्युक्त्या साम्प्रदायिकमेव कृतं सर्वं
न स्वकपोलकल्पितमिति दर्शितम् । ईशस्य श्रीमुकुन्दस्य
कृ तत्रैव तत्परतां कृत्वा तत्प्रसादलब्धसाधनचतुष्टयेन तत्त्वंपदा-
परिशोधनमागमान्तैर्वेदान्तवाक्यविचारेण कृत्वा अद्वयपदं बोद्ध-
त्यन्वयः । भव एव पाशो बन्धकत्वात् ततो मुक्त्यै सर्वानर्थनि-
मित्यर्थः । सम्यग् राजते निरतिशयानन्दस्वरूपं ब्रह्म सम्राट् तत्
साम्राज्यं तदेव सौख्यं तदेव परमामृतं कैवल्यं तत्सिद्धये अद्धा
चाद्धोद्धव्यं स्वानुभवारोहपर्यन्तं यतितव्यमित्यर्थः । शास्त्रविदां
त्रिष्वन्वयीति ॥ ७२ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अद्वैतमेव निगमान्तगिराऽवबुद्धं
मुक्तिप्रदं द्वयमतिक्षयकृत्सुखेन ।
तत्रैव सद्भिरतियत्नपरैश्च भाव्यं
द्वैतं मृषाभ्रमधियोत्थमनर्थकृद्यत ॥७३॥

नानावादिपरिकल्पितद्वैतपक्षान् तत्त्वज्ञानमोक्षप्रतिबन्धकान् द्रागनादृत्य वेदान्तस्मृतीतिहासपुराणादिप्रमाणसिद्धमद्वैतमतमेवादर्त्तव्यमित्याशयेनाह—अद्वैतमिति । यतो द्वैतमेव बन्धस्तद्विषयकं ज्ञानमेव महाननर्थः, अतो निगमान्तगिरा तत्त्वमस्यादिवाक्येन अद्वैतमेवावबुद्धं साक्षात्कृतं सत् सुखेनानायासेन द्वैतमतेरध्यस्ततयाऽज्ञानकार्यत्वात् तस्याः क्षयकृद्भवति । अधिष्ठानावबोध एव अध्यस्तक्षयकारी, अध्यस्तक्षयोऽधिष्ठानानतिरेकीत्यर्थः । अत एव मुक्तिप्रदं मुक्तेः स्वरूपावस्थानलक्षणायाः स्वतः सिद्धतया द्वैतमतिविलापनेनैव तत्त्वज्ञानस्य तत्प्रदत्वमुपचर्यते । अतस्तत्रैव द्वैतावबोधे एव सद्भिः पुरुषधौरेयैः शास्त्रोक्तपुरुषप्रयत्नपरैरेव भवितव्यम् । यत् यतो मृषाभ्रमधिया मिथ्याज्ञानेनोज्जृम्भितं द्वैतमेवानर्थकृद्भवतीति योजना ॥ ७३ ॥

यो द्वैतिभिः स्वमतिकल्पनया प्रलापोऽ-
प्याभासमात्रजगति स्वपराघहेतुः ।
नाना कृतस्तमखिलं परिहृत्य दूरे
श्रुत्यन्तपक्षमनघं परितः श्रयेत ॥ ७४ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यावदद्वैतमाभासीकृत्य न परित्यज्यते, तावदद्वैतबोधोऽपि दुःसम्पादः तदर्थं वेदान्तवाक्यविचारोऽपि सार्थक एवेत्यभिप्रेत्याह—य इं द्वैतिभिर्द्वैतेऽभिनिवेशकर्तृभिर्नाना प्रलापः स्वकपोलकल्पितयुक्तिप्रभासैर्मूलप्रमाणमन्तरेण आभासमात्रे जगति स्वाप्नप्रपञ्चवत् प्रतिमात्रशरीरे कृतः स्वपराधहेतुः स्वस्य परस्य चानर्थहेतुरेवं सः, श्रुतिस्मृतियुक्तिभिस्तुच्छीकृत्य दूरेऽत्यन्तानादरेण परिहृत्य वेदान्तस्वतः प्रमाणत्वात् प्रामाणिकैर्व्यासत्रसिष्ठादिभिः स्वीकृतत्वादनवं लिपमपौरुषेयतया परित आसमन्तादाश्रयेतेति योजना ॥ ७४ ॥

सकलमिदमखण्डं भेदविभ्रान्तिशून्यं
श्रुतिशिखरवचोभिः सिद्धमानन्दकन्दम्।
सपदि सुमतिरन्तर्वेद यस्य प्रसादा-
त्तमहममृतमाद्यं कृष्णमेवावलम्बे ॥७५॥

इति प्रत्यक्तत्त्वचिन्तामणौ नवमं प्रकरणं सम्पूर्णम् ॥ ९ ॥

प्रकरणार्थमुपसंहरन् स्वेष्टदैवतं भगवन्तमनुसन्धत्ते—सकलमिति । इदं भ्रान्त्या द्वैतत्वेनावबुद्धं सकलं जगद्वस्तुदृष्ट्या अखण्डं ब्रह्मैवेति यस्य प्रसादात् सपदि तत्क्षण एव सुमतिः सन् साक्षाज्जानाति, तममृतस्वरूपं कृष्णमेव तत्त्वमवलम्बे इत्यन्वयः। भेदस्य प्रातीतिकत्वात्तद्विभ्रान्तिशून्यमानन्दकन्दमानन्दैकरसमखण्डं तत्त्वमिति वेदान्तैः स्वतः प्रमाणभूतैः सिद्धमित्यर्थः ॥ ७५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्कारुण्यशरण्यदीनजनतोद्धारैकशीलादिसाद्-
गुण्यध्यानविचारणादिभिरयं ब्रह्मादिवन्द्यं पदम् ।
प्राप्यान्यानपि देहिनो नयति तद्धीरो नरोऽप्यैश्वरं
तं श्रीकृष्णमुदारसेव्यचरणं नित्यं भजेऽहं मुदा ॥ १ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषिसदानन्दविद्व-
त्कृतायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां तत्पदार्थस्या-
भिन्ननिमित्तोपादानत्वनिरूपणमयूखाभिधं नवमं
प्रकरणं समाप्तिमगमत् ॥ ९ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ दशमं प्रकरणम्

दृश्यातिगं ज्ञानघनं निरञ्जनं
प्रत्यञ्चमानन्दसमुद्रमक्षरम् ।
अद्वैततत्त्वं परमार्थशब्दितं
कृष्णं श्रये वेदशिरोभिवन्दितम् ॥
द्वैतभ्रमं संसृतिचक्रकारणं
निरस्तसत्त्वादिगुणं चिदद्वये ।
आरोपितं यत्र तमेव केशवं
भजेत शुद्धं स्वधिया त्यजेद् द्वयम् ।

ब्रह्मैकमेव न ततः किमपि द्वितीयं
मायोत्थितं पृथगिदं श्रुतिसिद्धमेतत् ।
विज्ञायते विगतमोहनिशान्धकारै-
र्यद्वीक्षणात्तमसृतं कलये मुकुन्दम् ॥ १ ॥

अतीतानन्तरप्रकरणे "अद्वैतमेव निगमान्तगिराऽवबुद्ध्य ...
द्वयमतिक्षयकृत्सुखेन" इत्युक्तम्, तद्दृढीकाराय तदुपपादक...
णमारभमाणस्तत्प्रतिपाद्यमद्वैततत्त्वं भगवन्तं श्रीमन्मुकुन्दमनुस...
दृश्यातिगमिति द्वाभ्याम् । प्रथमपद्ये दृश्यात्यन्ताभावोपलक्षितं ...
शयानन्दघनं निर्गुणं प्रत्यगभिन्नं ब्रह्माद्वैततत्त्वं सकलवेदान्त...

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भूतं श्रीकृष्णाख्यं वस्त्वनुसन्धानगोचरतया आविष्कृतमिति । द्वितीये तदावरकाविद्यातत्कार्यनिरासितत्त्वज्ञानान्तरङ्गसाधनाद्वैततत्त्वविचारोपदेशसूचनमिति विवेकः । उभयत्र अक्षरार्थस्तु निगदव्याख्यातः ॥१-२॥

नन्वद्वये साधकमानमस्ति किं
यदाश्रयेद् द्वैतमतिं विहाय ना ।
विचारतो नास्ति कथञ्चनाऽद्वये
प्रमाणमीषत्तव तत्त्वसाधकम् ॥ ३ ॥

'तमेव केशवशब्दाभिधमद्वयं भजेत' इत्युक्तमसहमानाः केचित् प्रत्यवतिष्ठन्ते—नन्विति । अद्वये वस्तुनि किं प्रमाणं तत्साधकत्वेनाभिमतमस्ति ? इति वद, यत्प्रमाणं प्रमाणसिद्धां द्वैतमतिं परित्यज्य ना पुमानाश्रयेत् । विचारतो विचारे क्रियमाणे कथञ्चन केनापि प्रकारेण तवाभिमतेऽद्वये ईषदपि तत्त्वसाधकं प्रमाणं नास्तीति योजना ॥ ३ ॥

प्रत्यक्षमानं जडवस्तुगोचरं
नाऽद्वैतमच्छं क्षमतेऽपि वीक्षितुम् ।
नातीन्द्रियं वीक्षितुमिद्रियाण्यलं
नह्यद्वयं रूपवदक्षरं भवेत् ॥ ४ ॥

ननु काऽत्रानुपपत्तिरद्वैततत्त्वे यत्किंचित्प्रमाणं भविष्यतीति चेत्, तत्र वक्तव्यम् । अद्वैतसाधकं प्रमाणं किं लौकिकं वेदोक्तं वा ? आद्येऽपि किं प्रत्यक्षम् ? उत अनुमानम् ? न तावत्प्रत्यक्षमित्याह—प्रत्यक्षमानमिति । जडवस्तुघटपटादिगोचरं हि प्रत्यक्षं प्रमाणमच्छमद्वैत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मसङ्गं कटाक्षेणापि वीक्षितुं न क्षमते। तत्र हेतुः—नातीन्द्रि... अतीन्द्रियत्वे हेतुः—नहीति। अरूपवदित्युपलक्षणमस्पर्शादीनां च श्रुतिः—"पराञ्चि खानि व्यतृणत् स्वयम्भूः" (क० ४।१)। "अशब्दमस्पर्शमरूपमव्ययम्" (क० १।३।१५) इत्यादि चेति ॥ ४ ॥

अथो जगत्तत्प्रतिभासयोर्मृषा-
विद्याकृतत्वाद्धि जडयोर्न तत्र वा।
स्यादञ्जसा मानगतिर्यतो भवेत्
सर्वत्र सन्मात्रगतं प्रमाणकम् ॥ ५ ॥

द्वैततत्प्रतिभासयोरविद्याविजृम्भितत्वान्न तत्र प्रमाणत्वं प्रमाणन्तु सर्वत्र सन्मात्रविषयमेवेति सिद्धान्ती शङ्कते—अथो इति द्वाभ्याम् ॥ ५ ॥

तथेन्द्रियाणामनृतद्वयभ्रमा-
धिष्ठानमात्रग्रहणे कृतार्थता।
सर्पभ्रमस्येव जगद्भ्रमस्य न
प्रमाणतः सिद्धिरपीष्यते सतः ॥ ६ ॥

इन्द्रियान्वयव्यतिरेकयोश्च द्वैतभ्रमाधिष्ठानभूतसन्मात्रग्रहणे... थासिद्धत्वात् रज्जुखण्डसम्प्रयोगसमनन्तरमुपजायमानसर्पविभ्र... द्वैतप्रतिभासस्येन्द्रियान्वयव्यतिरेकानुविधायिनो भ्रान्तित्वोपपत्तेः... येनाह—तथेन्द्रियाणामिति ॥ ६ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदेतदप्यत्र न साम्प्रतं यतः
सर्पभ्रमस्येव न विश्वभानयोः ।
भ्रान्तित्वमद्धाऽप्यवकल्पते सतो-
रबाधितार्थप्रतिभानसिद्धयोः ॥ ७ ॥

तामिमां सिद्धान्तिशङ्कां पूर्वपक्षी परिहरति—तदेतदिति । विश्वञ्च तद्विषयकं भानञ्च तयोर्विश्वभानयोः सतोः सद्रूपयोः । तत्र हेतुः—अबाधितेति । अबाधितार्थविषयकं यत्प्रतिभानं प्रमारूपं तेन सिद्धयोः । न तु भ्रान्तित्वं भ्रममात्रशरीरत्वम्, नहि सर्पभ्रमस्येव द्वैतप्रतिभासस्य भ्रान्तित्वमवकल्पते इति योजना ॥ ७ ॥

प्रत्यक्षमानादवभासते जगद्
आबालधीरं व्यवहारगोचरम् ।
तत्त्वापरोक्षे सति नास्ति विभ्रमः
सन्मात्रभाने जगतः क्व विभ्रमः ॥ ८ ॥

अपि चेदं द्वैतं प्रत्यक्षेणाबालपण्डितमवभासते । तव मते तु द्वैतप्रपञ्चोऽयं भ्रान्त्यापि प्रतीतिगोचरतां नाचरेत् । नह्यधिष्ठानतत्त्वापरोक्षे सति काचिद्भ्रान्तिरस्ति, यतस्त्वया सन्मात्रमेव प्रमाणगोचरं मतमित्याशयेनाह—प्रत्यक्षेति ॥ ८ ॥

नन्वप्यधिष्ठानसदद्वये क्षणे
द्वैतभ्रमस्तत्र किलाऽवकल्पते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथेदमित्यप्यपरोक्षवस्तुनि
दृष्टोऽस्ति लोके रजतादिविभ्रमः ॥ ९

इदमित्यपरोक्षावभासेऽपि अधिष्ठाने यथा रजतादिविभ्र[illegible] सन्मात्राधिष्ठाने प्रत्यक्षगृहीते द्वैतविभ्रमोऽवकल्पते, न तु परोक्ष[illegible] नात्यन्तमनवभासमाने वाधिष्ठाने इत्याशयेन सिद्धान्ती [illegible] शङ्कते—नन्विति ॥ ९ ॥

मैवं प्रसिद्धो रजतादिविभ्रमा-
धिष्ठानशुक्त्यादिरनेकरूपवान् ।
केनापि रूपेण सदुष्टचक्षुरा-
त्थप्रतीतौ भ्रमतां वहत्यपि ॥१०
अन्येन निर्दुष्टसुचक्षुरादिज-
ज्ञाने प्रमाणव्यवहारमुद्वहेत् ।
नह्येवमद्वैतसतस्त्वनेकता-
नङ्गीकृतेः सा व्यवहारकल्पना ॥ ११

प्रतिवादी परिहरति—मैवमिति द्वाभ्याम् । रजतादि[illegible] ष्ठानशुक्तिशकलादेरनेकात्मकत्वात् केनचिदात्मना दोषदूषित[illegible] समुत्थविज्ञानगोचरतामाचरद् भ्रान्तिव्यवहारमावहति, [illegible] त्मना विगलितनिखिलदोषचक्षुरादिजनितविषयतामापद्यमानं [illegible] व्यवहारमुद्वहेदित्युपपन्नम् । अद्वैतवस्तुनः पुनरनेकात्मक[illegible] गमान्नेयं व्यवस्थाऽवकल्पते इति द्वयोः समुदितोऽर्थः ॥ १०-[illegible]

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मात्प्रमाणं न सदद्वये परे
प्रत्यक्षमेवं विधिना परीक्षितम् ।
तन्मूलकं नाप्यनुमानमद्वये
व्याप्तेरभावादपि सम्भविष्यति ॥१२॥

पूर्वपक्षी अद्वैते प्रत्यक्षप्रमाणाभावसाधनमुपसंहरन्ननुमानमपि निरस्यति—तस्मादिति ॥ १२ ॥

नन्वेष भेदव्यवहार एकचि-
द्वस्त्वाश्रयस्तद्व्यवहारभावतः ।
यथैकचन्द्रादिगतः प्रकल्पितो
दृष्टोऽस्ति भेदव्यवहार आन्ध्यजः ॥१३॥
स एष भेदव्यवहार आत्मनि
स्वाविद्ययाध्यस्त इवेन्दुविभ्रमः ।
न कल्पितेन क्षतिरस्ति वस्तुना
स्वभावसिद्धस्य चिदद्वयात्मनः ॥ १४ ॥

नन्वनुमानमद्वैते प्रमाणं भविष्यति । तथाहि—विमतो भेदव्यवहारः स्वविषयसर्वभेदानुगतजात्यात्मकैकवस्त्वालम्बनः, भेदव्यवहारत्वात्, यथा चन्द्रादिगतकाल्पनिकभेदव्यवहार इति सिद्धान्ती शङ्कते—



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्विति द्वाभ्याम् । तद्व्यवहारभावतः भेदव्यवहारत्वादित्यं सुगममन्यत् ॥ १३—१४ ॥

मैवं न भेदव्यवहार एकचि-
द्वस्त्वाश्रयो भिन्नपदार्थगोचरः ।
कपालमालाव्यवहार इष्यते
किमेककुम्भादिगतः परीक्षकैः ॥१५॥

पूर्ववादी परिहरति—मैवमिति । अयमर्थः—भेदव्यवहारो भिन्नवस्त्वालम्बनो नैकवस्त्वालम्बनः । नहि कपालमालाव्यवहार घटालम्बनः । तस्माद्विरुद्धो हेतुः, भेदव्यवहारस्य भिन्नवस्त्वालम्बनत्व प्रत्यक्षसिद्धत्वात् । चन्द्रभेदव्यवहारस्य भेदविभ्रमत्वादेकवस्त्वालम्बनत्वम्, न तु भेदव्यवहारत्वादिति । तस्मान्नेदमनुमानं प्रमाणता मारोहतीति ॥ १५ ॥

नन्वेकमेवाद्वयमित्थमागमे
सदद्वितीयं प्रतिपादितं स्फुटम् ।
किमन्यमानेन यतोऽद्वयं पदं
श्रुतिप्रमाणावगति ह्यलौकिकम् ॥

"एकमेवाद्वितीयम्" ( छां० ६ । २ । १ ) इत्यागमादद्वैतं पश्यामहे किं प्रमाणान्तरेण ? इति सिद्धान्ती शङ्कते—नन्विति । अद्वयं पदं श्रुतिप्रमाणादवगतिरवबोधो यस्य तत्तथा । तत्र हि

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अलौकिकमिति । अलौकिकत्वादेव न प्रमाणान्तरगोचरत्वाऽद्वैततत्त्वस्ये-त्यर्थः । सुगममन्यत् ॥ १६ ॥

मैवं कथं वाक्यमिदं सदद्वयं
वेदान्तगम्यं प्रतिपादयत्यहो ।
यदेकमेवास्ति तदद्वितीयकं
यदद्वितीयं यदि वैकमेव तत् ॥ १७ ॥

कथं तदा मानमिदं वचो जगत्-
सिद्धार्थवादित्वत उत्तमं श्रुतेः ।
अज्ञातबोधि श्रुतिवाक्यमिष्यते
प्रमाणराजो न तु सिद्धवाद्यपि ॥ १८ ॥

पूर्ववादी परिहरति—मैवमिति । यदि तावद् यदेकमेव तदद्वितीयं यदद्वितीयं तदेकमेव चेति बोद्धव्ये, उभयथाप्यप्रमाणमिदं वाक्यमापद्येत, लोकसिद्धानुवादमात्रत्वादित्यर्थः । सुगममन्यत् ॥ १७-१८ ॥

अथेति कल्पेत जगद्द्वितीयकं
तदेकमेवाद्वयमित्यपि श्रुतौ ।
तथापि वन्ध्या जननी ममेतिव-
द्वाक्यं भवेद् व्याहतमित्यपार्थकम् ॥१६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रकारान्तरमप्यनूद्य दूषयति—अथेति ॥ १९ ॥

किञ्चाऽद्वितीयं द्वयतो विलक्षणं
यद्वा विरुद्धं भवता मतं तदा ।
वस्त्वन्तराङ्गीकृतितोऽद्वयक्षति-
र्न वऽद्वयाभाव इहेष्यते द्वयम् ॥ २० ॥

अपि चाद्वितीयशब्देन नः कोऽर्थ इति विवेचनीयम् । न द्वैताभावः, विरोधादनभ्युपगमाच्च । अथ तदन्यतद्विरुद्धयोर इत्यभिधीयेत, तदा वस्त्वन्तरसद्भावस्यापरिहार्यत्वान्न युष्मदभि खण्डार्थाद्वितीयसिद्धिरित्याशयेनाह—किञ्चेति ॥ २० ॥

न सिद्धवस्तुप्रतिपादकं वचः
कार्यान्विते वस्तुनि शक्तिनिश्चयात् ।
कथं श्रुतेर्गीः प्रतिपादिका भवेत्
सिद्धात्मनोऽप्यद्वयवस्तुनो वद ॥ २१ ॥

कार्यान्विते वस्तुनि शब्दशक्त्यवधारणात् सिद्धे वस्तुनि तदभावान्न तत्र शब्दप्रामाण्यमित्याह—नेति ॥ २१ ॥

किञ्चाऽद्वये मानमपीष्यतेऽद्वयं
चेत्तर्हि मानेतरमातृमेययोः ।
अस्वीकृतेर्बौद्धमतप्रसञ्जनं
तत्स्वीकृतेरद्वयहानिरेव ते ॥ २२ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपि चाद्वैते प्रमाणमद्वैतमेव चेत्तर्हि प्रमाणातिरिक्तप्रमातृप्रमेयानभ्युपगमाद् बौद्धराद्धान्तप्रसङ्गः। अन्यच्चेत्, तर्हि प्रमाणप्रमेयविभागादद्वैतव्याघातः स्यादित्याह—किञ्चेति ॥ २२ ॥

तस्मान्न मानं किमपीह दृश्यते
सदद्वितीये श्रुतिमौलिवादिनाम् ।
अस्तीति चेत्तर्हि वदन्तु ते किलाऽ-
द्वैते प्रमाणं भ्रमसंशयापहम् ॥ २३ ॥

पूर्वपक्षमुपसंहरति—तस्मादिति ॥ २३ ॥

अत्रोच्यते मानशिरोमणेर्वचो
वेदान्तनाम्नः स्वत एव भास्वतः ।
प्रमाणमस्तीतरमानवर्जितेऽ-
द्वैते सदेवेत्यपदोषकल्पनम् ॥ २४ ॥

"सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्" ( छा० ६।२।१ ) इत्यागमवाक्यमद्वैते प्रमाणमिति समाधानं प्रतिजानीते—अत्रोच्यते इति। मानानां प्रत्यक्षादीनां सापेक्षत्वात् तदपेक्षया निरपेक्षप्रमाणरूपत्वादपौरुषेयत्वाद् वेदान्तो मानशिरोमणिर्निर्दिष्टत्वाच्च। अतः स्वत एव भास्वतः स्वतः प्रमाणत्वादन्यनिरपेक्षस्येत्यर्थः, तस्य वचो वाक्यमपगतदोषकल्पना यस्मात्तत्तथा "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्" ( छा० ६।२।१ ) इति प्रमाणमद्वैते इतरप्रमाणागोचरत्वाद् वेदान्तमात्रैकगम्ये इत्यर्थः ॥ २४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जगज्जनेः पूर्वमखण्डमद्वयं
सदेकमासीन्न ततो विलक्षणम् ।
इति श्रुतेर्गीरवधार्य कारणं
जगौ चिदद्वैतमखण्डमक्षरम् ॥ २५ ॥

इह भूतभौतिकलक्षणाद्वैतजातस्य कार्यस्य कारणसत्त्वैव प्रागुत्पत्तेः, "सदेव सौम्येदमग्र आसीत्" (छा० ६।२ इत्यवधार्य्य कारणभूतस्य ब्रह्मणः अद्वैतत्वप्रतिपादनादित्याह—ज रिति ॥ २५ ॥

भिदां सजातीयमुखामखण्डयत्
पदत्रयेण श्रुतिरद्वये परा ।
द्वितीयशून्यं मतमद्वयं नञा
न खेदनीयं भवता मनो वृथा ॥ २६ ॥

सजातीयविजातीयस्वगतनानात्वव्यवच्छेदेन "एकमेवाद्वि (छा० ६।२।१) इत्यखण्डैकरसत्वप्रतिपादनाद् द्विती तीयमित्यद्वितीयशब्दे नञार्थाभ्युपगमात् कथमस्मिन् वाक्ये न्वयः ? को वा द्वितीयशब्दे नञर्थः ? इति विवेचनं खेदनीयमित्याह—भिदामिति । पादत्रयेणेति । एक सजातीयस्य भेदस्य व्यवच्छेदः, एवेति स्वगतस्य, अद्वितीयमिति यस्येत्यर्थः ॥ २६ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न वास्तवाद्वैतसतः प्रमाणतः
सिद्धौ विरोधोऽनृतविश्वभानयोः ।
यथा गुणे वस्तुनि माननिश्चिते
मृषाभुजङ्गाद्यवभासयोर्न सः ॥ २७ ॥

पारमार्थिकाद्वैतस्य प्रमाणप्रतिपाद्यत्वे काल्पनिकद्वैतप्रतिभासस्य कश्चिद् विरोधो नास्ति, पारमार्थिके रज्जुखण्डेऽनुमानादिप्रमाणावसेयेऽपि काल्पनिकसर्पादिप्रतिभासो यथा न विरुद्ध्यते तद्वदित्यभिप्रेत्याह—नेति। वास्तवाद्वैतसद्वस्तुतः प्रमाणतः सिद्धौ सत्यामनृतमनिर्वाच्यं यद्विश्वं तद्भानञ्च तयोर्विरोधो नास्ति। यथा गुणे रज्जुखण्डे वस्तुरूपे प्रमाणनिश्चिते भुजङ्गादिस्तदवभासश्च तयोः स विरोधो नास्तीति योजना ॥ २७ ॥

न वाऽनृतद्वैतविशेषणादतोऽ-
न्यद्वास्तवद्वैतमिति प्रसज्जते ।
मही दृढेत्यादिवदस्ति कल्पना
स्वरूपमेवास्य न चापरं वपुः ॥ २८ ॥

ननु काल्पनिकं द्वैतमिति विशेषणादन्यस्य पारमार्थिकद्वैतस्याभ्युपगमप्रसङ्ग इत्याशङ्क्य 'कठिना पृथिवी' इत्यादिवत् स्वरूपविशेषणत्वात् कल्पनैव हि द्वैतजातस्य स्वरूपम्, नापरमस्य विशेष्यं स्वरूपमस्तीति परिहरति—न वेति ॥ २८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न चाऽप्रमाणं श्रुतिमौलिगीरियं
यथार्थविज्ञानकरी स्वयंप्रमा ।
न सिद्धवस्त्वास्पदधीर्भ्रमात्मिकाऽ-
नवद्यवेदान्तगिरोत्थिता सती ॥ २९ ॥

नन्विदं वाक्यं प्रत्यक्षादिविरोधात् स्वार्थेऽप्रामाण्यं नेयादित्या-
सन्दिग्धाविपर्यस्तविज्ञानोत्पादकत्वात्, नैवमिति परिहरति—न
नन्वित उत्पन्नमपि सिद्धवस्तुविज्ञानं भ्रममात्रं किन्न स्यात् !
शङ्क्य कारणदोषबाधकप्रत्ययानुपलम्भात्, नैवमिति परिहरति
सिद्धवस्त्विति ॥ २९ ॥

सम्भाविताशेषकलङ्कविभ्रमो
द्वैतावभासः क्षमते न बाधितुम् ।
अपौरुषेयानघवेदसम्भवं
ह्यद्वैतविज्ञानमबाधविभ्रमम् ॥ ३० ॥

सम्भावितसकलदोषद्वैतप्रतिभासो नासम्भाविताशेषदोषापौरु-
मजनितमद्वैतविज्ञानं बाधितुमुत्सहते इत्याह—सम्भावितेति ।
धविभ्रमम्—बाधः प्रमाणान्तरेण निवृत्तिः, विभ्रमो भ्रान्तिस्त-
प्रधानो निर्देशः, न विद्यते बाधविभ्रमौ यस्मिंस्तदित्यर्थः ॥ ३० ॥

शब्दस्य वृद्धव्यवहारगोचरे
सामर्थ्यमस्तीत्यविशेषतो द्वयोः ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विनिश्चितं सिद्धपदार्थकार्ययो-
रतश्चिदद्वैतपदे गिराञ्च तत् ॥ ३१ ॥

यत्तूक्तं शब्दस्य कार्यान्विते शक्तिरिति तत्राह—शब्दस्येति । वृद्धव्यवहारे शब्दसामर्थ्यावधारणस्य सिद्धकार्ययोरविशिष्टत्वान्न तत्र कार्यान्विते एव शब्दशक्तिरिति नियन्तुं शक्यते इत्यर्थः ॥ ३१ ॥

तस्मात्प्रमाणं श्रुतिवाक्यमद्वये
सदेकमित्याद्यनवद्यमीरितम् ।
अज्ञातबोधित्वमिहैव युज्यते
सकृद्विभाताहंचिदद्वये गिराम् ॥ ३२ ॥

फलितमुपसंहरति—तस्मादिति । अज्ञातबोधित्वमज्ञातज्ञापकत्व-मिहैवास्मिन्नेवाद्वैते इत्यर्थः ॥ ३२ ॥

न चैकता स्यादपि मानमेययो-
रामोत्तमेतद्व्यवहार इष्यते ।
प्रमाणमेयादिविजृम्भितं जग-
दविद्यया सत्यमिवावभासते ॥ ३३ ॥

ननु ब्रह्माद्वैतवादिनस्तव प्रमाणप्रमेययोरैक्यात् कथमज्ञातज्ञापकं प्रमाणमित्यभ्युपगम्यते इत्याशङ्क्य सत्यम्, वस्तुतस्तथात्वेऽपि व्यावहारिकभेदाङ्गीकाराद् नैवमिति परिहरति—न चेति ॥ ३३ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतो न चास्मन्मतमीक्षितुं मनाक्
स बौद्धपक्षः क्षमते कटाक्षतः ।
तदेकमेवेति गिरा श्रुतेस्ततोऽ-
स्त्यद्वैतसिद्धिः श्रुतिमौलिवादिनाम् ॥

अत एव बौद्धराद्धान्तगन्धोऽपि नास्मत्पक्षमीक्षितुं इत्याह—अत इति ॥ ३४ ॥

तथाऽनुमानं च पुरा प्रदर्शितं
चिदद्वये भेदतमोविलापनम् ।
हेतुर्विरोधो न च तत्र वर्त्तते
सपक्ष एवेति न चाऽप्रयोजकः ॥

अनुमानेनाप्यद्वैतसाधने न कश्चिद्विरोधो दर्शितः । पूर्वमेवेत्याह—तथानुमानमिति । यत्तूक्तं भेदव्यवहारस्य त्वाद् अद्वैतविरुद्धद्वैतसाधनोऽयं हेतुरिति तद् दूषयति— विरुद्धो हि नाम पक्षविपक्षयोरेव वर्त्तमानो हेतुः, अयं म्बने काल्पनिकचन्द्रभेदव्यवहारे सपक्षे एव वर्त्तते । न च व्यवहारः कश्चित् पारमार्थिकभिन्नवस्त्वालम्बनोऽस्ति, येन या ऽनैकान्तिको भवेदित्यर्थः । चकारेण सत्स्वभावानुगतभेद भिन्नालम्बनत्वप्रत्यक्षविरोधात् कालात्ययापदिष्टतानिरासोऽपि प्रत्यक्षस्यैकानेकवस्त्वालम्बनत्वेन सन्दिह्यमानतया तस्येदानीं प्यमाणत्वात् । न च हेतोः सन्दिग्धप्रयोजकत्वमपीत्याह— भेदव्यवहारत्वस्यैकवस्त्वालम्बनत्वेऽप्रयोजकत्वात् ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वस्य च विवादाध्यासितत्वेऽपि भेदव्यवहारत्वलिङ्गेनैव सिद्धत्वादि-त्यर्थः ॥ ३५ ॥

श्रुत्याऽनुमानेन च सिद्ध्यति स्वयं
ज्योतिश्चिदद्वैतमखण्डमक्षयम् ।
आरोपितं तत्र जगन्नचाऽद्वयाद्
विभिद्यते रज्जुभुजङ्गवद् मृषा ॥ ३६ ॥

तस्मादपगतनिखिलदूषणेन अनुमानेनापि निष्प्रत्यूहमद्वैतसिद्धि-रित्याह—श्रुत्येति ॥ ३६ ॥

तथाऽद्वयेऽध्यक्षमपीष्यते यतः
सन्मात्रमेतद्विषयीकरोत्यतः ।
एतत्प्रकारोऽपि पुरा प्रदर्शितः
किमङ्ग भूयो वचसां परिश्रमैः ॥ ३७ ॥

प्रत्यक्षेणाऽप्यद्वैतं साधयितुं सुखेन शक्यमित्याह—तथेति । अद्वये इति च्छेदः । अध्यक्षमपि प्रमाणमद्वये वस्तुनि साधकतयेष्यते, यत एतदध्यक्षमपि सन्मात्रमेव विषयीकरोति अतो हेतोरिति योजना । ननु भेदप्रतिभासस्यापीन्द्रियान्वयव्यतिरेकानुविधायित्वमित्युक्तमाशङ्क्य इन्द्रियान्वयव्यतिरेकयोर्भेदविभ्रमाधिष्ठानभूतसन्मात्रग्रहणेनान्यथासिद्ध-त्वादित्यावेदितमधस्तादित्याह—एतत्प्रकारोऽपीति । प्रत्यक्षेऽपि शुक्त्याद्यधिष्ठाने रजतादिभ्रान्तिदर्शनादिहापि द्वैतप्रतिभासो नाऽनुपपन्नः स्वतोऽनेकात्मकत्वाभावेऽप्यविद्याकृतानेकात्मकत्वादुपपद्यते सर्वो व्यवहार

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति अपि शब्देन द्योत्यते। तेन प्रत्यक्षेणाद्वैतग्रहणे भेदप्रतिभास- प्रसङ्गः इति शुक्त्यादेरनेकात्मकत्वात् सामान्यविशेषभावोऽस्तु न तस्य, तदभावादिति च शङ्का निरस्ता वेदितव्येति भावः ॥ ३७॥

उपाधियुक्तं ह्यवभासयत्यपि
प्रत्यक्षमज्ञानविलापनेऽक्षमम्।
तदागमोद्भूतधिया विलीयते
यथैक्यधीः स्यान्न ततोऽण्वपि भ्रमः॥

ननु वस्तुतत्त्वेऽपि प्रत्यक्षेणावभासमानेनाज्ञानमेवाव- कुतस्तन्निमित्तानेकात्मकत्वमित्याशङ्क्य आगमेनैवापरोक्षीकृते व- निवर्त्तते एव अविद्या, नेन्द्रियादिजनितविज्ञाने, तस्य तदनुपमर्द- इत्याशयेनाह—उपाधियुक्तमिति। यद्यपि वस्तुमात्रविषयमेव प्र- तथाप्यज्ञानोपाधिकमेव वस्त्ववभासयति, निरुपाधिकवस्तुनो नि- खिलव्यवहारविषयत्वात् नाज्ञानमुपमृद्नाति। अत उक्तं क- ज्ञानविलापने, अक्षममिति च्छेदः, अक्षममसमर्थमिति। अ- ज्ञानं वक्ष्यमाणरीत्या निरस्तनिखिलप्रपञ्चनिरुपाधिकब्रह्म गोच- तस्मादागमजमेवाद्वैतज्ञानमज्ञानोपमर्दकम्। अत उक्तम्—त- मागमोद्भूतधिया विलीयते इति। आगमो हि विरुद्धपदार्थ- धिकरण्याभिधानमुखेन समस्तोपाधिविनिर्मुक्त वस्तुस्वरूपमात्रं न- न्तरीयकतया अज्ञानतत्कार्ये निवर्त्तयतीति युक्तमेवाऽऽगमस्या- र्त्तकत्वमिति भावः। एतदेव दृष्टान्तेन द्रढयति—यथैक्यधीरि- देवदत्तैक्ये ऽभिज्ञाप्रत्यक्षेणापरोक्षीकृते देशकालोपाधिकत्वविभ्रमः स्वन्मात्रविषयेणापि प्रत्यभिज्ञाप्रत्यक्षेण भेदभ्रान्तिनिवृत्तिः, प्रमेयविशेषाभावेऽपि प्रमाणविशेषादेव प्रत्यक्षादिनाऽपरोक्षी-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाऽज्ञाननिवृत्तिः, आगमेनापरोक्षीकृते तन्निवृत्तिरित्यर्थः । ततस्तस्माद-
प्यपि मनागपि भ्रमोऽत्र न शङ्क्य इति शेषः ॥ ३८ ॥

न धर्मधर्मित्वमपीष्यते सुख-
ज्ञानादिरूपस्य सदद्वयात्मनः ।
न निर्गुणे सन्ति गुणा न चिद्घने
जडेन साम्यं घटते मृषात्मना ॥ ३९ ॥

ननु तथापि सुखज्ञानादीनां ब्रह्मधर्मतया कथमद्वैतमेकरसं सिद्ध्येत्, नहि तेषां गुणानां ब्रह्मस्वरूपत्वं सम्भवति । किन्तु नीलोत्पलादिवद् गुणगुणिभाव एव न्याय्यः । तस्माद्विज्ञानानन्दादिगुणगणालङ्कृतं ब्रह्म "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० २ । १ । १ ) "विज्ञानमानन्दं ब्रह्म" ( बृ० ३ । ९ । २८ ) इत्यादिश्रुतिसिद्धं कथमेकरसमद्वैतं स्यादित्याशङ्क्य "एकधैवाऽनुद्रष्टव्यम्" ( बृ० ४ । ४ । २० ) "एकमेवाऽद्वितीयं" ( छा० ६ । २ । १ ) "नेह नानास्ति किंचन" ( बृ० ४ । ४ । १९ ) "नेति नेति" ( बृ० २ । ६ । ६ ) इत्यादिश्रुतिवाक्यकदम्बेन ब्रह्मण्यशेषविशेषप्रतिषेधाद् निर्गुणमेव ब्रह्मैकरसमद्वैतं सिद्धमित्याशयेन परिहरति—न धर्मेति । अयमर्थः—न तावन्निखिलविशेषप्रतिषेधे ब्रह्मणि गुणगुण्यादिभावः प्रतिपत्तुं शक्यते, "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० २ । १ । १ ) इत्यादिवाक्यश्रवणात् । तत्र गुणगुण्यादिभाव इति चेत्, तत्र वक्तव्यम्; किं गुणगुण्यादिभावस्तत्र कण्ठोक्तः ? उत सामर्थ्यलब्ध इति ? नाद्यः, तत्र गुणगुण्यादिशब्दाश्रवणात् । नापि द्वितीयः, अखण्डात्मपरश्रुतिविरोधात् । यदि हि ज्ञानादिशब्दा गुणविशेषेषु गृहीतसंगतिकाः स्युः, तत एवं स्यात् । ते तु चैतन्यखचितान्तःकरणपरिणामविशेषेषु लब्धसामर्थ्या द्रव्यभेदानाचक्षते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्र तु ब्रह्मपदेन सामानाधिकरण्यबलात् स्वरूपमात्रपरा इ
शब्दाः। अतो निर्गुणश्रुतिविरोधादखण्डमात्रैकतत्परत्व
गुणगुण्यादिपरत्वं सत्यादिशब्दानाम्, न वा चिद्घनसद्गु
जडानृतेन वस्तुना साम्यं घटते इति ॥ ३९ ॥

यन्नेह नानेतिमुखश्रुतेर्गिरां
कदम्बतो गीतमलक्ष्यलक्षणम्।
कथं भवेत्तत्र गुणादिकल्पना
निरञ्जने द्वैतकलङ्कवर्जिते ॥ ४० ॥

एतदेव विशदयति—यन्नेह नानेति ॥ ४० ॥

श्रुतौ मनोधर्मतया श्रुताः सुख-
ज्ञानादयो नैव त आत्मनीश्वरे।
त आत्मधर्मा इति ये जगुर्जडा
अलं विचारे श्रुतिसम्मतेऽस्तु तैः ॥४१॥

ज्ञानसुखादयो नवैवाऽऽत्मगुणा इति वेदस्मृतिविरुद्धत्वा
स्माभिराद्रियते इत्याह—श्रुताविति। "कामः सङ्कल्पो विचि
श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" (बृ० १।५
इति श्रुतौ "इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः।
क्षेत्रं" (गी० १३। ६) इति स्मृतौ च सुखादयो मनोधर्मत्वे
ते गुणा आत्मनः सन्तीति ये तार्किका जडा आत्मानं जडं
जगुर्वदन्ति; तैर्मूढैः श्रुतिसम्मते वेदान्तैकसमधिगम्यवस्तुवि
मस्तु। न ते विचारप्रधानशास्त्रे संवादार्हा इत्यर्थः ॥ ४१ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदद्वयं कीदृशमित्यखण्डितं
स्वरूपमेव श्रुतिरद्वयात्मनः ।
जगौ सुखं ज्ञानमनन्तमित्यसौ
न धर्मधर्मित्वमुदाजहार सा ॥ ४२ ॥

सत्यज्ञानादीनां स्वरूपलक्षणया सामानाधिकरण्याद् "ब्रह्मविदाप्नोति परम्" (तै० २ । १ ) इति परब्रह्मवेदनफलं परप्राप्तिमुपक्षिप्य किं लक्षणं तद्ब्रह्म, कीदृशं वा तज्ज्ञानम्, किमात्मकञ्च तत्फलम् ? इत्येतदर्थनिर्धारणाय वाक्यमिदम्—"सत्यं ज्ञानम्०" (तै० २ । १ । १ ) इत्यादि । तत्र गुणगुणित्वप्रतिपादने समस्तविशेषप्रत्यस्तमयप्रतिपादकागमविरोधः स्यादित्याशयेनाह—तदद्वयमिति । तदद्वयं परशब्दवाच्यं ब्रह्म कीदृशं किं लक्षणम् ? इत्याकाङ्क्षायां "सत्यं ज्ञानमनन्तं ब्रह्म" (तै० २ । १ । १ ) इति "विज्ञानमानन्दं ब्रह्म" (बृ० ३ । ९ । २८ ) इति च श्रुतिरसौ अद्वयात्मनः स्वरूपमेवाखण्डितमेकरसं जगौ कथितवती, न सा श्रुतिर्धर्मधर्मित्वमद्वयस्य सत्यादेश्चोदाजहारोदाहृतवतीति योजना ॥ ४२ ॥

ननु प्रपञ्चस्य चिदद्वयं मतं
त्वयाप्युपादानमखण्डवादिना ।
भवन्मते तत्सगुणत्वमन्तरा
कथं प्रपञ्चोद्भव इष्यते ततः ॥ ४३ ॥

ननु द्रव्यत्वचेतनत्वोपादानत्वादिभिर्हेतुभिर्ब्रह्मणोऽपि सगुणत्वमनुमिमीमहे—विमतं ब्रह्म सगुणम्, उपादानत्वाद्, मृदादिवदित्याशयेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शङ्कते—नन्विति । त्वयाऽखण्डात्मवादिनापि प्रपञ्चस्योपा[illegible] चिदद्वयं ब्रह्म मतम्, तत्सगुणत्वमन्तरेण भवन्मते ततो ब्रह्मणः प्र[illegible] द्भवः कथमिष्यते इति योजना ॥ ४३ ॥

मैवं न चारम्भमतं मतं न चा-
प्यत्यन्तदुष्टः परिणाम इष्यते ।
विवर्त्तवादे मम सम्मते गुणा-
नङ्गीकृतेरेव न निर्गुणक्षतिः ॥ ४४ ॥

किमिदमुपादानत्वम् ? आरम्भकत्वम्, किं वा परिणामित[illegible] तदुभयमपि श्रुतिविरोधत्वादनङ्गीकृतत्वाच्च न सम्भवति । अथ वि[illegible] विकाररूपविवर्त्तमानाऽविद्याधिष्ठानत्वम्, तर्हि मृदादौ तद[illegible] साधनविकलो दृष्टान्तः । न वा द्रव्यत्वात् सगुणत्वं सिद्ध[illegible] निर्गुणश्रुतिविरोधान्न द्रव्यत्वम् । चेतनत्वन्तु स्वरूपमेव ज्ञानं[illegible] सामानाधिकरण्यात् । तस्मादसङ्गतमेतत् । अनुमानेन [illegible] सगुणत्वं प्रतिपद्यामहे इत्यभिप्रेत्य समाधत्ते—मैवमिति । गुण[illegible] कृतेरेवेति । गुणगुणित्वमन्तरेणैवाविद्यकप्रपञ्चोत्पत्तिसिद्धेरित्यर्थः ॥

अनाद्यविद्याकलितं चिदद्वये
प्रपञ्चभानं गुणितामृतेऽपि तत् ।
संसिद्ध्यतीत्यत्र न चास्त्यसम्भवोऽ-
सम्भावितोद्भूतिपटीयसीयुते ॥ ४५ ॥

एतदेव स्पष्टयति—अनादीति । असम्भावितस्योद्भवपु[illegible] पटीयसी अत्यन्तचतुरा या माया तया युते मायोपहिते चिदद्व[illegible]

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चविद्याध्यारोपितं यत्तापञ्चभानं गुणगुणित्वमन्तरैव तत् सिद्ध्यतीत्यत्रा-सम्भवो न च शङ्क्य इति योजना ॥ ४५ ॥

सुखस्वभावत्वमनन्तवस्तुनो
मतं श्रुतेः सम्यगतो मुमुक्षुभिः ।
प्रयत्नमाश्रित्य मतं श्रुतेर्धिया
विचार्य्य बोध्यं श्रवणादिसाधनैः ॥ ४६ ॥

ननु नित्यनिरतिशयानन्दस्वरूपञ्चेत्, तर्हि प्रयत्नं विनैव प्राप्येतेति चेत्, सत्यम्; किन्तु तदज्ञानमात्रनिवृत्त्यर्थम्, नहि तत्प्राप्त्यर्थं प्रयत्न-म(श्रो?)पेक्ष्यते । तन्निवृत्तौ स्वभावभूतमेव सुखं श्रुतिसिद्धमित्याश-येनाह—सुखस्वभावत्वमिति ॥ ४६ ॥

ननूचितं ब्रह्मसुखं मुमुक्षुभिः
पुमर्थरूपेण सदाऽर्थ्यते धिया ।
यदात्मरूपं सुखमस्ति तत्तथा
कथं पुमर्थत्वमिहेष्यते पुनः ॥ ४७ ॥

ननु नित्यनिरतिशयानन्दसर्वज्ञसर्वेश्वरत्वादिगुणगणविशिष्टं ब्रह्म चेन्नाश्रीयते, तर्हि तद्भावापत्तिलक्षणस्य मोक्षस्य कथं पुरुपार्थता ? नहि कदाचिद् सुखं मे भूयासमिति कश्चित् कामयमानो दृष्टः, सम्भवति च; सुखं मे भूयादितीच्छासमुल्लास इत्याशयेन शङ्कते—नन्विति ॥ ४७ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मैवं यतो लोक इहेष्यते सुख-
प्राप्तेः सदेच्छाविषयत्वमादरात्।
सुखापरोक्षाय न शक्यमन्यथा
सुखे पुमर्थत्वमनन्यतामृते ॥ ४८ ॥

निरस्तसमस्तगुणगुण्यादिभावमनन्यानुभवानन्दैकरसं ब्रह्मैव सु-
तदज्ञानादेव सुखेऽप्राप्तत्वविभ्रमः, तन्निवृत्तौ तत्प्राप्तमिवोच्य-
लोकेऽपि तदज्ञानादेव सुखं मे भूयादित्यादिभेदविभ्रम इत्या-
परिहरति—मैवमिति। लोके तु सुखप्राप्तेः कामनाविषयता सुखा-
क्षाय, नहि सुखापरोक्षे पुरुषार्थे सम्भवति सुखसम्बन्धस्यापि पुरु-
त्वप्रयोजकत्वं कल्पयितुं शक्यम्, नहि अनन्यत्वमन्तरा सुखे पु-
त्वमपीष्यते इत्यर्थः ॥ ४८ ॥

सुखापरोक्षे पुरुषार्थ एव तत्-
सम्बन्धमात्रस्य पुमर्थता कथम्।
स्वरूपभूतं सुखमप्यविद्यया
तिरस्कृतं प्राप्तमनाप्तवन्नृणाम् ॥ ४९ ॥

एतदेव विवृणोति—सुखापरोक्ष इति। अविद्यामात्रमप्राप्ति-
स्वरूपभूतमिति। अविद्यया तिरस्कृतमाच्छादितं सत्
स्वरूपभूतं सुखं नृणां देहाभिमानिनामनाप्तवदस्तीति योजना ॥

स्वरूपबोधेन तदावृतिक्षये
सुखं तदा प्राप्तमिवोच्यते स्वकम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ततोऽप्यनन्यं सुखमात्मनो मतं
पुमर्थरूपं विदितं मुमुक्षुभिः ॥ ५० ॥

विद्यया तदावरणनिवृत्तिलक्षणा तत्प्राप्तिरित्याह—तत्स्वरूपबोधेनेति ॥ ५० ॥

ननूक्तिरेषा भवतामसङ्गता
सुखात्मनोर्भेद इहेष्यते यतः ।
अहं सुखीति प्रतिभानतस्तयोः
स्फुटं हि सम्बन्धमतिः प्रतीयते ॥ ५१ ॥

अहं सुखीति सम्बन्धावगमात् सुखात्मनोर्भेद इति शङ्कते—नन्विति ॥ ५१ ॥

न चैकवस्तुन्यपि सम्भवेन्नयात्
सम्बन्धभानं न च दृष्टिगोचरम् ।
न चाऽस्ति शाऽहं सुखमित्यपि प्रथा
न चाऽस्त्यभेदे किलमानमेतयोः ॥ ५२ ॥

सुखस्य स्वरूपत्वे तथात्वमयुक्तमित्याह—न चेति । नह्येकस्मिन्नेव सम्बन्धावभासः सम्भवति । न चास्ति सुखमहमिति कदाचित् प्रतीतिः, नापि सुखात्मनोरभेदे प्रमाणान्तरमस्ति । येनाहं सुखीति प्रतिभासस्य भ्रान्तित्वमाशङ्क्येतेत्यर्थः ॥ ५२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदा सुखं स्वात्मवपुर्भवेत्तदा
सदाऽनुभूयेत न चोपलभ्यते ।
यतस्ततः स्यात् सुखमात्मनः पृथ-
गिति प्रसिद्धं ह्यनुमानतस्तथा ॥५३॥

नित्यं सुखानुभवाभावादपि नात्मस्वरूपं सुखमित्याह—यदेति । विमतं सुखं नात्मस्वरूपम्, आत्मन्युपलभ्यमाने सत्येव तस्यानुपलभ्यमानत्वात् । यस्मिन्नुपलभ्यमाने सति यन्नोपलभ्यते, तत् ततः पृथक् यथोपलभ्यमानाद्गन्धादनुपलभ्यमानो रसस्तत पृथगित्यर्थः । तथा चानुभवयुक्तिविरुद्धमात्मसुखयोरैक्यमिति भावः ॥ ५३ ॥

सुखञ्च साध्यं जगति प्रतीयते
पुमान् स्वतः सिद्ध इतोऽप्यनादितः ।
तयोः कथं वाप्यवकल्पते नया-
देकत्वमद्धा स्वधियेति वीक्ष्यताम् ॥५४॥

सिद्धसाध्ययोरात्मसुखयोरैक्यं न्यायविरुद्धमित्युक्तम् । तदुपपादयति—सुखमिति । इतोऽपि हेतोस्तयोरात्मसुखयोरेकत्वमद्धा साक्षात् युक्तितः कथमवकल्पते इति स्वधिया स्वस्थचित्तेन त्वया वीक्ष्यतामिति योजना ॥ ५४ ॥

किञ्चाऽऽत्मरूपत्वमितीष्यते त्वया
सुखस्य चेत्तर्हि किमर्थमुद्यमः ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुखार्थमस्यात्मसुखस्य सर्वदा
स्वतोऽस्ति सिद्धत्वमतोऽप्यनर्थकः ॥५५॥

किञ्च, सुखस्यात्मस्वरूपत्वे तदर्थः पुरुषप्रयत्नोऽनर्थकः स्यात्, आत्मस्वरूपस्य सर्वदा सिद्धत्वादित्याह—किञ्चेति । स्पष्टम् ॥ ५५ ॥

सुखार्थमेवाऽयमहर्निशं जनो
बम्भ्रम्यमाणो निखिलः प्रदृश्यते ।
न वेश्मसिद्धं मधु कानने जनै-
रन्विष्यतेऽतो न सुखात्मतात्मनः ॥५६॥

"अर्के* चेद् मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्याऽर्थस्य सम्प्राप्तौ† को विद्वान् यत्नमाचरेत् ॥"

इत्याभाणकं प्रथयन्नाह—सुखार्थमिति । अतिशयेन पुनः पुनः भ्रमतीति बम्भ्रम्यमाण इत्यर्थः । स्पष्टमन्यत् ॥ ५६ ॥

आत्मत्वमेतस्य सुखस्य चेत्तदा
शास्त्रं वृथा स्यात् सुखसाधने परम् ।
ततोऽस्य भज्येत स्वतः प्रमाणता
न साम्प्रतं तच्छ्रुतिमौलिवादिनाम् ॥५७॥

सुखात्मनोरैक्ये शास्त्रानर्थक्यं स्यादित्याह—आत्मत्वमिति ॥५७॥

---

* गृहकोणे । 'अर्कं' इति क्वचित् पाठः । † 'संसिद्धौ' इति पाठान्तरम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मात् सुखस्यात्मगुणत्वमिष्यते
न चात्मरूपत्वमनेकयुक्तिभिः ।
मीमांसकैस्तर्कविशारदैस्तथे-
त्यत्रोच्यते श्रौतमतं सयुक्तिकम् ॥५८

पूर्वपक्षमुपसंहरति—तस्मादिति । समाधानं प्रतिजानीते—त्रोच्यते इति ॥ ५८ ॥

आनन्द आत्मा न मिते सुखं भवे-
द्यो वै हि भूमा सुखमस्ति तत्पदम् ।
विज्ञानमानन्दमिति श्रुतिर्जगौ
स्वभावभूतं सुखमात्मनो वपुः ॥५९॥

"आत्मैवानन्दः" "आनन्द आत्मा" (तै० २।५।१) "यो वै भूमा तत्सुखम्" (छा० ७।२३।१) इत्यादि समर्पितमात्मनः सुखस्वभावत्वमित्याह—आनन्द इति। सुखमिति, "नाल्पे सुखमस्ति" (छा० ७।२३।१) श्रुतेरित्यर्थः ॥ ५९ ॥

न चाप्यविद्याकृतभेदभानतोऽ-
पनेतुमेषा श्रुतिगीर्हि शक्यते ।
स्वतः प्रमाणं श्रुतिवाक्यमिष्यते
भ्रमापहृत्वेन चिदात्मतत्परम् ॥ ६०

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेयं श्रुतिरविद्याध्यासपरिनिष्पन्नभेदप्रतिभासमात्रेणाऽपनेतुं शक्यते इत्याह—न चेति। तथा चापौरुषेयागमप्रमाणसिद्धमात्मस्वरूपभूतं सुखं यावदज्ञानं तावदेवाविद्यकाध्यासपरिनिष्पन्नभेदप्रतिभास इति भावः ॥ ६० ॥

आनन्द आत्मेति वचः सुखात्मनो-
रभेदमाहत्य वदत्यदः श्रुतेः ।
न धर्म्मधर्म्मित्वपरन्न निर्गुणे
गुणित्वमापादयतीह कर्हिचित् ॥ ६१ ॥

न वा आनन्द आत्मेति सामानाधिकरण्यं नीलोत्पलमित्यादिवद् गुणगुणित्वनिबन्धनम् । सुखात्मनोर्गुणगुणित्वे प्रमाणाभावादित्याह—आनन्द आत्मेति । श्रुतेरदो वचः "आनन्द आत्मा" (तै० २ । ५ । १) इति वाक्यमभेदमाहत्य कण्ठरवेण वदतीत्यर्थः। सुगममन्यत् ॥ ६१ ॥

सुखात्मनोर्नास्ति भिदा मनागपि
सम्बन्धभेदावगतेरभावतः ।
अतस्तदेकत्वनिबन्धनं श्रुतौ
समाश्रयत्वं पदयोर्विनिश्चितम् ॥ ६२ ॥

"आनन्द आत्मा" (तै० २ । ५ । १) इत्यादिसामानाधिकरण्यमेकत्वनिबन्धनमेवेत्याह—सुखात्मनोरिति । आनन्द आत्मेति पदयोः श्रुतौ समाश्रयत्वं सामानाधिकरण्यमित्यर्थः। भिन्नप्रवृत्तिनिमित्तशब्दानामेकस्मिन्नर्थे वृत्तिर्हि सामानाधिकरण्यम्, गुणगुण्यादिषु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सम्बन्धविशेषावगमपूर्वकत्वात् तद्विषयत्वनिश्चयस्य। ततश्च सुख… सम्बन्धविशेषानवगमात् "आनन्द आत्मा" इति सामानाधि… कत्वनिबन्धनमिति निश्चितमित्यर्थः ॥ ६२ ॥

अहं सुखीति प्रतिभासतो मृषाऽ-
नन्ते परिच्छेदधियस्तु सम्भवः।
भवेद्घटाकाशधियो यथा मृषाऽऽ-
काशेऽवभासो न तु वस्तुतस्तथा ॥ ६३ ॥

अहं सुखीति प्रतिभासस्य चापरिच्छिन्ने परिच्छेदावभास… घटाकाशादिप्रतिभासवदध्यासरूपता प्रसिद्धेत्याह—अहमिति ॥ ६३ ॥

त्वयाऽनुमानं यदवादि तन्मृषा
हेतोरनैकान्तिकभावतो यतः।
भ्रमावभासे नियमो न चाऽस्त्ययं
यदेकभाने तदभिन्नभासनम् ॥ ६४ ॥

ननु सुखात्मनोर्भेदे प्रमाणमनुमानमुपन्यस्तं तस्मिन्नुपलभ्य… प्यनुपलभ्यमानत्वादिति हेतोरनैकान्तिकत्वात्तदसदित्याह—… यत्त्वयानुमानमवादि उक्तम्, तन्मृषा; हेतोरनैकान्तिकत्वात्। भ्रमावभासेऽयं नियमो न चास्ति, यदेकस्मिन् भानगोचरे तदभिन्नस्य भासनं भवेदिति योजना ॥ ६४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुखादिबिम्बप्रतिबिम्बवस्तुषु
मुखादिरूपे सति भानगोचरे ।
न चावदातत्वमभिन्नमप्यतोऽ-
वभासतेऽतो व्यभिचारितेरिता ॥ ६५ ॥

एतदेव दृष्टान्तेन स्पष्टयति—मुखादीति । प्रतिबिम्बादिषु मुखादिगतरूपे च भासमानेऽपि तदभिन्नस्याऽवदाततताधर्मस्याऽनवभासमानत्वाद्यो या हेतोर्व्यभिचारिता ईरिता सा सुस्थेत्यर्थः ॥ ६५ ॥

न रूपतो वाऽस्त्यवदातता पृथक्
तस्याः पृथक्त्वे न च चक्षुषा ग्रहः ।
गुणान्तरत्वे सति चक्षुषा कथं
ग्राह्यत्वमस्याऽनुपृथक्त्वमप्यतः ॥ ६६ ॥

अवदाततताधर्मस्य सुखरूपादभिन्नत्वं साधयति—न रूपत इति । रूपतः स्वरूपात् अवदातता पृथङ् नास्ति । स्वरूपाभिन्नत्वे तस्या अवदाततायाश्चक्षुषा ग्रहो ग्रहणं न स्यादित्यर्थः । नापि गुणान्तरम्, चक्षुरेकेन्द्रियग्राह्यत्वादित्याह—गुणान्तरत्वे इति ॥ ६६ ॥

न रूपसामान्यमपीयमिष्यते
यतो न रूपे मलिने प्रदृश्यते ।
रूपान्तरत्वे युगपद् गुणद्वयं
ह्यवान्तरं नो समवैति वस्तुनि ॥ ६७ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नापि रूपत्वसामान्यम्, मलिने रूपेऽनुपपत्तेरित्याह—नो रूपान्तरम्, अवान्तरजातीयस्य गुणद्वयस्य युगपदेकस्मिन् द्रव्ये ... यानुपपत्तेरित्याह—रूपान्तरत्वे इति ॥ ६७ ॥

न रूपधर्मोऽप्यवदातता भवेद्
द्रव्यादिभिन्नत्व इयं खपुष्पवत् ।
ततोऽपृथक्त्वेन च सास्ति रूपतो-
भिन्ना पुरा प्रोक्तनयेन सर्वथा ॥ ६८ ॥

नापि रूपस्यैव धर्म्मविशेषः, तस्य द्रव्यादिष्वनन्तर्भावे सति खकुसुमवत् प्रतिभासानुपपत्तेरित्याह—न रूपेति । ततोऽपृथक्त्वे ... प्वन्तर्भावे चोक्तन्यायेन रूपादन्यत्वासम्भवादित्यर्थः ॥ ६८ ॥

तस्मादभेदेऽपि हि रूपतः स्वतो-
वदातताया मुकुराद्युपाधितः ।
रूपोपलम्भे सति साऽवदातता
न चक्षुषा गृह्यत इत्यतोऽपृथक् ॥ ६९ ॥
तथात्मरूपस्य सुखस्य मानसा-
द्युपाधिसामर्थ्यवशाच्चिदात्मनः ।
सदोपलम्भे सति नो विरुद्ध्यते-
प्यभानमेवं न सुखात्मनोर्भिदा ॥ ७० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

फलितमाह—तस्मादिति द्वाभ्याम् । तस्मादवदाततधर्म्मस्य रूपादभेदेऽपि उपाधिवशादेव रूपोपलम्भेऽप्यनुपलम्भवत् सुखस्यात्म-स्वरूपत्वेऽप्यन्तःकरणाद्युपाधिसामर्थ्यादात्मोपलम्भेऽप्यनुपलम्भो न विरुद्धयते इति द्वयोः समुदितार्थः ॥ ६९–७० ॥

सुखस्वरूपस्य चिदात्मनः स्वतोऽ-
प्यनादिसिद्धत्व इतो ह्यभानतः ।
साध्यत्वभानं किल लौकिके जने
सङ्गच्छते वस्तुत आत्मरूपता ॥ ७१ ॥

अत एवात्मनोऽनादिसिद्धत्वेऽपि सुखस्वरूपस्यानवभासनात् साध्य-त्वावभासोऽपि जायते इत्याह—सुखस्वरूपस्येति । वस्तुतः सुखस्यात्म-रूपत्वमेवेत्यर्थः ॥ ७१ ॥

ततः सुखार्थोऽपि नरोद्यमस्तद-
भिव्यञ्जकत्वेन स सार्थको भवेत् ।
उपाधिसम्बन्धवशेन विभ्रमा-
त्सुखानभिव्यक्तिरितीयते नृणाम् ॥७२॥

स्नगादियोगेन यदाऽवदातततो-
पाधेरभिव्यक्तमिदं सुखं तदा ।
नित्येऽप्यजन्ये जनिविभ्रमो नृणां
सुखे भ्रमोपाधिवशेन न स्वतः ॥ ७३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरुषप्रयत्नस्यापि साफल्यमाह—तत इति द्वाभ्याम्। सुखार्थोऽपि पुरुषप्रयत्नस्तदभिव्यञ्जकत्वेनार्थवानेव, तस्य नित्य-प्युपाधिमलेनानभिव्यक्तत्वात्। पुरुषप्रयत्नेनोपाधिनैर्मल्यापा-तदभिव्यक्तौ तदुत्पत्तिविभ्रमो लोकस्येति द्वयोरर्थः ॥ ७२-७३॥

शास्त्रस्य सार्थक्यमपीष्यते सुखाऽ-
भिव्यक्तिसामग्र्यकलापबोधनात्।
किञ्चाऽनुमानेन सुखस्वभावतां
विद्मो वयं प्रत्यगनादिवस्तुनः ॥ ७४॥

यत्तूक्तं सुखस्य नित्यत्वे तत्साधनविधायिशास्त्रस्यानर्थक्य-मिति तत्राह—शास्त्रस्येति ॥ ७४ ॥

सुखस्वभावोऽतिशयानुपाधिक-
प्रेमास्पदत्वाद् विमतः स आन्तरः।
वादिद्वये सम्प्रतिपन्नसौख्यवत्
सुखं सदा प्रेमपदास्पदं यतः ॥ ७५॥

अनुमानं दर्शयति—सुखस्वभाव इति। विमतः स प्रत्यगात्मेति पक्षः, सुखस्वभाव इति साध्यम्, निरतिशयनिरुपाधिकप्रेमा-स्पदत्वादिति हेतुः, उभयवादिसम्प्रतिपन्नसुखवदित्युदाहरणं सुख-दिना निगमनादिसूचितमिति विभागः ॥ ७५ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न चात्मनो वातिशयानुपाधिक-
प्रेमास्पदत्वं न च सिद्धमित्यपि ।
सदैव भूयासमिहात्मगोचरा-
शिषो जने सत्त्वमितीक्ष्यतेऽखिले ॥७६॥

हेतोरसिद्धत्वं व्यावर्तयति—नं चेति। न चात्मनोऽनतिशयानुपाधिकप्रेमास्पदत्वमसिद्धम्, मा न भूवं हि भूयासमित्यात्मविषयाशिषो दृश्यमानत्वादिति योजना ॥ ७६ ॥

नह्यप्रियं चाशिष आस्पदं भवेत्
नोपेक्षणीयं परिदृश्यतेऽथवा ।
आत्मा परप्रेमपदं स्वसौख्यवत्
स्वार्थं ह्युपादेयसुसाधनत्वतः ॥ ७७ ॥

एतदेवोपपत्त्या द्रढयति—नहीति। नह्यप्रियमुपेक्षणीयं वाशास्यमानं दृश्यते इत्यर्थः। अनुमानमप्याह—आत्मेति। आत्मा परप्रेमास्पदम्, स्वार्थमुपादीयमानत्वात्, सम्प्रतिपन्नसुखवदिति योजना॥ ७७॥

प्रेयस्तदेतत् सुतवित्तदेहतः
प्रेयोऽन्यतः सर्वत आन्तरत्वतः ।
इति श्रुतिः प्रेमपदैकगोचरं
प्रत्यञ्चमाहाऽऽदरतोऽद्वये परा ॥ ७८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतिश्चोक्तं प्रेमास्पदत्वमाहेत्याह—प्रेयस्तदिति। "तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादनन्तरतरं यदयमात्मा" (बृ० १।४।८) इति श्रुतिः।

"वित्तात् पुत्रः प्रियः पुत्रात् पिण्डः पिण्डात्तथेन्द्रियम्।
इंद्रियेभ्यः प्रियाः प्राणाः आत्मा प्रियतमस्ततः॥"

(बृ० वा० १।४।१० ३१) इति वार्तिकोक्तिश्चात्मनः प्रेमास्पदत्वे प्रमाणमित्यर्थः॥ ७८॥

सुखं पुमर्थं न सुखाय पूरुष-
स्तदर्थमेवोद्यम आदरान्नृणाम्।
सुखञ्च तत्साधनमात्मनः कृते
नाऽन्यार्थमात्मातिशयप्रियो नृणाम्॥७९॥

ननु निरुपाधिकप्रेमास्पदत्वमसिद्धमात्मनः सुखार्थत्वादित्याशङ्क्याह—सुखमिति। सुखमेव हि पुरुषार्थम्, नात्मा सुखार्थः, अन्यथा सुखस्य तत्साधनस्य चाऽपुरुषार्थत्वात् तदर्थं पुरुषप्रयत्नो न भवेदित्यर्थः। तस्मात् सुखतत्साधनान्येव पुरुषार्थानि नात्मा पुनरन्यार्थः। निरुपाधिप्रेमास्पदत्वादिति नायमसिद्धो हेतुरिति भावः॥ ७९॥

दुःखक्षतेरस्ति पुमर्थता यत-
स्ततो न हेतोर्व्यभिचारिताणवपि।
सुखं न चान्यार्थमपीष्यते स्वतः
परार्थताध्यासनिबन्धना सुखे॥ ८०॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुःखनिवृत्तेरपि पुरुषार्थत्वान्नानैकान्तिकतेत्याह—दुःखेति । सुख-स्यान्यार्थत्वे निरुपाधिकप्रेमास्पदत्वाभावात् साधनविकलो दृष्टान्त इत्याशङ्क्याह—परार्थतेति । तस्यापि परमार्थतोऽन्यार्थत्वाभावादध्यास-निबन्धनत्वादन्यार्थत्वप्रतिभासस्येत्यर्थः ॥ ८० ॥

स्वरूपभूतस्य सुखस्य यत्कृतं
पृथक्त्वभानं किल तन्निमित्तकम् ।
अन्यार्थताभानमपीष्यते ततो
दृष्टान्तहानिर्न च तर्क्यतामिह ॥ ८१ ॥

सुखात्मनोर्भेद इहाऽस्त्यविद्ययाऽ-
ध्यस्तो भ्रमात् सत्य इव प्रतीयते ।
ततोऽनुमानेन सुखस्वभावता
सिद्धा प्रतीचः श्रुतिमौलिगोचरा ॥ ८२ ॥

एतदेव विवृणोति—स्वरूपभूतस्येति द्वाभ्याम् । स्वरूपभूतस्यैव सुखस्य यदविद्याद्युपाधिकृतं पृथक्त्वभानं तन्निमित्तकमेवान्यार्थत्वभान-मपीति । न चैतावता दृष्टान्ताभावोऽपि शङ्कनीयः, उपाधिवशादेव सुखात्मनोः प्रातिभासिकभेदस्य विद्यमानत्वात् परवादिसम्प्रतिपन्नत्वा-च्चैदस्य । तस्मादनुमानेनापि आत्मनः सुखस्वभावत्वसिद्धिः । इति द्वयोः समुदितोऽर्थः ॥ ८१—८२ ॥

सुप्तोत्थितस्यापि सुखं यथा भवे-
त्तथाहमस्वाप्समिति प्रदर्शनात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वरूपभूतस्य सुखस्य सर्वतो-
नुभूतिरस्ति स्मृतिकारणं यतः ॥ ८३ ॥

सुखमहमस्वाप्समिति सुप्तोत्थितस्य स्वापसुखपरामर्शात् स्वापे स्वरूपभूतमेव सुखमनुभूतमिति गम्यते इत्याह—सुखस्येति ॥ ८३ ॥

सुखावमर्शो न च दुःखहानगः
स्वापेन धर्मिग्रहणादिसम्भवः ।
शब्दाद्यसंसर्गिसुखं तदात्मनः
स्वरूपभूतं श्रुतिसिद्धमित्यपि ॥ ८४ ॥

न चायं दुःखाभावविषयः सुखावमर्श इत्याह—सुखावमर्श इति। स्वापसमये धर्मिग्रहणाद्यभावे सति अभावानुभवासम्भवात् परिशेषात् विषयसुखानुभवासम्भवे सति स्वापसमये स्वरूपसुखस्यैव स्वप्रकाशत्वेनानुभवः समाश्रयणीयः। ततश्च स्वापे प्रत्यक्षमेवात्मनः सुखत्वं तथैव श्रुतेः "सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति" (कै० १ । १३) इत्यपि सिद्धमित्यर्थः ॥ ८४ ॥

स्वयंप्रकाशात्मसुखं नृणां स्वयं
स्रक्चन्दनाद्यैः प्रतिबन्धनाशतः ।
धियो विशुद्धावभासते विदां
सुखं न जन्यं स्वत आत्मरूपि तत् ॥ ८५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वरूपभूतस्यैव सुखस्य प्रतिबन्धतिरोधानमेव साधनैः क्रियते, नोत्पादनमित्याशयेनाह—स्वयंप्रकाशेति । स्रक्चन्दनाद्यैः साधनैः सुखाविर्भावप्रतिबन्धस्य नाशतस्तिरोधानात् धियो विशुद्धौ सत्यां नृणां स्वयंप्रकाशात्मसुखं स्वयमवभासते, न तु साधनैर्जन्यम्, यतस्तत्सुखमात्मरूपि विदां तत्त्वज्ञानां स्वत एवावभासते ॥ ८५ ॥

य एक आनन्द इति श्रुतौ सुखं
तदेव निर्णीतमजं विशेषतः ।
यथा यथा शुद्ध्यति धीस्तथा तथा
सुखं विभातीति मतं वरं सताम् ॥ ८६ ॥

श्रुतावपि "स एको मानुष आनन्दः" इत्युपक्रम्य "स एको ब्रह्मण आनन्दः ॥ श्रोत्रियस्य चाकामहतस्य" ( तै० २ । ८ ) इत्यन्तेन विदुषः सुखसाधनाभावेऽपि शुद्धितारतम्यनिमित्तसुखतारतम्यप्रतिपादनात् स्वरूपभूतमेव सुखं सर्वत्रानुभूयते इत्याशयेनाऽऽह—य एक इति ॥ ८६ ॥

तस्मात् सुखं ब्रह्म चिदद्वयात्मकं
प्रत्यक्षवेदान्तवचोऽनुमानतः ।
सिद्धं न चात्रास्ति भिदा मनागपि
सा निन्दिता श्रौतगिरा ह्यनेकधा ॥ ८७ ॥

तस्मात् प्रत्यक्षानुमानागमार्थापत्तिभिरात्मा सुखस्वभावोऽद्वैतरूप एवेति सिद्धमित्याशयेनाह—तस्मादिति । न चात्राद्वैते सुखस्वभावे



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनागपि गुणगुण्यादिभिदाऽस्ति, यतः सा भिदा "मृत्योः स मृत्युमाप्नोति" ( बृ० ४ । ४ । १९ ) इत्यादिश्रुतौ विनिन्दिता, इति विद्वज्जनप्रसिद्धिद्योतकः, अनेकधा "उदरमन्तरं कुरुतेऽथ तस्य भयं भवति" ( तै० २ । ७ ) इत्यादिश्रुतिगिरेत्यर्थः ॥ ८७ ॥

यदा परप्रेमपदं निरामयं
श्रुतिस्मृतिभ्यामवगम्यते धिया।
प्रत्यक्परैक्यं तत एव मुच्यते
संसारदुःखात् सुखमद्वयं परम् ॥८८॥

एवं सुखस्वभावाद्वैतात्मतत्त्वाववोधात् सर्वानर्थनिवृत्तिं नाह—यदेति । यस्मिन् समये परप्रेमपदं प्रत्यक्परैक्यं सुखमद्वयं निरामयं मायातत्कार्यामयवर्जितं श्रुतिः "तत्त्वमसि" (छां० ६ । ८ । ७) आदिरूपा, स्मृतिः "क्षेत्रज्ञञ्चापि मां विद्धि" (गी० १३ । २) इत्यादिरूपा ताभ्यां गुरूपदिष्टाभ्यां धिया स्वानुभवेनाऽयमहमस्मीति साक्षात्क्रियते । ततोऽनन्तरमेव क्षणे संसारान्मुच्यते—कृतकृत्यो भवतीति योजना ॥ ८८ ॥

बहिर्मुखं यस्य मनः प्रधावति
स्वरूपमानन्दमसौ न वेत्त्यणुम्।
अध्यास एव प्रतिबन्धकं मलं
तस्मिन् सति स्वात्मसुखं न भासते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहं ममेत्यनात्मध्यासाद्विषयाभिमुख्यमेव स्वरूपसुखाविर्भावप्रतिबन्धकमित्याशयेनाह—बहिर्मुखमिति ॥ ८९ ॥

अध्यासहानौ प्रयतेत बुद्धिमान्
वेदान्तशास्त्राभिमतादुपायतः ।
दृग्दृश्यबोधेन विचक्षणः स्वयं
सुखस्वरूपात्मपदेऽवतिष्ठते ॥ ९० ॥

अतो वैराग्यादिपुरःसरं वेदान्तश्रवणादिभिरध्यासनिवृत्तौ यतितव्यमित्यभिप्रेत्याह—अध्यासहानाविति । दृक्पदार्थोऽधिष्ठानतत्त्वम्, दृश्यमविद्यातत्कार्यम्, तयोर्बोधस्तत्त्वसाक्षात्कारः । सुखस्वरूपं प्रत्यगभिन्नं ब्रह्म नित्यमुक्तमेव, दृश्यं नित्यनिवृत्तमेवेत्येवंरूपे इत्यर्थः । स्पष्टमन्यत् ॥ ९० ॥

अशेषविश्वं सह कारणेन यत्
दृश्यं जडं दुःखमिदं मृषात्मकम् ।
सुखं न तत्रेषदपीक्ष्यते स्फुटं
युक्त्यापि दुःखात्मतयाऽस्य सर्वतः ॥९१॥

दृश्यस्य मिथ्यात्वमुपपादयितुं तत्र जडानृतदुःखात्मकत्वात् सुखगन्धोऽपि नास्तीति वैराग्यसिद्धये तत्स्वरूपं दर्शयति—अशेषविश्वमिति । ईक्ष्यते प्रत्यक्षेण युक्त्यापि । अस्य दृश्यस्य दुःखात्मकत्वात् । सर्वतः सर्वस्येत्यर्थः । स्पष्टमन्यत् ॥ ९१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अविद्ययोद्भावितमेतदम्बरे
गन्धर्ववेश्मेव मृषात्मकं जगत् ।
तत्रास्तिताधीर्जनिमृत्युकारणं
दृढा यथा सा भवबन्धनं तथा ॥६२॥

अविद्याकार्य्यत्वात् प्रपञ्चस्य मिथ्यात्वं शुक्तिरजतादिव[illegible] त्याह—अविद्ययेति । तत्र जगति अस्तिताधीः सत्यत्वबुद्धिर[illegible] मृत्युहेतुः । सा बुद्धिर्यथा यथा दृढा भवेत्, तथा तथा भवबन्धनं [illegible] भवतीत्यर्थः। तथा च अहं ममेत्यध्यासः सर्वानर्थहेतुस्तथा प्र[illegible] तथैव जगति सत्यत्वप्रत्ययोऽपि सर्वानर्थहेतुः, तन्मृषात्मबुद्ध्या [illegible] णाय मुमुक्षुभिः यतितव्यमिति भावः ॥ ६२ ॥

जडे प्रपञ्चे खमरुत्तनूनपा-
दम्भोधराणां परिणामदेहके ।
सुखस्य लेशोऽप्यतिदुर्लभो नृणां
मृषात्मके दुःखमये स्रगादिके ॥ ६३ ॥

दृश्यस्य सुखाविर्भावप्रतिबन्धकतमोगुणकार्यपञ्चमहा[illegible] त्वादपि दुःखरूपत्वमेवेत्याशयेनाह—जडे इति । ख[illegible] मरुद्वायुः, तनूनपादग्निः, अम्भो जलम्, धरा पृथ्वी, तत्परि[illegible] स्रगादिके जडे दुःखप्रचुरे मृषात्मके सुखस्य लेशोऽप्यतिदु[illegible] योजना । तदुक्तम्—

"सर्वत्र पञ्चभूतानि षष्ठं किञ्चिन्न विद्यते ।
पाताले भूतले स्वर्गे रतिमेवि क धीरधीः ॥" इति ॥ ६[illegible]

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथा यथाऽध्यासवशेन भोगधी-
रुदेति सौन्दर्यधियाऽक्षगोचरे ।
तथा तथा संसृतिरुत्तरोत्तरं
दृढा महादुःखमयी प्रसज्जते ॥६४॥

विषयशोभनत्वाध्यास एव सर्वानर्थहेतुरित्याशयेनाह—यथा यथेति ॥ ६४ ॥

तादात्म्यधीर्देहगता दृढा यदा
तदा सुखं कुत्र लभेत मूढधीः ।
नह्यग्निकुण्डे शुचितापितः पुमान्
शीतं सुखं शान्तिमुताश्नुतेऽण्वपि ॥६५॥

देहाद्यध्यासवतः कुत्रापि सुखं नास्तीत्याह—तादात्म्यधीरिति । शुचिर्ग्रीष्माग्निस्तेन तापितोऽग्निकुण्डे, पतित्वेति शेषः, पुमान् शीतं सुखं वा शान्तिं वाऽण्वपि नह्यश्नुते इत्यन्वयः ॥ ६५ ॥

देहद्वयेऽहंमतिमोहितो जडः
प्रसज्जते स्रग्वनितादिवस्तुनि ।
दुःखात्मके सौख्यमतिर्न चाऽश्नुते
सुखं विषान्नेऽतिबुभुक्षितो यथा ॥६६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विपर्य्ययबुद्धिरत्यन्तानर्थपर्यवसायिनीत्याह—देहद्वये इति। वि
विषसम्पृक्तेऽन्नेऽतिबुभुक्षितोऽपि तृप्तिसाधनबुद्ध्या प्रसक्तिं कुर्व
न सुखमश्नुते तद्वदित्यर्थः ॥ ९६ ॥

संसर्गबुद्धिं कुरुते यथा यथा
पुत्रादिके कालभुजङ्गवीक्षिते ।
तथा तथा दुःखमनन्तमश्नुते
विमोहितोऽध्यासवशेन संसृतौ ॥९७॥

देहादौ तादात्म्याध्यासादपि कालग्रस्ते पुत्रकलत्रादौ सं
संसर्गाध्यासो महानर्थोऽस्तीत्याशयेनाह—संसर्गबुद्धिमिति। सं
बुद्धिं ममेदमिति सम्बन्धबुद्धिम् । अध्यासवशेन संसर्गाध्यास
त्यर्थः । स्पष्टमन्यत् ॥ ९७ ॥

असङ्ग आत्मन्यपि भोक्तृतामतिः
स्वाविद्ययोदेति भवाब्धिकारणम् ।
ततोऽस्य भोगे दृढवासनोद्भवे-
र्यया न कुत्रापि सुखं लभेत ना ॥९८

स्वस्वरूपावरणमेव सर्वाध्यासहेतुः, तत एवास्य सर्वानर्थ
स्वसुखाविर्भावप्रतिबन्धश्चेत्यभिप्रेत्याह—असङ्ग इति। नाऽ
त्यर्थः ॥ ९८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतो विवेकी जडवर्गतो विभुं
विविच्य सारं सुखमान्तरं निजम् ।
असारभूतं त्यजतीतरांशकं
दुःखात्मकं लौकिकसाधनान्वितम्॥ ९९॥

एवमविद्यातत्कार्य्यविवेचनेन फलितमुपसंहरति—अत इति । अतो हेतोर्विवेकी सारासारविवेकवान् जडवर्गतः अविद्यातत्कार्यात् सारभूतं निजमान्तरं प्रत्यगात्मानं सुखस्वरूपं विभुमपरिच्छिन्नं विविच्य पृथक्कृत्य—स्वस्वरूपत्वेन विनिश्चित्य इतरांशकमविद्यातत्कार्य्यजडदुःखस्वरूपात्मकमत एवाऽसारभूतं लौकिकसाधनैः स्रगादिभिर्युतं दुःखात्मकत्वात् त्यजतीति योजना ॥ ९९ ॥

सुखं स्वमात्मानमखण्डमद्वयं
वेदान्तजन्यात्मधिया विचक्षणः ।
बुद्ध्वा प्रशान्तिं भजते निरन्तरां
मुक्तिं स्वरूपस्थितिमुज्झितभ्रमः॥१००॥

एवं विविक्ताद्वैतात्मबोधेन संसारोपरमोपलक्षितां स्वरूपावस्थानात्मिकां मुक्तिमुपैतीत्याह—सुखमिति ॥ १०० ॥

विवेकिनः शान्तधियो निराधयो
मुकुन्दपादाब्जसुगन्धषट्पदाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सकार्य्यमज्ञानमखण्डबोधतोऽ-
पबाध्य मोक्षं प्रविशन्ति नेतरे ॥१०१॥

एवंभूतात्मावबोधेऽधिकारिणो दर्शयति—विवेकिन इति। [illegible]
नामधिकारिणामेव मोक्षफलसिद्धिरित्याह—सकार्य्यमिति ॥ [illegible]

अतो महान्तः श्रुतिसारवेदिनो
धियोपगुह्यात्मसुखावबोधदम् ।
मुकुन्दपादाब्जमनन्यसौहृदा
अनन्यभक्त्यैकरसं भजन्त्यलम् ॥१०२॥

भगवद्भक्तिरेव शुद्धिविवेकादितत्त्वज्ञानमोक्षपर्यवसायित्वाद् [illegible]
क्षुभिरादर्त्तव्येत्यभिप्रेत्याह—अत इति। यतो भगवद्भक्तिं विहा[illegible]
गतिर्नास्ति, अतः पूर्वोपार्जितपुण्यपुञ्जैः महान्तः,

"येषां त्वन्तगतं पापं जनानां पुण्यकर्म्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः" ( गी० ७। [illegible]

इति भगवद्वचनात्। ये उदारा अत एव श्रुतीनां सार[illegible]
भगवान् वासुदेवस्तद्वेदनशीलाः सारभूतं मुकुन्दचरणारविन्द[illegible]
रसमात्माभिन्नं यद्भूमाख्यं सुखं तदवबोधप्रदं धिया निश्चयात्मि[illegible]
वृत्त्याऽलमतिशयेनोपगुह्य—प्रेम्णा समालिङ्गय तदाकारत्[illegible]
तत्रैव निमज्ज्याऽव्यभिचारिण्या अनन्यभक्त्या भगवन्तं [illegible]
नान्यस्मिन् विषये सौहृदमन्तराशयो येषां ते भजन्ति सेवन्ते [illegible]
सारग्राहिणः पुरुषधौरेया नेतरे इत्यर्थः ॥ १०२ ॥

तद्भक्तिसञ्जातविवेकबोधतः
सुखेन जीवन्निह मुच्यते सुधीः ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

कर्त्तृत्वभोक्तृत्वजगत्त्वमातृता-
द्यशेषबन्धात् परमात्मनि स्थितः॥१०३॥

भगवद्भक्तानामनायासेन तत्त्वज्ञानं मोक्षश्च स्वत एव भवतीत्याह—तद्भक्तीति । तस्य भगवतो वासुदेवस्य भक्त्याऽनुरागेण तत्प्रसादेन सञ्जातो यो विवेकबोधो विवेकज्ञानं ततः सुखेनानायासेन परमात्मनि स्थितः सन् कर्त्तृत्वादिसमस्तबन्धादिहाऽस्मिन्नेव शरीरे जीवन् बाधितानुवृत्त्या व्यवहरन्नपि मुच्यते विनिर्मुक्तो भवतीति योजना ॥ १०३ ॥

तस्माद्विवादं परिहृत्य वादिनां
दूरे चिदानन्दपदं विविच्य यः ।
कृष्णानुरागी श्रुतिगीर्विचारणाद्
ब्रह्मैक्यमाज्ञाय विमुच्यतेऽञ्जसा ॥१०४॥

अतः सारग्राहिणा भवितव्यमित्याह—तस्मादिति ॥ १०४ ॥

निःश्वासवद् वेदजनिः परेशितु-
रीषत्करी यद्यपि सम्मता सताम् ।
अपौरुषेयोऽस्ति तथापि वैदिकै-
र्वेदो मतो दोषगणोज्झितः स्वतः ॥१०५॥

श्रुतिगीर्विचारणाद् ब्रह्मैक्यं ज्ञात्वा मुच्यते इत्युक्तम्, तत्र श्रुतीनां प्रामाण्यादपौरुषेयत्वाच्च नित्यत्वं स्वीकर्त्तव्यम्, अन्यथाऽप्रामाण्या-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पत्तिः स्यात् । तथा चाऽद्वैतक्षतिरित्याह—निश्वासवदिति । "अस्य महतो भूतस्य निश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदः" (बृ० ४ । १० ) इत्यादिश्रुतेः "शास्त्रयोनित्वात्" ( ब्र० सू० १ । १ ) इति न्यायाच्च परमेशितुर्मायाशबलाद् ब्रह्मणो वेदजनिर्निश्वासवत् सतां सम्मता यद्यपीत्यन्वयः । तथापि वैदिकैर्वैयासिकं मन्यमानैरपौरुषेयो मतोऽस्ति । अत एव पुरुषमतिप्रभवदोषरहितं स्वभावत एव निर्दुष्टत्वात् प्रमाणं स्वत इत्यर्थः । एतदुक्तं भवति—सृष्टिप्रलयमनिच्छन्तो जैमिनीया वेदाध्ययनं प्रति अस्मादगुरु-परम्परामविच्छिन्नामिच्छन्तो वेदमनादिमाचक्षते । वैदान्तिकमतमनुवर्त्तमानाः श्रुतिस्मृतीतिहासादिप्रसिद्धसृष्टिप्रलयानुसारेण मायाविद्योपधानलब्धसर्वशक्तिज्ञानस्यापि परमात्मनो नित्यस्य वेदयोनेरपि पूर्वपूर्वसर्गानुसारेणैव तादृशतादृशानुपूर्वीविरचनान्न स्वातन्त्र्यं कालिदासादिवत् । पुरुषास्वातन्त्र्यमात्रं चापौरुषेयत्वं रोचयन्ते जैमिनीया अपि । तच्चाऽस्माकमपि समानमन्यत्राभिनिवेशादित्यर्थः । ब्रह्मणः शास्त्रयोनित्वम्, शास्त्रस्य चापौरुषेयत्वम्, प्रामाण्यम्, प्रवाहतो वियदादिवन्नित्यत्वञ्चेति ॥ १०५ ॥

वाच्यं परब्रह्म स्वयं चिदद्वयं
स्याद्वाचकं वेदवचः स्वरूपतः ।
परापरं ब्रह्म तदेकमेव तद्
बोध्यं तथा बोधकमप्यशेषतः ॥१०६॥

"द्वे विद्ये वेदितव्ये" ( मु० १ । १ । ४, ब्र० बि० १७ ) इत्यादिश्रुतिसिद्धपरापररूपस्य ब्रह्मण एव वाच्यवाचकभावेन वेद्यत्वमिति वाच्यमिति ॥ १०६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शाब्दे पुमान् ब्रह्मणि तत्परोऽपरे
विद्यात् परं ब्रह्म निरञ्जनं ततः ।
तज्ज्ञानतो ब्रह्मविदप्यसौ स्वयं
ब्रह्मैव जीवन्निह मुच्यते भवात् ॥१०७॥

"शब्दब्रह्मणि निष्णातः परं ब्रह्माऽधिगच्छति" (ब्र० वि० १७) इति शास्त्रमनुसृत्याह—शाब्दे इति ॥ १०७ ॥

आस्तिक्यबुद्धिः श्रुतिगीर्षु भक्तिमान्
स्वधर्मसेवोत्थितसत्त्वशुद्धिमान् ।
ततो विवेको विरतिः शमादय-
स्ततो मुमुक्षुर्गुरुभक्तिभाग्भवेत् ॥१०८॥
ततो महावाक्यविचारतत्परो
गुरूपदेशेन परात्मभावनात् ।
अखण्डमैक्यं परमात्मजीवयो-
र्ज्ञात्वा विमुच्येत भवाम्बुराशितः ॥१०९॥

विस्तरेणोक्तमर्थं संक्षिप्य श्रोतृबुद्धिसौकर्याय क्रमेण दर्शयति—आस्तिक्यबुद्धिरिति द्वाभ्याम् ॥ १०८—१०९ ॥

वेदान्तसिद्धान्तविबोधसिद्धये
कुर्याच्छ्रुतेरध्ययनं य आदितः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदर्थमालोच्य गुरूक्तयुक्तिभिः
स्वयं विवेकी पुरुषोऽधिकारवान् ॥११०॥

उक्तार्थस्यावश्यं कर्त्तव्यत्वं प्रदर्शयन् मुमुक्षून् शिक्षयति—न्वेति ॥ ११० ॥

अनेकजन्मोद्भवपुण्यपुञ्जतः
आचार्य्यवेदान्तमुकुन्दभक्तिमान् ।
कश्चित् प्रजायेत स सज्जनः क्षितौ
ब्रह्मैक्यबोधेऽधिकृतोऽतिदुर्लभः ॥ १११ ॥

मनुष्याणां सहस्रेषु कश्चिदेव पुण्यपुञ्जपरिपाकान्ते शास्त्रे श्रद्धानः प्रवर्त्तते इत्याह—अनेकेति ॥ १११ ॥

तत्रापि गोविन्दपदाम्बुजद्वयेऽ-
नुराग एवातिविलक्षणा कृतिः ।
उदेति यस्यैष विमुच्यते पुमान्
भवाम्बुराशेः स्वयमन्यमुक्तिदः ॥११२॥

तत्रापि भगवद्भक्तिरेव गुरुशास्त्रोपदेशसाफल्यसम्पादकत्वेन पुरुषार्थहेतुरित्याह—तत्राऽपीति ॥ ११२ ॥

अधिगतनिगमार्थो यत्पदाम्भोजभक्त्या
भ्रमतिमिरमशेषं तत्त्वबुद्ध्याऽपवार्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रविशति निजधाम ब्रह्मविन्मोक्षमन्त-
स्तमहममृतमाद्यं माधवं स्वं प्रपद्ये॥११३॥

इति प्रत्यक्तत्त्वचिन्तामणौ दशमं प्रकरणं सम्पूर्णम् ॥ १० ॥

प्रकरणमुपसंहरंस्तदर्थं भगवन्तं श्रीमन्माधवमनुसन्धत्ते—अधिगतेति ॥ ११३ ॥

यल्लीलयोद्भवति विश्वमनाद्यपाराद्-
यस्मादुदेति निगमद्रुरनेकशाखः ।
यज्ज्ञानतो गलति मोहमयाम्बुराशि-
स्तं वासुदेवमनिशं शरणं व्रजामि ॥ १ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषिसदानन्दविद्व-
त्कृतायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां स्वप्रभा-
भिधायामद्वैततत्त्वमयूखाभिधं दशमं
प्रकरणं समाप्तिमगमत् ॥ १० ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अथैकादशं प्रकरणम्

**अखण्डानन्दमद्वैतं प्रत्यगात्मतया स्थितम्।**
**अलक्ष्यं बोध्यते येन तं वेदाख्यं हरिं भजे॥ १॥**

योऽचिन्त्यशक्तिरखिलार्थदिवाकरोऽपि
ब्रह्मैक्यनिष्ठ इतरांशनिपेध्यनादिः।
अन्यानपेक्षमिति हेतुरपौरुषेय-
स्तं वेदमक्षरमहं हरिमानतोऽस्मि॥ १॥

अतीतानन्तरप्रकरणे "निःश्वासवद्वेदजनिः परेशितु... यद्यपि सम्मता सताम्। अपौरुषेयोऽस्ति तथापि वेदः" इत्युक्त... मर्थमुपपादयितुं प्रकरणान्तरमारभमाणोऽचिन्त्यशक्तितया ... वबोधकं वेदात्मकं भगवन्तमनुसन्दधानः शास्त्रप्रमेयमर्यादं ... अखण्डानन्दमिति। तं वेदाख्यं हरिं भजे—श्रद्धाभक्तिभ्यां ... इत्यर्थः। तं कमित्यपेक्षायामाह—येनेति। अलक्ष्यं लक्ष... भावविनिर्मुक्तमपि तत्र हेतुः—अद्वैतमिति। द्विधा इतं द्वीतं ... द्वैतं न विद्यते द्वैतं द्विधाभावो यत्र तदद्वैतमित्यक्षरार्थः। ... वार्त्तिककारैः—

"द्विधेतं द्वीतमित्याहुस्तद्भावो द्वैतमुच्यते।
तद्विनिर्मुक्तमद्वैतमवाङ्मनसगोचरम्॥" इति।

अद्वैतत्वेन वागविषयत्वादलक्ष्यं "अवचनेनैव प्रोवाच" [... वानुभवन्नुवाच ?] (नृ० ता० ७) "यतो वाचो निवर्त्तन्ते, अप्राप्य ...

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सह" (तै० २ । ४) "न विज्ञातेर्विज्ञातारं विजानीयात्" (बृ० ३ । ४ । २) इत्यादिश्रुतिभ्य इति भावः । तर्हि वागविषयत्वात् तत्र वेदानां कथं प्रामाण्यमिति तत्राह—प्रत्यगिति । प्रत्यगात्मतयैव स्थितमखण्डानन्दं येन बोध्यते अचिन्त्यशक्तितया तमिति सम्बन्धः । अविषयेऽप्यात्मनि तदाकारवृत्त्युत्पादनमात्रेण तदविद्यानिवर्त्तकत्वमेव तत्र प्रामाण्यं वेदानामिति भावः । "यस्याऽमतं मतं तस्य मतं यस्य न वेद सः । अविज्ञातं विजानताम्" (के० २ । ३) इत्यादिना विषयत्वं दर्शयतापि स्ववाक्यजन्याखण्डाकारवृत्त्याऽवबोध्यते—अयमस्मीत्यखण्डानन्दं प्रत्यगभिन्नतया साक्षात्कारानुभवगोचरमापाद्यते तं भजे इत्यर्थः॥१॥

**निर्दुष्टोऽपौरुषेयत्वाद्व वेदो मानशिरोमणिः ।**
**अज्ञातज्ञापकत्वात् स्यात् प्रमाणं स्वत एव सः ॥२॥**

एवमचिन्त्यशक्तिविशिष्टत्वेन वेदपुरुषमनुसन्धाय तस्याऽपौरुषेयत्वं साधयितुं प्रतिजानीते—निर्दुष्ट इति । वेदः अपौरुषेयो भवति । अपौरुषेयत्वाच्च मानानां प्रत्यक्षादीनां व्यावहारिकवस्तुगोचराणां वेदः पारमार्थिकब्रह्माद्वैतवस्तु विषयत्वाच्छिरोमणिः । अत एव निर्दुष्टः स्वभावादेव सर्वदोषविनिर्मुक्तः । ननु वेदस्य वाक्यत्वाविशेषादाप्तपुरुषसम्बन्धं विना प्रमाणकोटौ प्रवेश एव दुर्घटः, कुतस्तरां प्रमाणशिरोमणित्वमित्याशङ्क्याह—अज्ञातेति । अज्ञातज्ञापकत्वमेव प्रामाण्यं प्रमाणानामित्यविवादम् । तत्तु लौकिकवाक्ये वक्तुराप्तत्वनिश्चयं विना मास्तु, वेदस्य तु स्वत एवाप्तसम्बन्धं विनैव प्रामाण्यम्; सर्वदोषविनिर्मुक्तत्वादित्यर्थः ॥ २ ॥

**नन्वयं पौरुषेयोऽस्ति वेदस्तत्र कथं त्वया ।**
**उच्यतेऽपौरुषेयत्वं प्रमाणान्तरमन्तरा ॥ ३ ॥**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यादेतद्, यद्यपौरुषेयत्वं वेदस्य सम्भवेदिति तार्किकाः प्र-
ष्टुन्ते—नन्विति ॥ ३ ॥

वेदो विशिष्टविज्ञाप्तप्रणीतो वाक्यमानतः ।
यदेवं तत्तथा यद्वच्छास्त्रं व्याकरणादिकम् ॥ ४॥

वेदस्य पौरुषेयत्वमनुमानेन साधयति—वेद इति । वेदः
विशिष्टविज्ञाप्तेन विशिष्टबहुज्ञपुरुषेण प्रणीतो भवितुमर्हति, वाक्य-
मानतः बह्वर्थविषयवाक्यप्रमाणत्वात्, यदेवं तत्तथा, यथा व्याकरणं
पाणिन्यादिविरचितमित्यर्थः ॥ ४ ॥

नन्वस्त्वात्मवदेवाऽ वेदोऽपुरुषनिर्मितः ।
नह्यस्य स्मर्यते कर्त्ता कश्चिदित्यत उच्यते ॥ ५॥

ननु विरुद्धो व्यभिचारी हेतुः—वेदोऽपौरुषेयः, अस्मर्यमाण-
कर्तृकत्वादात्मवदिति सिद्धान्ती शङ्कते—नन्विति । एतद् दूषयितुं
जानीते—अत उच्यत इति ॥ ५ ॥

जीर्णारामोदपानादौ मुक्तश्लोकेषु यद्यपि ।
स्मर्यते नैव तत्कर्त्ता तथाप्येते सकर्तृकाः ॥ ६॥

जीर्णकूपारामादिषु मुक्तश्लोकेषु च हेतोरनैकान्तिकत्वमि-
जीर्णेति ॥ ६ ॥

अथाऽनुमानतस्तत्र कर्त्तुः स्यान्निश्चयस्तदा ।
इहाप्यसौ न दण्डेन वारितः केनचिद्भवेत् ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु तत्र कार्यत्वादनुमानेनास्तु कर्त्तृनिश्चयः, न तथा वेदे; तस्य नित्यत्वादित्याशङ्क्याह—अथेति ॥ ७ ॥

नन्वस्ति किं प्रमाणं ते पौरुषेयत्वनिश्चये ।
वेदस्यातीन्द्रियत्वान्न धर्मादेरिन्द्रियोद्भवम् ॥ ८ ॥

ननु वेदस्य पौरुषेयत्वे मूलप्रमाणमन्वेषणीयम् । तच्च नेन्द्रियादिजनितमुपपद्यते, अतीन्द्रियत्वाद् धर्म्मादेः । अतोऽप्रमाणं वेदः प्रसक्त इति शङ्कते—नन्विति सार्द्धेन । धर्मादेर्वेदप्रतिपाद्यस्यार्थस्यातीन्द्रियत्वान्न तत्रेन्द्रियोद्भवं प्रत्यक्षं प्रमाणमित्यर्थः ॥ ८ ॥

ततो वेदोऽप्रमाणन्ते मतेऽप्यस्मिन् प्रसज्जते ।
इति शङ्काऽपि पाण्डित्यं महत्ते ज्ञापयत्यहो ॥ ९ ॥

इमां शङ्कामुपहासव्याजेन निराकरोति—इतीति ॥ ९ ॥

यतोऽदृष्टादिकं सर्वमस्मदादेरतीन्द्रियम् ।
ईक्षमाणोऽपरोक्षं तत्कर्त्तुमीष्टे महेश्वरः ॥ १० ॥
शब्दराशिं स्वयं वेदं समस्तार्थावभासकम् ।
करोत्यव्याहतज्ञानः पौरुषेयो मतस्ततः ॥ ११ ॥

निरासप्रकारमाह—यत इति । यावता परमेश्वरः अखिलमिदमदृष्टादि अस्मदाद्यतीन्द्रियमपि नित्यनिरतिशयाप्रतिहतविज्ञानेन करतलन्यस्तामलकवदपरोक्षमीक्षमाणो वेदं शब्दराशिं विरचयितुमीष्टे । ततः पौरुषेयोऽभिमतो वेद इति द्वयोरर्थः ॥ १०—११ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वेवमीशितुः सिद्धौ वेदे स्यात्तत्प्रणीतता।
वेदे प्रणयनाल्लिङ्गात्तत्सिद्धिरिति चेन्न हि ॥ १२

ननु तथाविधविशिष्टपुरुषसिद्धौ वेदस्य तत्प्रणीतत्वसिद्धिः। प्रणयनादिलिङ्गेन च तथाविधपुरुषसिद्धिरिति परस्पराश्रयत्वं त्याशङ्क्य निराचष्टे—नन्वेवमिति ॥ १२ ॥

यो ब्रह्माणं पुरा सृष्ट्वा विदधाति महेश्वरः।
यो वै वेदान् हृदा तस्मै प्रहिणोति स्वयम्भुवे ॥

ऋचो यजूंषि सामानि ससर्जेदमशेषतः।
इत्यादिवेदवाक्येभ्यः पौरुषेयो विनिश्चितः ॥ १४

नहीति प्रतिज्ञातमर्थं साधयति—य इति। "यो ब्रह्माणं वि पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" (श्वे० ६। १८) इ सर्वमसृजत यदिदं किंचर्चो यजूंषि सामानि" (बृ० १। २ इत्यादिश्रुतिसमूहादेव तस्य समधिगतत्वान्न परस्पराश्रयत्वमिति समुदितार्थः ॥ १३—१४ ॥

अपि चापौरुषेयत्वे वेदे न स्यात् प्रमाणता।
प्रामाण्यं लौकिकेऽप्याप्तप्रणीतत्वेन शाब्दके ॥

अपि चापौरुषेयत्वे सति वेदस्याप्रामाण्यमपरिहार्यं स्यादित्याह—अपि चेति। लौकिके शब्देऽपि आप्तप्रणीतत्वेनैव प्रा- प्यते इत्यर्थः ॥ १५ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अङ्गुल्यग्रादिवाक्यानां प्रामाण्यं न यथेष्यते ।
तथास्यापौरुषेयत्वे न स्यात्प्रामाण्यमेव ते ॥ १६ ॥

विपक्षे बाधकमाह—अङ्गुल्यग्रेति । आप्तप्रणीतत्त्वाभावे 'अङ्गुल्यग्रे करिणां शतम्' इत्यादिवाक्यानां यथाऽप्रामाण्यमीच्यते, तथा तत्रापि स्यादित्यर्थः ॥ १६ ॥

अङ्गुल्यग्रादिवाक्यानां प्रणीतत्वादनाप्तकैः ।
अप्रामाण्यं हि नैवाप्ताप्रणीतत्वादपीति चेत् ॥ १७ ॥

ननु तेषामनाप्तप्रणीतत्वादप्रामाण्यम्, न आप्ताप्रणीतत्वादिति शङ्कते—अङ्गुल्यग्रादीति ॥ १७ ॥

मैवं लोके यतः शब्दाद् वक्तृज्ञानं प्रतीयते ।
अर्थज्ञानन्तु तस्यैव ज्ञानं व्यवहितं भवेत् ॥ १८ ॥

परिहरति—मैवमिति । तस्यैव वक्तुरेवेत्यर्थः ॥ १८ ॥

अन्यथा निश्चये सिद्धे साक्षादर्थस्य शब्दतः ।
आप्तानाप्तप्रणीतानां प्रामाण्यं सर्वतो गिराम् ॥ १९ ॥

विपक्षे बाधकमाह—अन्यथेति ॥ १९ ॥

न चैतद् दृष्टमिष्टं वा तस्मादाप्तप्रणीतता ।
सर्वथा शब्दजालस्य प्रामाण्यैकप्रयोजिका ॥ २० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इष्टापत्तिं परिहरन् फलितमाह—न चैतदिति ॥ २० ॥

प्रमाणभूतवाक्यत्वाद्वेदः स्यादाप्तनिर्मितः।
यद्यत्प्रमाणभूतं तत्तत्स्यादाप्तविनिर्मितम् ॥ २१ ॥
यथाऽऽप्तवाक्यं लोकेऽस्ति तथा चाऽयं ततस्तथा।
एवं प्राप्तेऽत्र वेदान्तिसिद्धान्तः प्रतिपाद्यते ॥ २२ ॥

तथा च पौरुषेयानुमानं सुस्थमित्याह—प्रमाणेति। वेदं पक्षं
आप्तविनिर्मितत्वं साध्यते, प्रमाणभूतवाक्यत्वादिति हेतुः, यद्यदिति
व्याप्तिप्रदर्शनम्, यथेत्यादि दृष्टान्तः, तथाचायमित्युपनयः, ततः
निगमनम्। एवं पूर्वपक्षे प्राप्ते तत्र वेदान्तिसिद्धान्तः प्रतिपाद्यते
द्वयोर्योजना ॥ २१—२२ ॥

न तावदनुमानेन पौरुषेयत्वमागमे।
कश्चित साधयितुं लोके शक्नोति तदसम्भवात् ॥ २३ ॥

पौरुषेयत्वानुमानमेवासम्भवीत्याह—नेति। तदसम्भवात्—
पौरुषेयत्वानुमानस्यासम्भवादित्यर्थः ॥ २३ ॥

तत्राप्याप्तप्रणीतत्वं किमभिप्रेतमस्ति ते।
पूर्वसिद्धस्य वेदस्योच्चार्य्यमाणत्वमेव तत् ॥ २४ ॥
विशिष्टपुरुषेणादौ यद्वार्थमुपलभ्य च।
मानान्तरेण तत्पश्चात् तत्र वाक्यविनिर्मितिः ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदसम्भवप्रकारं प्रदर्शयितुं विकल्पयति—तत्रेति । यदुक्तं—विशिष्टबहुज्ञपुरुषप्रणीतः बह्वर्थविषयः वाक्यप्रमाणत्वादिति, तत्र किमिदं पुरुषप्रणीतत्वं तवाभिप्रेतम् ? किमस्मदादिभिरिव पूर्वसिद्धवेदस्य विशिष्टपुरुषेणाप्युचार्य्यमाणत्वम्, आहोस्वित् प्रमाणान्तरेणार्थमुपलभ्य तत्र वाक्यविरचनम् ? इति विकल्पार्थः ॥ २४—२५ ॥

आद्ये तथाविधं वेदे पौरुषेयत्वमिष्यते ।
सिद्धसाधनतादोषादनुमानं वृथा तव ॥ २६ ॥

आद्ये, इष्टापत्त्या सिद्धसाधनतामाह—आद्ये इति ॥ २६ ॥

द्वितीये केन मानेन वेदार्थ उपलभ्यते ।
प्रत्यक्षेण कथञ्चिन्न श्रुत्यर्थ उपलभ्यते ॥ २७ ॥
धर्म्माधर्म्मपरब्रह्मोपलम्भो नेन्द्रियैः कदा ।
इन्द्रियसव्यपेक्षत्वाद्धु मनसाऽपि न सम्भवेत् ॥ २८ ॥

द्वितीयेऽपि प्रमाणं वक्तव्यमित्याह—द्वितीय इति । केन मानेन, किं प्रत्यक्षेण, उतानुमानेन ? तत्राद्यं दूषयति—प्रत्यक्षेण इति ॥ २७—२८ ॥

अनुमानादिना चेत्स्यात्तर्ह्यस्माकमपीष्यताम् ।
धर्माधर्मादिसाक्षात्त्वाभावश्च स्यान्महेशितुः ॥ २९ ॥

द्वितीयं दूषयति—अनुमानादिनेति । तर्हि अस्माकं जीवानामपि तथेष्यतामित्यर्थः ॥ २९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अप्यगोचरभूता येऽस्मदादेर्धर्म्मकादयः।
धर्म्मज्ञानादिसिद्धानां गोचराः स्युर्यदीत्यमी॥
तर्ह्यनादितया वेदे पौरुषेयत्वमागतम्।
नहि धर्म्मादिसंसिद्धिर्वेदानुष्ठितिं विना॥ ३१

अथायमभिप्रायः—अस्मदादेरगोचरभूता अपि धर्म्मादयो ज्ञानवैराग्याद्यतिशयवतामेव तत्तदिन्द्रियगोचरतामाचरन्तीति प्राप्तमेवानादित्वेनापौरुषेयत्वं वेदस्येति शङ्कोत्तराभ्यामाह—द्वाभ्याम्॥ ३०—३१॥

पूर्वसिद्धस्य वेदस्य साङ्गाध्ययनतोऽर्थतः।
ज्ञानानुष्ठानतः पुंसां धर्म्माद्यतिशयो भवेत्॥

अनादित्वमेव दर्शयति—पूर्वसिद्धस्येति॥ ३२॥

अतोऽनादितया वेदोऽपौरुषेयो विनिश्चितः।
अज्ञातज्ञापकत्वेन प्रमाणं स्वत एव सः॥ ३३

अतोऽनादित्वादपौरुषेयो वेदः सिद्ध इत्याह—अत इति॥

स्वाभाविको महेशस्य धर्म्माद्यतिशयो यदि।
तस्याप्यतीन्द्रियस्य स्यात् कथं विरचनं गिराम्॥

स्यादेतद्, यद्यपि योगिनां धर्माद्यतिशयः पूर्वसिद्धवेदा...
तथापि परमेश्वरस्यासौ स्वाभाविक एव,

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

" न तस्य कार्य्यं करणञ्च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ॥" ( श्वे० ६ । ८ )

इति श्रुतेः । भवतु नाम स्वाभाविकमेव ज्ञानमीश्वरस्य, तथापि कथं वेदप्रणयनसम्भवः, विधूतनिखिलकार्य्यकरणपरिकरत्वात् ? नह्यकार्यकरणस्य वाक्यविरचनं सम्भवतीति शङ्कोत्तराभ्यामाह—स्वाभाविक इति। अतीन्द्रियस्य कार्यकरणविनिर्मुक्तस्य परमेश्वरस्य कथं गिरां विरचनं स्यादित्यर्थः ॥ ३४ ॥

**इच्छादेरपि सम्बन्धः कथं देहं विना विभोः ।**
**देहादेरपि सम्बन्धो न स्यादज्ञानमन्तरा ॥ ३५ ॥**

नन्वकार्यकरणत्वे स्वाभाविकेऽपि परमेश्वरस्येच्छादिवशात् कार्यकारणवत्त्वोपपत्तेरुपपन्नमेव वेदप्रणयनमित्याशङ्क्य इच्छादिसम्बन्धे सति देहपरिग्रहः, देहपरिग्रहे सतीच्छादिसम्बन्ध इत्यन्योन्याश्रयेण परिहरति—इच्छादेरपीति । अथेश्वरस्यापि इच्छादिसम्बन्धो देहपरिग्रहश्च प्रवाहरूपेणानादिरिति कल्प्येत, तदा अस्मदादिवत् स्वाभाविक एव देहादिसम्बन्ध इत्यनीश्वरत्वप्रसङ्गात् अस्मदादिवदेव वेदप्रणयनासामर्थ्यमपि स्यादित्याशयेनाह—देहादेरपीति ॥ ३५ ॥

**विना देहादिसम्बन्धमाप्तकामस्य हीशितुः ।**
**नेच्छादिसम्भवोऽथाप्यनीश्वरत्वसमर्पकः ॥ ३६ ॥**

अथ नित्यसिद्धैवेश्वरस्येच्छा न देहपरिग्रहाद्यपेक्षेति मतम्, तदपि निष्प्रमाणकमेव । न तावत् स्वार्थविषयेच्छा, आप्तकामत्वादित्याशये-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाह—विना देहादीति । अथ तस्येच्छा परानुग्रहार्था परिकल्प्यते: निष्प्रयोजना कल्पना; पुण्यापुण्यनिर्मितत्वात् प्राणिनामुपकारः, ईश्वरस्य तु सन्निधानमात्रेणानुग्राहकत्वम्, नेच्छादिद्वारेण। इच्छया च संसारित्वमस्मदादिवत् प्रसज्ज्येतेत्याशयेनाह—अथापीति ॥

कार्यकारणवैधुर्याद्व वेदप्रणयनं विभोः ।
न सम्भवेदतो वेदोऽपौरुषेयो विनिश्चितः ॥ ३७ ॥

तस्मात् परमेश्वरस्य नित्यज्ञानवत्त्वेऽपि कार्यकारणवैधुर्याद् वेदप्रणयनासम्भवात्, अनीश्वराणान्तु कार्यकारणवत्त्वेऽपि ज्ञानस्य वेदपूर्वकत्वात् सुतरां वेदप्रणयनासम्भवान्न पुरुषार्थो वेदः । परिशेषादस्यापौरुषेयत्वमित्याशयेनाह—कार्यकारणेति ॥

आत्माकाशादिवद्वेदोऽकर्त्तृको न सकर्त्तृकः ।
नहि सम्भाव्यते कर्त्ता वेदस्याप्तस्य युक्तिभिः ॥ ३८ ॥
अच्छिन्नव्यवहारत्वे न सकर्त्तृक आगमः ।
अस्मर्य्यमाणकर्त्तृत्वादात्माकाशादिवत्तथा ॥ ३९ ॥

वेदः सकर्त्तृको न भवति, असम्भाव्यमानकर्त्तृत्वात्, यथाऽऽत्माऽऽकाशादिः । तथा वेदः सकर्त्तृको न भवति अविच्छिन्नव्यवहारत्वे सति अस्मर्य्यमाणकर्त्तृकत्वात्, यथाऽऽत्माकाशादिरिति आत्मेत्यादिद्वाभ्याम् ॥ ३८—३९ ॥

जीर्णारामोदपानादेः स्वयं कालेन गच्छता ।
व्यवहारस्य विच्छेदो मुक्तश्लोकेषु चेष्यते ॥ ४० ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जीर्णकूपारामादिभिर्मुक्तश्लोकैश्च न व्यभिचार इत्याह—जीर्णेति ॥४०॥

न च वेदस्य विच्छिन्नव्यवहारत्वमीक्ष्यते ।
पुण्यादिभासकत्वेन संसृतेः कारणत्वतः ॥ ४१ ॥

न च वेदस्य विच्छिन्नव्यवहारत्वमिति शङ्क्यं वदितुम्, प्राणिनां पुण्यापुण्यतत्फलसम्बन्धप्रकाशकत्वेन संसारचक्रप्रवर्त्तकत्वादित्याशयेनाह—न चेति ॥ ४१ ॥

प्रलयेऽपि स्वरूपेणाऽनादित्वान्नैष नश्यति ।
नानध्ययनमात्रेण वेदस्योच्छेद इष्यते ॥ ४२ ॥

ननु वेदस्यापि महाप्रलये अस्त्येव व्यवहारविच्छेदः, अतोऽसिद्धमविच्छिन्नव्यवहारत्वमिति चेत्, तत्रेदं वक्तव्यम्—किं प्रलयकाले वेदस्याध्ययनाभावो व्यवहारविच्छेदोऽभिप्रेतः, किं वा स्वरूपनाशः ? इति विकल्प्य चरमं दूषयति—प्रलय इति । प्रथमं निराकरोति—नेति ॥४२॥

आत्मादिव्यवहारस्य विच्छेदः प्रलये यथा ।
तथाऽस्यापि भवेत्तेन न नित्यत्वक्षतिस्तथा ॥ ४३ ॥

तथाविधव्यवहारविच्छेदस्य आत्मादावपि सम्भवान्नासावनित्यत्वमावहतीत्याह—आत्मादीति । अस्यापि वेदस्यापीत्यर्थः ॥ ४३ ॥

वेदस्याऽध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनरूपत्वादधुनाऽध्ययनं यथा ॥ ४४ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विमतं सृष्टिकालीनं वेदाध्ययनं पूर्वपूर्ववेदाध्ययनानुसारि भवितुमर्हति, वेदाध्ययनत्वात्; यथाऽधुनातनं वेदाध्ययनमित्युन्नयति—वेदस्येति ॥ ४४ ॥

**वेदसर्गश्रुतिः पूर्वसिद्धस्यैवागमस्य च।**
**आहाऽभिव्यक्तिमात्रं सा न तु नूतनसर्जनम्॥ ४५॥**

ननु वेदस्यास्मर्य्यमाणकर्त्तृकत्वमसिद्धम्, वेदेनैव तस्य सर्गान्धावगमादित्याशङ्क्य "इदं सर्वमसृजत यदिदं किंचर्चो सामानि" (बृ० १।२।५) इत्यादिवाक्यं तावद्धिरण्यगर्भे सिद्धस्य वेदस्याभिव्यक्तिमात्रमाचष्टे न त्वभिनवसृष्टिमित्याह— वेदसर्ग इति। वेदस्य सर्गप्रतिपादिका श्रुतिरित्यर्थः ॥ ४५ ॥

**यो ब्रह्माणमिति श्रौती गीरेतस्य चतुर्मुखे।**
**सिद्धस्येशप्रसादेन प्रादुर्भावपरा स्वतः॥ ४६॥**

यत्तु "यो ब्रह्माणं विदधाति" (श्वे० ६।१८) इत्यादि मेश्वरविषयमपि न वेदस्य सृष्टिमाचष्टे। किन्तु सिद्धस्य वेदस्य मेश्वरानुग्रहाद्धिरण्यगर्भे आविर्भावमात्रमावेदयतीत्याह—यो ब्रह्माणमिति। एतस्य वेदस्य नित्यसिद्धस्येत्यन्वयः। तस्मात् विच्छिन्नव्यवहारत्वे सति अस्मर्य्यमाणकर्त्तृकत्वमिति। बहुज्ञपुरुषप्रणीतो वेदो बह्वर्थविषयवाक्यप्रमाणत्वादित्येष प्रमाणविरुद्धो हेतुरिति भावः ॥ ४६ ॥

**अथ वंशमुपक्रम्य सम्प्रदायपरम्पराम्।**
**अभिधाय जगावन्ते वेदनित्यत्वमागमः॥ ४७॥**

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"अथ वंशः" ( बृ० २।६।१ ) इत्युपक्रम्य विद्यासम्प्रदायपरम्परामभिधाय अन्ते "परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भूर्ब्रह्मणे नमः"। ( बृ० २।६।३ ) इति वेदस्य नित्यत्वश्रुतिविरोधाच्च कालात्ययापदिष्टो हेतुरित्याशयेनाह—अथ वंशमिति ॥ ४७ ॥

ईशानीशप्रणीतत्वं नित्यत्वान्नैव्रमागमे ।
सम्भवेदित्यतो वेदोऽपौरुषेयो विनिश्चितः ॥ ४८ ॥

ईश्वरानीश्वरपुरुषप्रणयनासम्भवश्च वेदविषये दर्शितः अन्यथासिद्धश्चायं हेतुरित्याशयेनाह—ईशानीशेति ॥ ४८ ॥

प्रमाणान्तरयोग्यार्थास्पदत्वादन्यशास्त्रकम् ।
पौरुषेयं न वा वाक्यप्रमाणत्वादिहेष्यते ॥ ४९ ॥

व्याकरणादेः प्रमाणान्तरयोग्यार्थविषयत्वात् पुरुषप्रणीतत्वम्, न वाक्यप्रमाणत्वादित्याह—प्रमाणान्तरेति ॥ ४९ ॥

अयोग्यविषये पुंसो वाक्यप्रणयनं न वा ।
सम्भवेदित्यतो हेतोस्त्वदुक्तानुमितिर्वृथा ॥ ५० ॥

अयोग्यविषये पुरुषस्य वाक्यप्रणयनासम्भवादपि त्वदोक्तिर्वृथेत्याह—अयोग्येति । यत्पुनरुक्तम्—आप्तप्रणीतो वेदः, प्रमाणभूतवाक्यत्वात्, लौकिकवाक्यवदिति, तदप्येतेनैव निरस्तमिति द्रष्टव्यम् ॥ ५० ॥

स्वयमेवाऽस्ति शब्दोऽर्थे प्रमाणं नाऽऽप्तयोगतः ।
प्रतिबन्धनिवृत्त्यर्थं तत्राऽऽप्तत्वविनिश्चयः ॥ ५१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अङ्गुल्यग्रादिवाक्येष्वनाप्तसम्बन्धमात्रतः ।
प्रामाण्यं प्रतिबन्धस्तत् क्षयस्त्वाप्तत्वनिश्चयात् ।

यत्तूक्तम्—आप्ताप्रणयने वेदस्याऽप्रामाण्यप्रसङ्ग इति तद[illegible]
त्याह—क्षयमिति द्वाभ्याम् ॥ ५१–५२ ॥

शब्दजन्यं हि संसर्गविज्ञानमिह शब्दतः ।
साक्षादेवार्थसिद्धेर्न वक्तृज्ञानविलम्बतः ॥ ५३ ॥

तत्र यदुक्तम्—वक्तृज्ञानव्यवधानेनैव शब्दोऽर्थमवगमयतीति [illegible]
विवेक्तव्यम् । किं वक्तृज्ञानमावेदयति ? किं वाऽर्थविशेषितम् [illegible]
स्मिन् वक्तृज्ञानव्यवधानेनापि शब्दादर्थावगमो न स्यात् । [illegible]
ज्ञानविशेषणभूतार्थप्रतीतिकारणं वक्तव्यम् । न तावत् प्रत्यक्षा[illegible]
कारणमस्ति, तत्र शब्दातिरिक्तप्रमाणासम्भवादनभ्युपगमाच्च । [illegible]
यमर्थप्रतीतिर्भ्रान्तिः, संशयो वा, बाधकाभावाद् विकल्पानुदया[illegible]
स्मृतिरूपा, पूर्वप्रवृत्ततद्विषयप्रमाणाभावात् । अथ पदैरेवान्व[illegible]
यये।ग्यार्थस्मरणात् तदन्वयमुत्प्रेक्षयाऽवगम्य तद्विषयं विज्ञानं [illegible]
मिमीते—इति कल्पेत, तदपि कथनमात्रम्, उत्प्रेक्षाज्ञानस्य प्र[illegible]
माणस्मृतिसंशयाद्यात्मकत्वानुपपत्तेः । परिशेषाच्छब्दजन्यमेव [illegible]
ज्ञानमिति साक्षादेव शब्दार्थसिद्धेः वक्तृज्ञानव्यवधानकल्पना [illegible]
प्रयोजनवतीत्याशयेनाह—शब्दजन्यमिति । इह शाब्द[illegible]
हारे इत्यर्थः ॥ ५३ ॥

तस्माल्लोके स्वसामर्थ्यादेव शब्दार्थसम्भवः ।
अनाप्तयोगः शब्दस्य सामर्थ्यप्रतिबन्धकः ॥ [illegible]

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

ततः किमित्यत आह—तस्मादिति। तस्माल्लोकेऽपि स्वसामर्थ्यादेव शब्दार्थप्रतिपत्तिः। अनाप्तपुरुषसम्बन्धस्तु शब्दस्य स्वतः सिद्धसामर्थ्यप्रतिबन्धकतयाऽवतिष्ठते इत्यर्थः ॥ ५४ ॥

मूलज्ञानानुमानन्तु यदि स्यात्तन्निवृत्तये ।
अस्तु तल्लौकिके शब्दे वारयामो न तद्व वयम् ॥ ५५ ॥
वेदे तु पुरुषस्यापि सम्बन्धाभावतः कदा ।
नास्त्यप्रामाण्यशङ्काऽपि प्रतिबन्धस्त्वयः स्वतः ॥ ५६ ॥

अस्तु तर्हि वेदेऽपि प्रतिबन्धनिवृत्त्यर्थमेव मूलानुमानमित्यत आह—वेदे त्विति। तु शब्दः शङ्कानिवृत्त्यर्थः ॥ ५५–५६ ॥

तस्मादपौरुषेयोऽस्ति वेदो नित्यार्थगोचरः ।
परब्रह्मविवर्त्तश्च ब्रह्मायत्त इतीष्यते ॥ ५७ ॥

फलितमुपसंहरन् वेदस्य ब्रह्मविवर्त्तत्वमुपपादयति—तस्मादिति। यद्यपि नित्यो वेदः स्वयं नित्यार्थसम्बन्धश्च, तथापि ब्रह्मचैतन्यविवर्त्तो ब्रह्मपरतन्त्रश्च वेदोऽभ्युपेय इत्यर्थः ॥ ५७ ॥

अस्य महतो भूतस्य निश्वसितमिति श्रुतिः ।
हेत्वन्तरैरजन्यत्वं प्राह ब्रह्मविवर्त्तताम् ॥ ५८ ॥

अत एव "अस्य महतो भूतस्य" ( बृ० २।४।१० ) इत्यादिश्रुतिरपि वेदस्य प्रवृत्तप्रमाणान्तराजन्यत्वब्रह्मविवर्त्ततां दर्शयतीत्याह—अस्येति ॥ ५८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकमेवाद्वितीयं चेत्यद्वितीयत्वकीर्त्तनात् ।
चिद्विवर्त्तो न तद्भिन्नो वेद इत्यवगम्यते ॥ ५९ ॥

अत एवाद्वितीयत्वप्रतिपादनं श्रुतेः सङ्गच्छते इत्याह–
मिति ॥ ५९ ॥

सर्वमात्मनि विज्ञाते विज्ञातमिदमित्यतः ।
आत्मविज्ञानतः सर्वविज्ञानप्रतिपादनात् ॥ ६० ॥

अत एव एकविज्ञानात् सर्वविज्ञानप्रतिज्ञा श्रुतेः सिद्धयतीत्याह–
सर्वमिति ॥ ६० ॥

नहि वस्त्वन्तरे वेदे स्थिते सत्यद्वितीयता ।
तज्ज्ञानात् सर्वविज्ञानं श्रुत्युक्तमुपपद्यते ॥ ६१ ॥

नहीदं श्रुतेः प्रतिपादनमन्यथा सङ्गच्छत इत्याह—नहीति ॥

वेदस्य चिद्विवर्त्तत्वे सर्वं सङ्गच्छतेऽञ्जसा ।
नामरूपप्रपञ्चस्य तद्भिन्नत्वे ह्यलोकता ॥ ६२ ॥

वेदस्य नामप्रपञ्चान्तःपातित्वान्नामरूपयोर्ब्रह्मविवर्त्तत्वादद्वै-
पादकवाक्यानां सर्वं सामञ्जस्यं नेतरथेत्याह—वेदस्येति ॥ ६२ ॥

ननु ब्रह्मविवर्त्तत्वे वेदस्यानादिता कथम् ।
कथं मिथ्याऽहिवत्तस्य प्रामाण्यमवकल्पते ॥ ६३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदस्य ब्रह्मविवर्त्तत्वमसहमानः शङ्कते—नन्विति । वेदस्य रज्जुसर्पवद् मिथ्याभूतस्य प्रामाण्यञ्च कथमवकल्पते। भवन्मते इति शेषः। तथा च तवैव वेदान्तप्रमाणैकसमधिगम्यब्रह्मवादिनोऽनिष्टमित्याशयः ॥६३॥

मैवं न वर्णमात्रं भो वेदोऽस्ति व्युत्क्रमादिना ।
उच्चारितेषु वर्णेषु नार्थज्ञानं प्रदृश्यते ॥ ६४ ॥
किन्त्वयं वर्णसङ्घातो नियतक्रमसंयुतः ।
वेद इत्येत्र वक्तव्यं तत्रापीयं विचारणा ॥ ६५ ॥

परिहरति—मैवमिति । न तावद्वर्णमात्रं वेदः, अक्रमव्युत्क्रमोच्चारितेषु वर्णेष्वर्थप्रतिपत्तिदर्शनात् । किन्तु नियतक्रमविशिष्टो वर्णराशिर्वेदः । तत्रापीयं वक्ष्यमाणविचारणाऽस्तीति द्वयोर्योजना ।६४–६५॥

तत्र देशनिमित्तो वा कालहेतुर्न वा क्रमः ।
वर्णानां सर्वगत्वाच्च नित्यत्वादपि हेतुतः ॥ ६६ ॥

विचारमेव दर्शयति—तत्रेति । तत्र वर्णेषु न तावद्देशनिमित्तो वा कालनिमित्तो वा क्रमः सम्भवति, वर्णानां सर्वगतत्वान्नित्यत्वाच्चेत्यर्थः ॥ ६६ ॥

नापि स्वाभाविकः कश्चिद्धर्मस्तत्रास्ति वा यतः ।
राजा जारेत्यनियतपूर्वापरतयेक्ष्यते ॥ ६७ ॥

ननु माऽस्त्वागन्तुकक्रमः, स्वाभाविक एव किन्न स्यादित्यत आह—नापीति ॥ ६७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उच्चारणोपलब्ध्यन्यतरप्राप्तक्रमेण ये ।
उपरक्तास्त एवेह वर्णा वेद इतीर्यताम् ॥ ६८ ॥

अतः परिशेषादुच्चारणोपलब्ध्यन्यतरगतक्रमोपरक्ता वर्णा वेदवाच्यमित्याह—उच्चारणेति ॥ ६८ ॥

न चाऽन्यत्रान्यधर्मस्य परामर्शः क्रमस्य वा ।
साक्षात्सम्भवतीत्यस्मान्मिथ्याभूतः क्रमस्तयोः ॥

न चाऽन्यधर्मस्य क्रमस्यान्यत्र साक्षात् परामर्शः सम्भवति न चेति । ततः किमित्यत आह—मिथ्येति । तयोरिति उच्चारणोपलब्ध्योरन्यतरस्मिन् गतः क्रम इति शेषः । मिथ्यैवेति योजना ॥

मिथ्याक्रमविशिष्टानां वर्णानाञ्च मृषात्मना ।
अर्थबोधकताऽऽस्थेयाऽनिच्छद्भिरपि वादिभिः ॥

अतो मिथ्याभूतक्रमविशिष्टवर्णानां तदुपरक्तमिथ्यार्थप्रतिपादकत्वमित्यनिच्छद्भिरप्यन्यवादिभिरास्थेयमित्याह—मिथ्येति ॥

पूर्वपूर्वसमानैव सेयं क्रमपरम्परा ।
प्रवर्त्तते सदा सर्ववर्णानामुत्तरोत्तरा ॥ ७१ ॥
इति प्रवाहरूपेण वेदस्याऽनादितोच्यते ।
लये संस्काररूपेण रूपस्येवास्य च स्थितिः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतो ब्रह्मविवर्त्तत्वान्नाऽनादित्वविरोधिता ।
न वा धर्म्मादिरूपार्थप्रतिपादकताक्षतिः ॥ ७३ ॥

ननु तर्हि क्रमपरम्पराया वैचित्र्यादर्थवैचित्र्यापाताद् वेदार्थस्यैकरूपत्वं न स्यात् । तथा चानादित्वविरोधेनाखण्डैकरसप्रतिपादकत्वहान्या च तत्प्रामाण्यक्षतिरित्याशङ्क्याह—पूर्वपूर्वसमानेत्यादित्रिभिः । सा चेयं क्रमपरम्परा वर्णानां पूर्वपूर्वसमानैवोत्तरोत्तरा प्रवर्त्तते इति प्रवाहरूपेणाऽनादित्वं वेदस्योच्यते । महाप्रलये तु रूपप्रपञ्चस्येव नामप्रपञ्चस्य शक्तिमात्रावशेषेऽपि पूर्वस्मिन् कल्पे यादृशक्रमविशिष्टानां वेदशब्दोपलक्षितवर्णानां यादृगर्थाभिधानसामर्थ्यं तादृशक्रमोपरक्तानां तादृगर्थाभिधानसामर्थ्योपेतानामेव वर्णानामुत्तरकल्पेऽपि प्रथमं ब्रह्मचैतन्यविवर्त्तत्वान्नाऽनादित्वविरोधः, नाप्यर्थप्रतिपादकत्वहानिः, न वा प्रामाण्यक्षतिरिति त्रयाणां समुदितोऽर्थः ॥ ७१–७३ ॥

प्रतिप्रयोगं वर्णानां क्रमो वाक्ये तु लौकिके ।
यथा व्यभिचरत्येवं न वेदे नियतक्रमे ॥ ७४ ॥

लौकिकवाक्यवैदिकवाक्ययोर्वैलक्षण्यमाह—प्रतिप्रयोगमिति ॥ ७४ ॥

अनादित्वेऽपि वेदस्य चिद्विवर्त्ततया सतः ।
ब्रह्माधीनत्वमस्तीति सिद्धं वेदान्तसम्मतम् ॥ ७५ ॥

फलितमुपसंहरति—अनादित्वे इति ॥ ७५ ॥

अतो ब्रह्माद्वये मानं शब्दराशिः स आगमः ।
शब्दशक्तेरचिन्त्यत्वाद् बोध्यते तेन चिद्घनम् ॥ ७६ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्माद् ब्रह्मैक्यमवाङ्मनसगोचरमपि प्रमाणराजो वेदः
न्यशक्तितयाऽवबोधयतीत्याह—अत इति ॥ ७६ ॥

**शक्तिः कार्यान्विते ह्येव पदानामिति सर्वथा।**
**नियन्तुं शक्यते नैवं सर्वेषामपि केनचित् ॥ ७**

स्यादेतद्, यदि वेदः सिद्धेऽर्थे प्रमाणं स्यात्। न तु
शब्दशक्तिः कार्यान्विते एव निश्चीयते। लोकेऽपि
कार्यार्थे एव प्रथमं सम्बन्धग्रहणाद्, गवादेरपि कार्या
कार्यत्वात्, आवापोद्धारयोरपि तदपरित्यागाद्, गवादिष्वे
स्मृतिमात्रव्यापारात् कार्य्यमेव हि सर्वपदशक्तिप्रतियोगि।
देवदत्त! गामभ्याज शुक्लां दण्डेनेति शब्दश्रवणान्तरं प्रवि
सुपलभ्य इयं प्रवृत्तिः प्रवर्त्तकज्ञानपूर्विका, प्रवृत्तित्वाद्,
बालेनानुमीयते। स्वयञ्च कार्यज्ञानात् प्रवर्त्तते इति
धारयति, शब्दश्रवणान्तरभावित्वाच्च कार्यज्ञानस्य शब्द एव
मजीजनदित्यध्यवस्यति। एवं पदकदम्बस्य कार्यज्ञाने
पद्य, प्रयोगान्तरेषु गामानय, गां बधान, तुरगमानयेत्यादिषु
प्रक्षेपोद्धारयोस्तदर्थस्य कार्यान्वितस्यैव प्रक्षेपोद्धारदर्शनात्
चाऽदर्शनात् शब्दशक्तिप्रतियोगित्वेन प्रथमावगतकार्यान्वय
गेषु चाप्यभिचारिणोऽपरित्यागात्तदन्वित एव स्वार्थे गवादि
प्रतिपद्यते। न च सर्वपदानां कार्याभिधायित्वे सति
सिद्धत्वात्पदान्तरवैयर्थ्यमिति वाच्यम्, गवादिस्वरूपान्वित
मनेकत्वेन सर्वेषामेव पदानां प्रवृत्तिनिमित्तभेदोपपत्तेः
कार्यान्विते सकलपदसामर्थ्यमिति मीमांसकमतमाशङ्क्य
शक्तिरिति। भवतु नाम कार्यवाक्ये सम्बन्धग्रहः, तथापि

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

न्वित एव सर्वेषां पदानां शक्तिरिति सर्वथा नियन्तुं शक्यते केनचि-
दपीति सम्बन्धः ॥ ७७ ॥

यतोऽन्विताभिधायित्वं पदानामपि दृश्यते ।
अन्वये योग्यताहेतुः सा सिद्धाऽस्ति विभागतः ॥ ७८ ॥

कुत इत्यत आह—यत इति । सकलपदानां यतोऽन्विताभिधा-
यित्वमपि दृश्यते, अन्वयस्य योग्यतानिमित्तत्वात् । सा योग्यता च
विभागतः यथायोग्यविभागेन सिद्धाऽस्तीति योजना ॥ ७८ ॥

क्रियाकारकयोर्द्रव्यगुणयोरस्ति योग्यता ।
धात्वर्थकार्ययोरेवं विभागेनैव दृश्यते ॥ ७९ ॥

एतदेव विवृणोति—क्रियेति ॥ ७९ ॥

द्रव्यान्विताभिधायित्वं योग्यता गुणवाचिनाम् ।
क्रियान्विताभिधायित्वं सा तथा द्रव्यवाचिनाम् ॥ ८० ॥

तत्रापि योग्यतानुसारमाह—द्रव्यान्विताभिधायित्वमिति ॥ ८० ॥

कार्यान्विताभिधायित्वं क्रियावाचिगिरामपि ।
प्रतिपत्तुमिति न्याय्यं विरोधः स्यात्ततोऽन्यथा ॥ ८१ ॥

विरोधः स्यात् ततोऽन्यथेति । अन्यथा सकलपदानामपि
कार्यान्विताभिधायित्वे सति अङ्गुल्यादिवाक्यस्थपदानामिवायोग्यान्वय-
निष्ठत्वात् प्रमाणान्तरविरोधो दुष्परिहरः प्रसज्ज्येतेत्यर्थः ॥ ८१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न चार्थिकान्वयो नापि शेषशेषित्वयोग्यता।
परस्पराश्रयात्तस्मान्न विरोधोऽन्वितोक्तितः ॥ ८२

ननु कार्यान्वये सर्वेषां शब्दसमधिगतेऽपि गुणद्रव्यादीनां
परस्परान्वयो भवंन्न निवार्य्यते। कुतः तत्र प्रमाणान्तरविरोध
ङ्क्याह—न चेति। नहि परस्परमयोग्यान्वयः शब्दसमधिगतः
न्वयश्च पदानामार्थिक इति शब्दप्रमाणवादिनामिदं शेमुषी
ननु शेषशेषिभावेन सर्वपदार्थानां कार्येणापि संसर्गयोग्यता
कथमयोग्यार्थसम्बन्धः शब्दसमधिगत इत्याशङ्क्याह—नापि
शेषित्वयोग्यतेति। अयमर्थः—किमिदं शेषशेषित्वं साध्यसा
श्चेत्, सोऽपि साक्षात्, परम्परया वा? न तावद्धात्वर्थेनेव गुणा
दिनाऽपि साक्षादेव कार्यस्य साध्यत्वमुपपद्यते, भावार्थैकनि
कार्यस्य। अस्तु परम्परया साध्यत्वमिति चेत्, तर्हि फलस्यैव
त्वात् तदेव शेषि भवतु, किमनेनान्तर्गडुना कार्येण? ननु
शेषित्वं समधिगतं सर्वपदानां कार्यप्रधानतया अन्विताभिधा
फलस्य तु प्राधान्यं पुरुषापेक्षमार्थिकमित्याशङ्क्याह—परस्
दिति। सर्वपदानां कार्यप्रधानतयाऽन्विताभिधायित्वे सति
शब्दतः शेषित्वम्, तस्यैव शेषित्वे सकलपदानां तत्प्रधानतयाऽन्विता
धायित्वमिति परस्पराश्रयादित्यर्थः। ततः किमित्यत आह—
तस्माद् विधिनिष्ठवाक्येषु पदानामेवैदंपर्यवशेन परस्परान्विता
न कश्चिद् विरोध इत्यर्थः ॥ ८२ ॥

यत्प्रवर्त्तकविज्ञानजनकत्वानुमानकम्।
तदप्यन्यत्र सामर्थ्याभावकारणकं नहि ॥ ८३

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्तूक्तम्—प्रवृत्तिलिङ्गेन प्रवर्त्तकविज्ञानानुमानात् तस्य शब्दान्वय-व्यतिरेकानुविधायितया प्रथमं कार्य्यस्यैव सकलशब्दशक्तिप्रतियोगित्वाव-गमात् प्रयोगान्तरेषु च व्यभिचाराभावात् तत्रैव सकलपदसामर्थ्यमिति, तत्राह—यदिति । प्रथमप्रयोगे प्रवर्त्तकविज्ञानजनकत्वानुमानं यत्तद्गवा-दिपदानामन्यत्र सामर्थ्याभावकृतं न भवतीत्यर्थः ॥ ८३ ॥

किन्त्वभावादुपायस्य शब्दजन्यत्वसद्धियः ।
श्रोतुः प्रवृत्तिसिद्ध्यै तन्निमित्तं सर्वतो भवेत् ॥ ८४ ॥

किंकृतं तत्तर्हीत्यत आह—किन्त्विति । किन्तु गवादिस्वरूप-विज्ञानस्य तदा शब्दजन्यत्वावगमोपायाभावात् प्रयोगान्तरेषु गवादिप-दानामपि प्रक्षेपोद्धाराभ्यां प्रत्येकं योग्येतरान्वितगवादिस्वरूपेऽपि सामर्थ्यं प्रतिपद्यते इत्यर्थः । यत्तु प्रयोगान्तरेष्वपि कार्यस्याव्यभिचार इति तत्राऽऽह—श्रोतुरिति । सर्वतः सर्वत्र कार्याभिधायिपदप्रयोगे तत्कार्यं निमित्तं भवेदित्यन्वयः । कार्याभिधायिपदप्रयोगश्च श्रोतुः प्रवृत्तिसिद्धये इत्यर्थः ॥ ८४ ॥

तस्मात् प्रवर्त्तके वाक्ये सम्बन्धग्रहणेऽपि च ।
योग्येतरान्विते शक्तिरन्वयव्यतिरेकतः ॥ ८५ ॥

कार्यान्वयनिराकरणमुपसंहरति—तस्मादिति । तस्मात् प्रवर्त्तके वाक्ये सकलपदसम्बन्धग्रहणेऽपि योग्येतरान्विते शब्दशक्तिरित्यन्वय-व्यतिरेकाभ्यां विनिश्चितेति शेषः । इतरान्विते इत्येव युक्तम्, तत्रा-न्वीयमानं योग्यमेवायोग्यस्य वाक्यार्थप्रतीत्यनुपयोगितयाऽन्वयायोगात् । तस्माद् योग्येतरान्विते शब्दशक्तिरिति सिद्धमित्यर्थः ॥ ८५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न वा प्रवर्त्तकद्वार एव सर्वपदात्मनाम्।
गिरां शक्तिग्रहोऽपीत्थं नियन्तुमिति शक्यते ॥८६॥

एवं कार्यान्वये शब्दशक्तिनियमं निराकृत्य प्रवर्त्तकद्वारमेव सर्व-पदसम्बन्धग्रहणमिति मीमांसका मन्यन्ते तान्निराकरोति—नवेति। ननु कथन्न प्रवर्त्तकद्वारमेव सकलपदसम्बन्धग्रहणम्? प्रयोज्य-शब्दश्रवणान्तरं प्रतिपत्तुः प्रवृत्तिमुपलभ्य, प्रवर्त्तकज्ञानमनुमाय शब्दस्य सम्बन्धग्रहणात् प्रयोगान्तरेषु च पदानामावापोद्वापसमं स्वार्थेषु प्रतिपदं सामर्थ्यग्रहणस्यापि प्रवर्त्तकज्ञानपूर्वकत्वात् सर्वं प्रवर्त्तकवाक्ये गृहीतसम्बन्धपदान्तरसमभिव्याहारनिमित्तत्वात् प्रवर्त्तक-द्वारमेव सकलपदसम्बन्धग्रहणमित्याशङ्क्याह—इत्थं नियन्तुं न खलु सकलपदसामर्थ्यग्रहणं प्रवर्त्तकद्वारमेवेति नियन्तुं शक्यते इति योजना ॥ ८६ ॥

पुत्रस्ते जात इत्यादावन्तरापि प्रवर्त्तकम्।
सम्बन्धग्रहणं दृष्टं मुखोल्लासादिचिह्नितः ॥८७॥

नियमाभावं दर्शयति—पुत्र इति। पुत्रजन्मादिवाक्येषु प्रवर्त्तक-मन्तरेणापि सम्बन्धग्रहणदर्शनात् मुखोल्लासादिचिह्नादित्यर्थः। ननु पुत्र-जन्मनिमित्तो वा पत्नीसुखप्रसवनिमित्तो वा तदैव समीहितवस्तु-स्मृतिनिमित्तो वा हर्ष उपपद्यते। ततश्च भ्रूविलासादि-हर्षहेतुमात्रविज्ञानविषयत्वात् तस्य चानन्त्याद् अयमेवानेन शब्देन बोधित इति नियमोपायाभावात् तत्रापि प्रवर्त्तकद्वार एव सम्बन्धग्रह इति चेत्, न; मुखविकासादिसमनन्तरमेव पुत्रजन्मसाक्षात्कारेण साधारणलिङ्गेन वा पुत्रजन्मनिश्चयात्, साधारणतयाऽवगतस्य हर्ष-

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विज्ञानस्य तत्र पर्यवसानसम्भवे सति अप्रतिपन्नहर्षहेत्वन्तरविषयत्वाशङ्कानुपपत्तेः। यत्तु पुत्रजन्मसमधिगतं सुखप्रसवादि, तत्पुत्रजन्महर्षनान्तरीयकत्वान्न प्रथमतरप्रतीतपुत्रजन्महर्षेण विकल्प्यते। प्रथमतरसम्बन्धग्रहोऽपीदंतदादिवस्तुविज्ञानपूर्वक एव। यदि पुनरिदंतदादिशब्दार्थविज्ञानमपि प्रथमतरसम्बन्धग्रहणकारणं नाङ्गीक्रियते, तदा सविकल्पकज्ञानपूर्वक एव सम्बन्धग्रहः। तथा जन्मान्तरेऽपीति सर्वत्र प्रथमतरशब्दार्थसम्बन्धग्रहः सिद्धवस्तुविज्ञानपूर्वक एवेति भवताऽप्यायुष्मता अङ्गीकारि। तस्मादस्मत्पक्षे हर्षहेतूनामानन्त्यसम्भव इति। भवत्पक्षेऽपि प्रवर्त्तकानन्त्यसम्भवात् प्रवर्त्यविषयसाक्षात्कारेण वा तदसाधारणलिङ्गेन वा पदान्तरप्रक्षेपोद्धाराभ्यां पारिशेष्यकल्पनायामस्मत्पक्षेऽपि सम्भवात् न प्रवर्त्तकद्वार एव सकलपदसम्बन्धग्रह इति सन्तोष्टव्यमिति भावः॥ ८७॥

इष्टसाधनविज्ञानमेव सर्वप्रवर्त्तकम्।
इष्टसाधनतो भिन्ने कार्ये मानं न दृश्यते॥ ८८॥

एवं प्रवर्त्तकद्वारमेव सम्बन्धग्रहणमिति पराकृत्य कार्यज्ञानमेव प्रवर्त्तकमिति प्राभाकरा मन्यन्ते, तान् पराकरोति—इष्टसाधनमिति। ननु लोके कार्यमिति विज्ञानानन्तरमेव प्रवृत्तिदर्शनादन्यथा चाऽदर्शनात् कार्यज्ञानस्य तावत्प्रवर्त्तकत्वं सिद्धम्। इदमिष्टसाधनमिति विज्ञानेन तस्य कृतियोग्यतामुपलभ्य पुरुषः प्रवर्त्तते, निवर्त्तते च अनिष्टसाधनमिति विज्ञानेन। तस्मात् प्रवृत्तिकारणविषयतया अन्यथासिद्धाविष्टसाधनविज्ञानेन प्रवृत्तेरन्वयव्यतिरेकौ अतीतानागतस्थले इष्टसाधनविज्ञाने सत्यपि प्रवृत्त्यदर्शनादसिद्धावपि तौ, साध्यस्वभावस्यैव अन्वयव्यतिरेकाभ्यां प्रवर्त्तकत्वमिति भवताऽनिच्छताप्याश्रयणीयम्। तस्मात् कार्यविज्ञानमेव प्रवर्त्तकमित्याशङ्क्याह—इष्टसाधनविज्ञानमिति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयमर्थः—समीहितसाधनज्ञानमेव प्रवर्त्तकम्, तेन प्रवृत्तेरन्व[illegible]
कोपलम्भात्। न च तौ कार्यविज्ञानहेतुविषयतयाऽन्यथा[illegible]
शङ्क्यम्, कार्यमिति ज्ञानस्य प्रवर्त्तकत्वासिद्धेरिति। ननु का[illegible]
नान्वयव्यतिरेकानुविधायित्वात् प्रवृत्तेः कार्यविज्ञानस्यैव प्रवर्त्तक[illegible]
शङ्क्याह—इष्टसाधनत इति। इष्टसाधनव्यतिरेकेण का[illegible]
प्रमाणाभावात्, तस्य चोभयवादिसम्प्रतिपन्नतया प्रवृत्त्यन्वय[illegible]
त्वात् तदेव प्रवर्त्तकं युक्तमाश्रयितुमित्यर्थः ॥ ८८ ॥

अतोऽत्र कृतियोग्येष्टसाधनज्ञानमेव हि।
वक्तव्यं कार्यविज्ञाने कारणं ते तथा सति ॥ [illegible]
इष्टसाधनविज्ञानं येन रूपेण कारणम्।
कार्यज्ञानं प्रतीत्थं तत् प्रवृत्तिं प्रति कारणम् ॥ [illegible]

नन्वतीतानागतेष्टसाधनविषयज्ञानस्याप्रवर्त्तकत्वात् साधन[illegible]
प्रवृत्तेरकारणम्। अतः साध्यरूपेणैव तस्यापि प्रवर्त्तकत्वं व[illegible]
तथा सति नामान्तरेण कार्यमेव प्रवर्त्तकमुक्तं स्यात्। तत्र क[illegible]
साधनव्यतिरिक्तकार्याभाव इत्याशङ्क्याह—अत इति। [illegible]
भवत्पक्षेऽपीष्टसाधनबुद्धिः स्वयमेव प्रवर्त्तिकाऽपि प्रवृत्तिहेतु[illegible]
ज्ञानहेतुरिष्यते सा तावदतीतादिरूपेण कार्यज्ञानं प्रत्यपि न का[illegible]
प्रतिपद्यते। अतः कृतियोग्येष्टसाधनज्ञानमेव कार्यज्ञानका[illegible]
वक्तव्यं ते तव मते। तथा सति येन रूपेणेष्टसाधनविज्ञान[illegible]
ज्ञानं प्रति कारणभावस्तेन रूपेणैव प्रवृत्तिं प्रति हेतुरस्तु, तस्यो[illegible]
सम्प्रतिपन्नत्वात् प्रवृत्त्यव्यभिचाराच्चेति द्वयोरर्थः। तथा च कि[illegible]
जागलस्तनायमानेन कार्यनामधेयेन। तस्मादिष्टसाधनज्ञान[illegible]
प्रवर्त्तकमिति यदुक्तम्, तत्साम्प्रतमिति भावः ॥ ८९—९० ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

पदानामेव संसृष्टपदार्थप्रतिपादने ।
शक्तिर्गवादिशब्दानां तदर्थे सङ्गतिग्रहात् ॥ ६१ ॥

एवं कार्यज्ञानमेव प्रवर्त्तकं नेष्टसाधनज्ञानमिति पक्षं निराकृत्याभिहितानामेवार्थानामन्योन्यसंसर्गबोधजनकत्वमिति पक्षं निराकरोति—पदानामिति। इह खलु वार्त्तिककारीया मन्यन्ते—देवदत्त! शुक्लां दण्डेन गामानयेति शब्दश्रवणानन्तरं बालः प्रतिपत्तुः प्रवृत्तिलिङ्गेन पदकदम्बस्याऽविशेषेण वाक्यार्थे सामर्थ्यं प्रथमं प्रतिपद्य पुनश्च गां बधान, तुरगमानयेत्यादिप्रयोगान्तरेषु गोपदोद्धारे सास्नादिमदर्थमात्रोद्धारोपलम्भात् तुरगपदप्रक्षेपे च केसरादिमदर्थमात्रप्रक्षेपदर्शनात् गवादिस्वरूपमात्रे पदानां सामर्थ्यं प्रतिपद्यते। कथं पुनः शब्दश्रवणसमनन्तरमेव संसर्गबुद्धिरिति संसर्गबुद्धिकारणमपीक्षमाणः पदानां पदार्थस्वरूपमात्रविज्ञानोपक्षीणशक्तिकत्वात् संसर्गविषयप्रमाणान्तरानवगमाच्च पदाभिहितपदार्थानामेव संसर्गविज्ञानान्वयव्यतिरेकवतां तद्धेतुत्वमिति पश्चात् निश्चिनोति। न च पदानां पदार्थस्वरूपाभिधानसामर्थ्यम्, पदार्थानाञ्च संसर्गप्रतिपादनसामर्थ्यम्, पदार्थेषु संसर्गप्रतिपादनशक्त्याधानसामर्थ्यञ्च पदानामिति गुरुतरा कल्पनाऽभिहितान्वयवादं प्रसज्जयेत। अन्विताभिधानवादे तु पदानामेकमेव संसृष्टार्थाभिधानसामर्थ्यमिति लघीयसी कल्पना। एकशक्तिकल्पनाया वाक्यार्थविज्ञानोपपत्तावनेकशक्तिकल्पना प्रमाणप्रयोजनशून्येति वाच्यम्, अन्विताभिधानपक्षे एव गुरुतरकल्पनाश्रयणात्। तथा हि—पदानां तावत् पदार्थस्वरूपस्मृतिजननसामर्थ्यं कल्पनीयम्, पुनस्तेषामेवान्विताभिधानसामर्थ्यञ्चेत्यस्त्येवानेककल्पना। अस्मत्पक्षे तु पदानां पदार्थाभिधानसामर्थ्यमेकमेव कल्पनीयम्, पदार्थानां पुनः पदसमूहसन्निधापितानामाकाङ्क्षायोग्यतासन्निधिविशिष्टानामन्योन्यसंसर्गबोधसामर्थ्यम-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्यत्र दृष्टमेवाश्रीयते, न खलु पदार्थेषु संसर्गबोधसामर्थ्यमिदं
तया तत्रैव कल्प्यते। उक्तं हि—

"पश्यतः श्वेतिमारूपं ह्वेषाशब्दञ्च शृण्वतः।
खुरनिष्पेषशब्दञ्च श्वेतोऽश्वो धावतीति धीः॥"

(श्लो० वा०) इति

न च पदार्थानामेव संसर्गप्रतिपादनसामर्थ्याभ्युपगमे सं-
स्याऽशाब्दत्वप्रसङ्गः, ततश्चाऽसौ न वाक्यार्थः स्यादिति वाच्यम्,
पदार्थाभिधानव्यापारनान्तरीयकत्वात् पदार्थानामन्यो-
बोधनस्य। न च पदानि सामान्यान्विताभिधायीनि, विशिष्ट-
प्रतीत्यभावप्रसङ्गात्। न वा विशेषान्विताभिधायीनि विशे-
न्स्यात्, प्रतिप्रयोगं प्रतिपदार्थञ्च शब्दस्य शक्तिभेदकल्प-
सम्बन्धग्रहणे एवायुरुपक्षयात् शब्दादर्थे कश्चिद् व्यव-
स्यात्। तस्मादन्यथासिद्धवाक्यार्थप्रतिपत्त्यन्यथानुपपत्त्यैवाभिहि-
निश्चय इति तदेतन्मतं वार्तिककारीयं निराकुर्वन्नाह—पदा-
पदानामेव संसृष्टार्थप्रतिपादने शक्तिः सामर्थ्यमाश्रयणीयम्,
इत्यत आह—गवादीति। गवादिपदानां तदर्थे अन्वाति-
स्वरूपे संगतिग्रहादिति योजना। अयमाशयः—गामान
ति शब्दविज्ञानसमनन्तरभाविप्रवृत्तिलिङ्गेन शब्दसमुदा-
दाये सामर्थ्यं प्रतिपद्य पुनः प्रयोगान्तरेषु गवादिपदोद्धारे
रान्वयेन सार्द्धमेवोद्धारात् पदान्तरप्रक्षेपे चात्तदर्थस्यान्
प्रक्षेपात् पदानामन्यान्वितस्वार्थे सामर्थ्यं व्युत्पत्तौ
न चान्वितपदार्थविज्ञानेन शब्दस्यान्वयव्यतिरेकित्वे
न्वितगवादिस्वरूपमात्रे शब्दशक्तिकल्पना प्रमाणं
अनेकशक्तिकल्पना पुनरभिहितान्वयवादे दुष्परिहरा।
काङ्क्षायोग्यतासन्निधिविशिष्टानामर्थानां संसर्गप्रतिपाद-
मन्यत्र दृष्टमेवाश्रीयते, नापूर्वतया कल्प्यते इति, तदपि न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

यावता तत्रापि संसर्गयोग्यार्थलिङ्गेन संसर्गज्ञानमनुमानमेव । तथाहि— विगीतः श्वेतपदार्थः क्षिप्रगामी तुरगो भवितुमर्हति, खुरविक्षेपह्रेपा-शब्दवत्त्वात्, सम्प्रतिपन्नतुरगवदिति । न पदार्थनामकं किंचित्प्रमा-णान्तरं प्रसिद्धमस्ति, सप्तमप्रमाणानभ्युपगमात् । अतो भवत्येव गुरुतरशक्तिकल्पना अभिहितान्वयवादे । अन्विताभिधानवादे तु पदानामेव संसृष्टार्थप्रतिपादनशक्तिरेकैव कल्प्यते, अनन्वितपदार्थ-स्वरूपस्मारकत्वन्तु पदानामन्विताभिधानव्यापारनान्तरीयकमिति न पृथक् शक्तिकल्पनायै प्रभवति । पदानामन्त्यपदोच्चारणपर्यन्तं क्रमेण श्रोत्रपथमवतरतामनन्वितस्वार्थेषु स्मृतिमात्रहेतुत्वम् । तेषां पुनर-न्त्यपदश्रवणसमनन्तरमेव युगपदेकस्मृतिगोचरतामाचरतामन्विताभि-धायित्वम् । तेन गोपदेन तत्संसृष्टस्वार्थाभिधाने सति 'आनय' इति पदेन तत्संसृष्टस्वार्थाभिधानमिति परस्पराश्रयदोषप्रसङ्गः परिहृतः । यत्तू-क्तम्—सामान्यान्विताभिधायित्वं विशेषान्विताभिधायित्वञ्च पदानामनु-पपन्नमिति, तन्न युक्तम्, सामान्यान्विताभिधानेऽपि तावदाकाङ्क्षादिम-तामेवार्थानामन्विताभिधायकत्वनियमाद् विशिष्टवाक्यार्थप्रतिपत्त्युप-पत्तेः । विशेषान्विताभिधानपक्षेऽप्याकाङ्क्षादित्रयस्य सम्बन्धग्रहणम्, प्रत्युपाधित्वाभ्युपगमादेकत्र गृहीतसम्बन्धस्य प्रयोगान्तरे पदार्थान्त-रान्वयेऽपि तदुपाधिवशेनैव पुनः सम्बन्धग्रहणमनपेक्ष्यान्वितप्रतीत्यु-पपत्तेरिति ॥ ९१ ॥

**यतोऽन्विताभिधायित्वे पदानामविरोधतः ।**
**ततोऽन्विताभिधानं स्यान्निर्दुष्टं विदुषां मतम् ॥९२॥**

तस्मादभिहितान्वयपक्षेऽनेकशक्तिकल्पनाप्रसङ्गात्, सङ्गतिग्रहस्य च पदानामन्वितार्थविषयत्वाद्, वाक्यार्थस्य चाऽशाब्दत्वप्रसङ्गात्, पदा-र्थानामपूर्वप्रमाणकल्पनाप्रसङ्गात्, वाक्यार्थप्रतिपत्तेश्च पदानामन्वि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ताभिधायकत्वेऽपि विरोधाभावात्, अपगतनिखिलदोषजातमन्विता-
भिधानमेव न्याय्यमित्याशयेनाह—यत इति। यस्मात् पूर्वोक्तरीत्यान्वि-
ताभिधायित्वे पदानामविरोधः, तस्मादन्विताभिधानं निर्दुष्टं
विदुषां मतं भवतीत्यर्थः ॥ ९२ ॥

**साक्षादेव प्रमाणं स्युर्वेदान्ता ब्रह्मवस्तुनि।**
**न वा क्रियाविधिद्वारा सिद्धार्थप्रतिपत्तितः ॥९३॥**

एवमभिहितान्वयनिराकरणेनान्विताभिधानं स्वमतमवस्थाप्य
क्रियाव्यवधानमन्तरेणैव वेदान्ता ब्रह्मात्मनि प्रमाणमिति दर्शयति—
साक्षादिति। केचन मन्यन्ते लोके शब्दं प्रयुञ्जानः श्रोतुः साक्षात्
परम्परया वा किञ्चित् प्रयोजनमुद्दिश्यैव शब्दं प्रयुङ्क्ते। तत्र प्रयोजन-
मिष्टप्राप्तिरनिष्टपरिहारो वा। तदुभयं प्रवृत्तिनिमित्तसाध्यमेवेति प्रवृत्ति-
निवृत्तिप्रयोजनमेव लोके शब्दप्रयोगमुत्पश्यामः। तदिह वेदान्तेष्व-
पि प्रवृत्तिनिवृत्तिप्रयोजनपर्यवसानमेव प्रामाण्यं युक्तम्। अन्यथा
ध्ययनपरिगृहीतानामखिलवेदान्तशब्दानामानर्थक्यमन्याय्यमापद्येत।
अपि च न वेदान्तवाक्यजनितविज्ञानमात्रेण कृतकृत्यता शक्याव-
वसातुम्, श्रवणोत्तरकालमपि मननिदिध्यासनयोश्च कर्तव्यतया
विधीयमानत्वात्। तस्मात् "आत्मा वा अरे द्रष्टव्यः" (बृ० ४।५।
६) "तत्त्वमसि" (छा० ६।८।७) "अहं ब्रह्मास्मि" (बृ० १।
४।१०) इत्यादिब्रह्मात्मत्वोपासनविधिनान्तरीयकमेव शब्दस्य
प्रामाण्यमिति। तदेतन्मतं निराकुर्वन्नाह—साक्षादेवेति।
भावः—"ब्रह्म वेद ब्रह्मैव भवति" (मु० ३।२।९)। "ब्रह्मविदा-
प्नोति परम्" (तै० २।१) इत्यादिश्रुतिशतेन ब्रह्मात्मभावरूप-
मोक्षस्य केवलज्ञानमात्रनिमित्तत्वाभिधानात् "तरति शोकमात्म-
वित्" (छा० ७।१।३) "भिद्यते हृदयग्रन्थिः" (मु० २।२।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"भूयश्चान्ते विश्वमायानिवृत्तिः" ( श्वे० १ । १ ) "मायामेतां तरन्ति ते" ( गी० ७ । १४ ) इत्यादिश्रुतिस्मृतिशतैः संसारस्य माथामयत्वानुवादेन सम्यग्ज्ञाननिवर्त्यतायाः साक्षादेव विधीयमानत्वात्, लोके स्वप्नमायामरीचिसलिलगन्धर्वनगरादिविभ्रमस्य वस्तुतत्त्वसाक्षात्कारेण ज्ञानेन निवर्त्यमानत्वोपलम्भात्, ब्रह्मण्युपासनादिक्रियाकलापस्य "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" ( के० १ । ४ ) इत्यादिना निषिध्यमानत्वाच्च क्रियानिरपेक्षमेव वेदान्तानां ब्रह्मणि प्रामाण्यमिति। ननु मोक्षोऽपि स्वर्गादिवत् क्रियासाध्यः किन्न स्यात् ? न च तद्वदेवाऽनित्यत्वमपि शङ्क्यम्, "न च पुनरावर्त्तते" ( छा० ८ । १५ । १ ) इत्यपुनरावृत्तिश्रुतिविरोधादित्याशङ्क्याह—न वेति। सिद्धार्थः नित्यसिद्धो मोक्षपदार्थस्तस्य प्रतिपत्तिः प्राप्तिर्नैव क्रियाद्वारा—क्रियासाध्यो मोक्षो नैवास्ति, अनित्यत्वापत्तेरित्यर्थः। उपासनाविधिपरत्वादपुनरावृत्तिवाक्यस्य अन्यपरस्य शब्दस्य प्रमाणान्तरविरोधे सति प्रामाण्यानुपपत्तेः "इमं मानवमावर्त्तं नावर्त्तन्ते" ( छा० ४ । १५ । ६) "तेषां न पुनरावृत्तिः" (बृ० ६ । २ । १५) इत्यत्र इममिहेति विशेषणेनैतत्कल्पावधिकानावृत्तिप्रतिपादनात् "तद् यथेह कर्मचितो लोकः" ( छा० ८ । १ । ६ ) इत्यादिश्रुत्यैव क्रियाफलस्य सर्वस्याविशेषेणानित्यत्वप्रतिपादनाद् नापवर्गः स्वर्गादिवत् क्रियासाध्य इति भावः ॥ ६३ ॥

## मालेयं तव कण्ठेऽस्ति न सर्पो रज्जुरित्यसौ ।
## बोधनं सिद्धवस्तूनां दृश्यते विधिमन्तरा ॥ ६४ ॥

यत्तूक्तम्—प्रवृत्तिनिवृत्तिप्रयोजनव्यतिरेकेण शब्दप्रयोगानुपपत्तिरिति तत्राह—मालेयमिति। इयं माला तव कण्ठेऽस्ति, रज्जुरसौ, नायं सर्पः—इत्यादिशब्दानां केवलवस्तुमात्रावबोधनेन इष्टानिष्टप्राप्तिपरिहारपर्यवसानं विधिमन्तरैव दृश्यते। न च तत्रापि मालापायनिमित्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रलापादिनिवृत्तिः सर्पादिप्रतिबन्धनिवृत्त्या गमनादिप्रवृत्तिश्च फलमिति वाच्यम्, यतः सर्पादिसन्दर्शनसञ्जातत्रासस्य संत्रासनिवृत्त्या नैव वाक्यमर्थवद्, नापरं प्रयोजनमपेक्षते। पश्चादुपजायमाना गमनादिप्रवृत्तिः प्रयोजनान्तरनिमित्तैव न वाक्यसामर्थ्यकृता। कण्ठगतविस्मृतसुवर्णभूषणबोधनवाक्येऽपि सुवर्णापायनिमित्तदुःखनिवृत्तिस्तदवाप्तिनिमित्तं हर्षश्च प्रयोजनम्। प्रलापसन्तापादिस्तु हेत्वभावान्निवर्त्तते। एवमेव वेदान्तवाक्यानामपि वस्तुतत्त्वावबोधमात्रेण निखिलसंसारनिवृत्तिनिरतिशयानन्दब्रह्मभावाविर्भावविनिर्वाहोपपत्तेः, न क्रियाव्यवधानकल्पनावकाशः इति तात्पर्य्यार्थः॥

**आबोधं चिन्तनध्याने नोद्र्ध्वं तेनापि संसृतिः।**
**सति ज्ञाने न चोपास्योपासकादिविकल्पना॥**

यदपीदमुक्तम्—श्रवणोत्तरकालं मनननिदिध्यासनयोः कर्त्तव्यत्वविधानात् न वस्तुस्वरूपमात्रविज्ञानपर्यवसानं वेदान्तानामिति तत्राह—आबोधमिति। "आत्मनस्तु कामाय सर्वं प्रियं भवति" (बृ० ४। ५। ६) "आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति" (बृ० ४। ५। ६) इत्यात्मन एव सर्वस्मात् परप्रेमास्पदत्वप्रतिपादनेन परमपुरुषार्थत्वमभिधाय "एतावदरे खल्वमृतत्वम्" (बृ० ४। ५। १५) इत्यात्मज्ञानेन कृतकृत्यतामुक्त्वा तच्चामृतत्वप्राप्तिसाधनमात्मज्ञानं "आत्मा वा अरे द्रष्टव्यः" (बृ० ४। ५। ६) इत्यनूद्य ज्ञानसाधनं "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ० २। ४। ५) इति श्रवणमनननिदिध्यासनानामविशेषेण ज्ञानसाधनत्वविधानाद् ज्ञानोत्तरकालभाविता मनननिदिध्यासनयोरित्यर्थः। ननु ज्ञानोत्तरमपि संसारोपलब्धेस्तन्निवृत्तये अस्तु कस्यचिद् विधिरित्याशङ्क्याह—तत्त्वबोधादूर्ध्वं संसृतिरिति। ऊद्र्ध्वमित्यत्राऽप्यनुषज्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संसृतिः, ब्रह्मात्मभावविरोधात् । यस्य तु संसृतेरुपलब्धिर्नासावगततत्त्व इत्यर्थः । यत्तूक्तम्—उपासनाक्रियाविधिनान्तरीयकतया तदन्यथानुपपत्त्या वा वस्तुसिद्धिरिति तत्राह—सति ज्ञाने इति । शब्दप्रमाणावगते तु ब्रह्मात्मत्वे सकलभोक्तृभोक्तव्यभोगप्रमातृप्रमाणप्रमेयकर्म्मकर्त्तृकार्य्यग्रन्थिशैथिल्यादुपास्योपासकादिभावानुपपत्तेः । नाप्युपासनाविधिनाऽन्यथानुपपत्त्योपास्यतत्त्वसिद्धिः, योषिदग्न्यादिवदारोपितरूपेणाप्युपासनासम्भवादिति तात्पर्य्यार्थः ॥ ९५ ॥

**तस्माद्वेदान्तगीः प्रत्यग्ब्रह्मैक्यप्रतिपादिनी ।**
**क्रियागन्धमपि स्प्रष्टुं नेष्टे ब्रह्मपरत्वतः ॥ ९६ ॥**

यस्माद्वेदान्तानां क्रियाविधिपरत्वे सति न वस्तुनि प्रामाण्यसिद्धिस्तस्मान्न प्रमाणप्रयोजनवतीयं क्रियाविधिव्यवधाने ब्रह्मणि वेदानां प्रामाण्यकल्पना । किन्तु साक्षादेव ब्रह्मणि शब्दः प्रमाणम्, न ब्रह्मप्रतिपादकं वाक्यं क्रियालेशमपि स्प्रष्टुमीष्टे इति सिद्धमित्युपसंहरति—तस्मादिति ॥ ९६ ॥

**परं ब्रह्मविदाप्नोतीत्येवं ब्रह्मावबोधतः ।**
**समुद्दिश्य परप्राप्तिं किं तदित्यत्र कथ्यते ॥ ९७ ॥**

एवं क्रियाविध्यसंस्पृष्टा एव वेदान्ता ब्रह्मणि साक्षात्प्रमाणमिति प्रसाध्येदानीम् "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० २ । १ ) इत्यादिवाक्यमखण्डैकरसार्थपर्यवसायीति प्रतिपादयितुमुपक्रमते—परमिति । तत्र केचिद् ब्रह्मदर्शनद्वेषिणो मन्यन्ते—लोके शब्दस्य मुख्यार्थपरिग्रहानुपपत्तौ लक्ष्यलक्षणयोश्चासाधारणसम्बन्धे सति वाक्यस्थपदानामन्विताभिधानसिद्धये प्रमाणान्तरसिद्धानेव कतिपयपदार्थान् वाक्यार्थान्वय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योग्यानेव लक्षयन्ति पदानीति दृष्टम्, न चैकमपि कारणमत्र ल॰ पदलक्षणायामुपलभामहे। न तावन्मुख्यपरिग्रहानुपपत्तिः, सत्या॰ न्दादिगुणगणविशिष्टब्रह्मपरत्वेनापि सामानाधिकरण्योपपत्तेः न॰ खण्डैकरसार्थपरत्वपक्षे लक्ष्यलक्षणसम्बन्धसम्भवः, ब्रह्मणः॰ वस्त्वन्तराभावात् निरस्ताशेषविशेषतया ब्रह्मणः सर्वसम्बन्धा॰ भ्युपगमाच्च। नापि लिलक्षयिषिताखण्डैकरसे प्रमाणान्तर॰ तस्य शब्दैकसमधिगम्यत्वाभ्युपगमात्। किञ्च, सत्यादि॰ निविष्टसमस्तपदानामत्र लक्षणा समाश्रीयते चेत्, तदा लक्ष॰ काभावात् लक्षणापि नोदेति। वाक्यस्थपदानामन्विताभिधान॰ त्तिर्हि तत्रासम्भवन्मुख्यार्थानामेव पदानां केषाञ्चिल्लक्षणा॰ सकलपदलक्षणाकक्षीकारे तु पदानामन्विताभिधानाभावे सति ॰ किमाक्षिपेत्। कतिपयपदलक्षणापरिग्रहेऽपि इतरेषां पदानामु॰ नेकार्थान्विताभिधायित्वान्नाखण्डैकरसवाक्यार्थसिद्धिः। तस्मा॰ र्थपरिग्रहेऽनुपपत्त्यभावाल्लक्षणाकारणान्तराभावाच्च न लक्षणापरि॰ त्यादिवाक्यस्याखण्डवाक्यार्थपर्यवसानं युक्तम्। अपि च मुख्या॰ नेन विशिष्टार्थपर्यवसानमेव साधु मन्यामहे। तथा च तत्त्वमस्या॰ स्यापीयमेव गतिरिति तदेतन्मतं दूषयितुमुपक्रमते—परमिति। विदाप्नोति परम्" (तै० २। १) इति ब्रह्मविज्ञानात् परप्रा॰ किंलक्षणं ब्रह्मेति ब्रह्मलक्षणबुभुत्सायामिदमुच्यते श्रुत्येत्यर्थः॥ ॰

सत्यं ज्ञानमनन्तं तद् ब्रह्मेत्यत्र हि लक्ष्यते।
इतराणि पदान्यत्र पर्यवस्यन्ति लक्षणे॥ ६८॥

किं तदित्यत्राह—सत्यमिति। "सत्यं ज्ञानमनन्तं ब्रह्म" (तै० २। १) इत्यत्र ब्रह्मेति लक्ष्यनिर्देशः। इतराणि तु पदानि ल॰ र्पणेनैव पर्यवस्यन्तीत्यर्थः॥ ६८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

न चैकेन पदेनैव संसिद्धिर्लक्ष्यवस्तुनः ।
व्यावर्त्यभ्रान्तिभेदो हि यस्मात् प्रतिपदं भवेत् ॥ ६६ ॥

ननु यदि ब्रह्मणो लक्षणान्येव सत्यादीनि न विशेषणानीति स्वीक्रियते, तदाऽनेकविशेषणेन विशिष्टस्यैकस्य वस्तुनोऽप्रतिपाद्यत्वात् एकेनापि लक्षणसिद्धेर्नानेकपदप्रयोगोपयोगं पश्याम इत्याशङ्क्य ब्रह्मण्यनाद्यनिर्वचनीयाविद्याध्यारोपिताऽनृतजाड्यदुःखपरिच्छेदभ्रान्तीनां नित्यसिद्धनिरतिशयानन्दब्रह्मावगमविरोधित्वात् तत्तद्भ्रान्तिनिवर्तनेन सर्वपदानां ब्रह्मसमर्पकत्वादर्थवत्त्वमित्याशयेन परिहरति—न चेति ॥ ६६ ॥

मिथ्यात्वजाड्यदुःखित्वपरिच्छेदादिविभ्रमः ।
सत्यज्ञानसुखानन्तपदैर्ब्रह्मणि नाश्यते ॥ १०० ॥

तत्तत्पदेन व्यावर्त्यभ्रान्तिभेदं दर्शयति—मिथ्यात्वेति । सत्यपदेन ब्रह्मणि मिथ्यात्वभ्रान्तिर्निवर्त्यते, ज्ञानपदेन जाड्यभ्रान्तिः, आनन्दपदेन स्वतः परतो वा दुःखसम्बन्धभ्रान्तिः, अनन्तपदेन देशतः कालतो वस्तुतश्चाऽवच्छेदभ्रान्तिरिति विवेकः ॥ १०० ॥

लक्षणावसरे भिन्नाकारत्वेनापि तद्धियः ।
जायमाना अतद्भ्रान्तिव्यावृत्त्यैकफला मताः ॥ १०१ ॥

ब्रह्मणि स्वं स्वमाकारं प्रमेयत्वेन चिद्घने ।
नोत्सहन्ते धियो भिन्नं ताः समर्पयितुं कदा ॥ १०२ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु सर्वपदानामेकाकारविज्ञानजनकत्वे पर्यायत्वादनेकप्रयोगानुपयोगः। अनेकाकारविज्ञानजनकत्वे तु विज्ञेयेऽपि अनेकाकारप्रसङ्गादखण्डैकरसत्वहानिरित्याशङ्क्य लक्षणसमये [illegible]कारतया जायमानान्यपि विज्ञानानि अतद्व्यावृत्तिव्यावृत्तिमात्र[illegible]नत्वान्न ब्रह्मणि स्वं स्वमाकारं प्रमेयतया समर्पयितुमुत्सहन्ते [illegible] लक्षणावसरे इत्यादिद्वाभ्याम्। तद्धियः सत्यादिपदजन्यज्ञानानि [illegible] सुगममन्यत् ॥ १०१–१०२ ॥

ब्रह्मशब्दार्थमात्रस्य बुभुत्सिततयापि च।
नास्ति प्रतिपदं तासां स्वस्वाकारसमर्पणम् ॥ १[illegible]

ननु प्रतिपदं जायमानविज्ञानानां ब्रह्मणि स्वस्वाकारसम[illegible]न्तरीयकतयापि विरोधिरूपव्यावर्त्तकत्वोपपत्तेरुभयं प्रयो[illegible] इत्याशङ्क्याह—ब्रह्मशब्देति ॥ १०३ ॥

सम्भवत्यर्थवत्त्वे बुभुत्सितार्थसमर्पणात्।
वाक्यस्य नैव युक्ता स्यादर्थान्तरप्रकल्पना ॥ १[illegible]

एतदेव द्रढयति—सम्भवतीति। बुभुत्सितार्थसमर्पणे[illegible] सम्भवति सति वाक्यस्यार्थान्तरकल्पना नैव युक्तेति योजना ॥ [illegible]

न वा निर्दिश्यते सत्यज्ञानादिगुणसंयुतम्।
ब्रह्मशब्देन तच्चैकद्रव्यमित्यपि साम्प्रतम् ॥ १[illegible]

सत्यज्ञानादिगुणविशिष्टमेकद्रव्यं ब्रह्म निर्दिश्यते इत्युक्तं [illegible] न वेति ॥ १०५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मशब्दस्य च स्वार्थप्रक्षेपेण निरञ्जने ।
सामर्थ्यमनवच्छिन्ने निश्चितं निरुपाधिके ॥ १०६ ॥

तत्र हेतुमाह—ब्रह्मशब्दस्येति । निरञ्जने मायातीते, निरुपाधिके अन्तःकरणाद्युपाधिविनिर्मुक्ते ब्रह्मशब्दस्य स्वार्थप्रक्षेपेणानवच्छिन्नवस्तुमात्राभिधानसामर्थ्ये सत्यपूर्वसंज्ञापरत्वकल्पनासम्भवादित्यर्थः ॥ १०६ ॥

यदा गुणगुणित्वेनावच्छेदो ब्रह्मवस्तुनः ।
तदाऽनन्तादिशब्दानां प्रसज्ज्येताप्यनन्वयः ॥१०७॥

ब्रह्मणः सत्यादिगुणत्वाङ्गीकारे दोषमप्याह—यदेति । यदि ब्रह्मणि गुणगुणिभावेनावच्छेदमभ्युपगच्छामः तदा सर्वतोऽनवच्छिन्नवस्तुप्रतिपादकानन्तादिशब्दानामनन्वयः प्रसज्ज्येतेति योजना ॥ १०७॥

यतो वाचो निवर्त्तन्ते इत्याद्या ब्रह्मणः श्रुतिः ।
बाध्येत शब्दवाच्यत्वे वाच्याचिन्त्यत्वतत्परा ॥१०८॥

तत्रैव बाधकान्तरमाह—यत इति । "यतो वाचो निवर्त्तन्ते" (तै० २।४) इत्याद्या च ब्रह्मणो वाङ्मनसागोचरत्वश्रुतिस्तस्य शब्दवाच्यत्वे बाध्येतेति योजना ॥ १०८॥

एकधैवानुद्रष्टव्यमेकमेवाऽद्वितीयकम् ।
प्रज्ञानघन इत्याद्या न युज्येरन् श्रुतेर्गिरः ॥ १०९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुत्यन्तरविरोधमप्याह—एकधेति। एकरसत्वप्रतिपादिका उपचरितार्थाः कल्पेरन्नित्यर्थः ॥ १०९ ॥

**अल्पमप्यन्तरं कुर्वन् भयं याति स मृत्युभाक्।**
**नेह नानेति वेदान्ता बाध्येरन् भेदनिन्दकाः ॥ ११० ॥**

भेदनिन्दकवाक्यविरोधमप्याह—अल्पमिति। "उदरमन्तरं कुरुते। अथ तस्य भयं भवति" (तै० २। ७) "नेह नानास्ति किञ्चन" (बृ० ४। ४। १९) "मृत्योः स मृत्युमाप्नोति" (क० ४। १०, बृ० ४। ४। १९) इत्याद्याश्च ब्रह्मणि सर्वप्रकारभेदासहाः श्रुतयो बाध्येरन्नित्यर्थः ॥ ११० ॥

**ब्रह्मणस्तद्गुणानाञ्च स्वप्रकाशत्वनिश्चये।**
**क्षतिर्गुणगुणित्वस्य विशेषानवधारणात् ॥ १११ ॥**
**ब्रह्मणोऽस्वप्रकाशत्वे ह्यन्यवेद्यतया भवेत्।**
**जडत्वकार्यरूपत्वविकारित्वादिदूषणम् ॥ ११२ ॥**

दूषणान्तरमप्याह—ब्रह्मण इत्यादिद्वाभ्याम्। ब्रह्मणस्तद्गुणानां सत्यादीनाञ्च स्वयंप्रकाशत्वे सति स्वभावविशेषानवधारणाद् गुणगुणित्वहानिः, ब्रह्मणोऽस्वयंप्रकाशमानत्वे सति अन्यवेद्यत्वादनेनतत्त्व... विकारित्वादिदोषप्रसङ्ग इति द्वयोरन्वयः ॥ १११—११२ ॥

**अविद्यावृतिबाधस्य वेदसापेक्षभावतः।**
**नातोऽस्य शास्त्रवेद्यत्वक्षतिः स्वज्योतिषोऽपि च ॥**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु स्वयंप्रकाशत्वे सति ब्रह्मणः शास्त्रवेद्यत्वं न स्यादित्याशङ्क्य अनिर्वाच्यानाद्यविद्यावरणतिरोधानमात्रस्यागमसापेक्षत्वादित्याह—अविद्येति ॥ ११३ ॥

ततोऽनन्तादिशब्दानामनन्वयप्रसङ्गतः ।
नानाश्रुतिविरोधाच्च नानायुक्तिविरोधतः ॥ ११४ ॥
लक्षणैवेह वाक्यार्थसंसर्गासम्भवे सति ।
वाक्यस्याश्रयणीया हि प्रमाणत्वाय सर्वथा ॥ ११५ ॥

ननु ब्रह्म स्वयंप्रकाशमानमपि आत्मनि संवेद्यगुणानवभासयतीत्याशङ्क्य तेषां तत्प्रकाशस्य च नित्यत्वे सति अन्यवेद्यत्वासिद्धेः । अनित्यत्वे च तेषां विषयेन्द्रियसंयोगसाध्यत्वाद् ब्रह्मणोऽपि संसारित्वप्रसङ्गात् । तस्मादस्मिन् वाक्येऽनन्तादिशब्दानामनन्वयप्रसङ्गाद्, अनेकश्रुतिविरोधाद्, युक्तिविरोधाच्च वाक्यार्थसंसर्गासम्भवे सति वाक्यस्य प्रमाणत्वाय लक्षणैव समाश्रयणीयेत्याशयेनाह—तत इति द्वाभ्याम् ॥११४—११५॥

न वा वस्त्वन्तराभावाद् ब्रह्मणोऽसंगिनो विभोः ।
लक्ष्यलक्षणसम्बन्धाभावे स्याल्लक्षणा कथम् ॥ ११६ ॥

यदुक्तम्—ब्रह्मव्यतिरिक्तवस्त्वन्तराभावाद् ब्रह्मणः सर्वप्रकारसम्बन्धाभावाच्च लक्ष्यलक्षणसम्बन्धाभावे सति लक्षणानुपपत्तिरिति, तदनूद्य दूषयति—न वेति ॥ ११६ ॥

प्रातिभासिकदृश्यस्य प्रतिभासानुसारतः ।
लक्ष्यलक्षणभावादिव्यवहारोऽपि युज्यते ॥ ११७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न वेति प्रतिज्ञायां हेतुमाह—प्रातिभासिकेति। ब्रह्मण एव पा-
कसत्यत्वेऽपि प्रातिभासिकस्यापि दृश्यप्रपञ्चस्य यथाप्रतिभासं ...
रालम्बनत्वाभ्युपगमाद् लक्ष्यलक्षणादिसमस्तव्यवहारोपपत्तेरिति...

असङ्गस्यापि वाक्योत्थज्ञानपर्यन्तमिष्यते।
प्रातिभासिकसम्बन्धो ब्रह्मणस्तेन का क्षतिः॥...

एतदेव स्पष्टयति—असङ्गस्यापीति। ब्रह्मणः परमार्थतोऽसङ्ग...
तत्त्वमस्यादिवाक्योत्थविज्ञानपर्यन्तं प्रातिभासिकसम्बन्धानि...
निर्वचनीयेनापि गुणसामान्यादिना मिथ्याभूतेन रजतेनेव शुक्ति...
परमार्थभूतस्य ब्रह्मणो लक्षणोपपत्तेरिति तात्पर्यार्थः॥ ११८॥

ब्रह्मणः स्वप्रकाशत्वादन्यमानानपेक्षणात्।
वस्तुनो भासमानत्वं लक्षणायां प्रयोजकम्॥...

यदपीदमुक्तम्—प्रमाणान्तरसिद्धस्यैव लोके लक्ष्यत्वाद्, ...
प्रमाणान्तरासम्भवाल्लक्षणानुपपत्तिरिति, तद्दूषयति—ब्रह्मण...
ब्रह्मणः स्वयंप्रकाशमानत्वेन प्रमाणान्तरानपेक्षणात् स्वतः ...
लक्षकशब्दव्यतिरेकेण लक्ष्यस्य वस्तुनः प्रतिभासमानत्वमेव ...
प्रयोजकम्, न प्रमाणगम्यत्वम्, केवलव्यतिरेकाभावादित्यर्थः॥...

न वा प्रमाणगम्यत्वाभावमात्रापराधतः।
दृष्टोऽस्ति लक्षणाभावो भासमानस्य वस्तुनः॥...

व्यतिरेकाभावमेव दर्शयति—न वेति॥ १२०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किञ्च वाक्यप्रमाणत्वानुपपत्तिर्हि लक्षणाम् ।
मुख्यार्थासम्भवे शब्दस्याक्षिपत्यत्र नाऽपरा ॥ १२१ ॥

यत्तूक्तम्—वाक्यस्थपदानामन्विताभिधानानुपपत्तिरेव कतिपयपदानां वाक्यार्थान्वयविरोधे सति लक्षणामाक्षिपति, सकलपदलक्षणोपादाने तु किं कस्य लक्षणामाक्षिपेदिति तत्राह—किञ्चेति। अयं भावः—नान्विताभिधानानुपपत्तिर्मुख्यार्थानुपपत्तौ शब्दस्य लक्षणामाक्षिपति, अपि तु वाक्यप्रमाणानुपपत्तिः । ततश्च वाक्यं विधिमुखेन यत्र कञ्चिदर्थमवबोधयेत्, तत्रान्विताभिधानमुखेनावबोधकत्वात् पदानामन्विताभिधानानुपपत्तिरेव लक्षणामाक्षिपेत् । यत्र त्वतदारोपनिवृत्तिमात्रमुखेन कञ्चिदर्थमवबोधयेत्, तत्र निवृत्तिमुखेनैव प्रामाण्यात् । तस्याश्च सकलपदलक्षणामन्तरेणानुपपत्तेः वाक्यप्रामाण्यमेवानुपपद्यमानं सकलपदलक्षणामाक्षिपतीति न विशेषं पश्याम इति ॥ १२१ ॥

तत्र सत्यादिशब्दा ये सत्यत्वादिमुखेन ते ।
लक्षयन्ति मृषाजाड्यदुःखवस्तुविरोधि यत् ॥ १२२ ॥

एतदेव वाक्यप्रामाण्याय व्यवस्थया निरूपयति—तत्रेत्यादिचतुर्भिः । तत्र सत्यज्ञानानन्दपदानि सत्यत्वादिसामान्याभिधानमुखेनानृतजाड्यदुःखविरोधिरूपं व्यक्तिविशेषं लक्षयन्तीत्यर्थः ॥ १२२ ॥

निःशेषभेदबाधेनानन्तमित्यादिका गिरः ।
तदेवैकरसं ब्रह्म लक्षयन्ति समञ्जसा ॥ १२३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निःशेषमिति । अनन्तमपूर्वमित्यादिशब्दास्तु निः... प्रतिषेधमुखेन तदेवैकरसं ब्रह्म लक्षयन्तीति न किञ्चिद् दोष... त्यर्थः ॥ १२३ ॥

तथा तत्त्वमसीत्यत्र तत्पदार्थे परोक्षता।
त्याज्या स्यात्त्वंपदार्थे तु संसारित्वादयोऽखिलाः॥...
उभयत्राद्वयं प्रत्यक्चिन्मात्रं ब्रह्म लक्ष्यते।
अतो नासम्भवः कश्चिदखण्डार्थावबोधने ॥...

तथेति । तथा तत्त्वमसि वाक्येऽपि तत्पदवाच्यगतपरो... परित्यागेन त्वंपदवाच्यगतसंसारित्वपरिच्छिन्नत्वांशपरित्यागेन ... प्रत्यक्चैतन्यमात्रमेव लक्ष्यते इति न काचिदनुपपत्तिरिति ... ॥ १२४—१२५ ॥

अखण्डैकरसब्रह्मपरसत्यादिवैदिकी ।
गीः प्रकृष्टप्रकाशादिवल्लक्षणपरत्वतः ॥ १२६ ॥

विमतं सत्यादिवाक्यमखण्डैकरसार्थपर्यवसायि भवि... बुभुत्सितार्थलक्षणवाक्यत्वात्, प्रकृष्टप्रकाशादिलौकिकवाक्य... मानं दर्शयति—अखण्डेति ॥ १२६ ॥

तथा तत्त्वमसीत्यादि सामानाधिकरण्यतः ।
अखण्डार्थपरं वाक्यं सोऽयमित्यादिवाक्यवत् ॥...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang...

तथा विमतं तत्त्वमसीति सामानाधिकरण्यमेकवस्तुनिष्ठं भवितुमर्हति, अकार्यकारणांशांशिविशिष्टस्वरूपे द्रव्यवाचिपदसामानाधिकरण्यत्वात्, सोऽयमित्यादिसामानाधिकरण्यवदित्यनुमानञ्च दर्शयति—तथेति । तथा चोभयत्राऽखण्डैकरसवस्तुपर्यवसानमन्तरेण वाक्यप्रामाण्यानुपपत्तिरुक्तेति भावः ॥ १२७ ॥

**तथाऽखण्डार्थनिष्ठं स्यात् सोऽयमित्यादिलौकिकम् ।**
**अबाधितप्रथाहेतुतया प्रामाण्यरूपतः ॥ १२८ ॥**

ननु 'सोऽयं देवदत्तः' इत्यस्य 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यस्य च लौकिकवाक्यस्य विशिष्टार्थपर्यवसायित्वाद् दृष्टान्तौ साध्यविकलावित्याशङ्क्याह—तथेति । 'सोऽयं देवदत्तः' इत्यादिवाक्यमखण्डैकरसार्थपर्यवसायि भवितुमर्हति, अन्यथा वाक्यस्य प्रामाण्यानुपपत्तेः, अबाधितप्रतीतिजनकत्वेन प्रामाण्याच्चेत्यर्थः । 'सोऽयं देवदत्तः' इत्यस्मिन् वाक्ये न तावद् देवदत्तस्वरूपमात्रं प्रतिपाद्यम्, तस्यैकेन पदेन लभ्यत्वात्, पदान्तरप्रयोगवैयर्थ्यात्, प्रत्यक्षादिसिद्धत्वाच्च न शब्दापेक्षा । न वा देवदत्तैक्यम्, तस्यापि प्रत्यक्षसिद्धत्वात् न शब्दापेक्षा, नाप्यनेकपदप्रयोगोपयोगः । नापि देवदत्तस्य कालद्वयसम्बन्धः, अवर्त्तमानकालसम्बन्धिन एव वर्त्तमानकालसम्बन्ध इति न सिद्ध्येत् । उभयकालसम्बन्धिन एकत्वे प्रमाणाभावात् । वाक्यस्य च देवदत्तकालद्वयसम्बन्धमात्रोपक्षयात् । न वा उभयकालविशिष्टयोरैक्यम्, वर्त्तमानावर्त्तमानकालयोरिव तद्विशिष्टयोरपि परस्परसम्बन्धानुपपत्तेः । एकस्य कालद्वयसम्बन्धनिश्चयव्यतिरेकेण उभयकालसम्बन्धिवस्त्वेकत्वनिश्चायकप्रमाणाभावात् । एकस्य पर्यायेण कालद्वयसम्बन्ध इति निश्चयो दुःसंपादः, तस्माद्विधिमुखेन वाक्यस्य कस्मिंश्चिदर्थे प्रामाण्यानुपपत्तेः । अबाधितप्रतीतिजनकत्वेन प्रामाण्याच्च कालद्वयनामधेयोपाधिसम्ब-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्धनिमित्तदेवदत्तगतानेकत्वभ्रान्तिनिवर्त्तनेन देवदत्तस्वरूपसमर्पक
प्रामाण्यं वक्तव्यम्। तथा च सति सोऽयमिति पदद्वयसामान
करण्येन उभयकालविशिष्टद्वयान्वयप्रतीतौ तदन्वयविरोधे च
वाक्यैकदेशविरुद्धांशद्वयपरित्यागेन उभयत्र वाक्यगताविरुद्धदेवदत्त
पमात्रे पदद्वयलक्षणावृत्तिराश्रयणीयेति मुख्यार्थानुपपत्तौ लक्षणा
श्रयणस्य न्याय्यत्वात्। न चोपाधिद्वयसम्बन्धकृतानेकत्वभ्रान्तिनि
नेन देवदत्तस्वरूपसमर्पणमेकेन पदेन लभ्यते, लक्षणानिमित्तत्वादु
यविनिर्मुक्तस्वरूपसमर्पणस्य, लक्षणायाश्च द्वयोः पदार्थयोः पर
यविरोधकृतत्वात्, अन्वयप्रतीतेश्च पदानां सामानाधिकरण्य
त्वात्, सामानाधिकरण्यस्य चाऽनेकपदगामित्वादिति तात्पर्यम्॥

**प्रकृष्टप्रकाशश्चन्द्र इत्यप्येकरसार्पकम्।**
**प्रश्नानुसारतस्तस्माद् दृष्टान्तोऽनुगुणो मतः॥**

'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादिवाक्येषु नाऽनैकान्तिकता
तस्याप्येकरसार्थपर्यवसानादित्याह—प्रकृष्टेति। प्रश्नोत्तर
क्यम्—अस्मिन् ज्योतिर्मण्डले कश्चन्द्रो नामेति कश्चित्
पृष्टः प्रतिवदति—प्रकृष्टप्रकाशश्चन्द्र इति। तत्र हि चन्द्र
पदिकाभिधेयमेव पृष्टम्, नापि तद्गुणाः, नापि तस्य गुण
ततश्च यावदेव हि पृष्टं तावदेव प्रतिवचनेनापि प्रतिपा
अन्यथान्यत्पृष्टमन्यदेव प्रतिपाद्यते इति प्रश्नप्रतिवचनयो
स्यात्, अतः प्रकृष्टप्रकाश इति प्रकर्षगुणप्रकाशत्वसामान्याभ्यां
सामान्यव्यक्तिभूतं चन्द्रद्रव्यमेव लक्ष्यते, प्रकर्षविशिष्ट
सामान्यविशिष्टस्य उभयविशिष्टस्य वा चन्द्रप्रातिपदिकाभि
पपत्तेः। अतोऽत्रापि पदद्वयलक्षणसमाश्रयणेन चन्द्रप्राति
भिधेयमात्रे वाक्यं पर्यवस्यतीति सिद्धमखण्डार्थविषयत्वम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

व्युपलक्षितदेवदत्तस्वरूपे चन्द्रप्रातिपदिकाभिधेये च गुणगुण्याद्यने-करसत्त्वं दृश्यते, तथापि तत्प्रमाणान्तरसिद्धं न शब्दप्रमाणपरिप्रापित-मिति वाक्यस्याखण्डार्थ एव पर्यवसानमिति सिद्धम्। तस्माद् दृष्टान्त उभयत्राऽनुगुणो मतो न साध्यविकल इति तात्पर्य्यार्थः ॥१२९॥

अर्थापत्त्यनुमानाभ्यां वस्तुबोधकसद्गिराम् ।
अखण्डैकरसे सिद्धा प्रतिष्ठा ब्रह्मवस्तुनि ॥१३०॥

तस्मादर्थापत्त्यनुमानाभ्यां वस्तुप्रतिपादकवेदान्तवाक्यानामखण्डैक-रसवस्तुपर्यवसानसिद्धिरित्याह—अर्थापत्तीति ॥ १३० ॥

निरस्तसर्वसामान्यविशेषादिकभावतः ।
यद्यप्यस्ति परब्रह्म ह्यवाङ्मनसगोचरम् ॥ १३१ ॥
तथापि सर्ववेदान्तप्रतिपाद्यतया परम् ।
तं त्वौपनिषदं श्रुत्या स्याद्वेदान्तप्रमाणकम् ॥१३२॥

एवमखण्डवाक्यार्थं निरूप्य सम्प्रति सत्यज्ञानादिशब्दैर्निर्विशेष-ब्रह्मप्रतिपत्तये लक्षणावृत्तिराश्रयणीयेति वक्तुमुपक्रमते—निरस्तेति। तत्र केचिदाचक्षते—शब्दः खलु कश्चिदर्थं प्रतिपादयन् मुख्यया वृत्त्या लक्षणया गौण्या वा प्रतिपादयेत्। मुख्या च द्वेधा—रूढिर्योगश्च। रूढिर्नाम—निखिलजनपदेष्वविप्रतिपन्नप्रयोगेन वा गवाद्याकृतिवाच-कत्वेन वा वृत्तिः। यथा अश्वादिशब्दानाम्, यथा वा गवादिशब्दा-नाम्। योगो नाम—शब्दस्यान्यत्र क्लृप्तावयवशक्तिद्वारेण कस्मिंश्चि-दर्थान्तरे वृत्तिः, यथा पङ्कजादिशब्दस्य सरसीरुहादौ वृत्तिः। तदु-भयमिह शब्दस्य ब्रह्मणि न सम्भवति, तस्य निरस्तसमस्तविशेषसामा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्यादिभावाभ्युपगमात् तत्र शब्दप्रवृत्तिनिमित्तानुपपत्तेः। लक्षणा नाम—शब्दस्य मुख्यार्थानुपपत्तौ वाच्यार्थसम्बन्धेऽर्थान्तरे वृत्तिः। सा च त्रिविधा—जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति। तत्र जहल्लक्षणा नाम—वाच्यपरित्यागेनार्थान्तरे वृत्तिः। यथा—गङ्गायां घोषः प्रतिवसतीत्यादौ गङ्गाशब्दस्य तीरे वृत्तिः। न तावदनया लक्षणया सत्यज्ञानानन्दात्मादिशब्दा ब्रह्मगोचरा भवेयुः, लक्ष्यस्य वस्तुनोऽनृतजडदुःखानामात्मत्वादिदोषप्रसङ्गात्; तीरस्येव गङ्गाशब्दलक्ष्यस्या-गङ्गात्वमिति। अजहल्लक्षणा नाम—स्वार्थोपादानेनार्थान्तरे वृत्तिः। यथा—शोणो धावतीत्यादौ शोणशब्दस्य शोणिमगुणविशिष्टे एवाश्वादिद्रव्ये वृत्तिः। न खलु सापि सत्यादिपदानां ब्रह्मणि भवितुमर्हति; अश्वस्येव शोणशब्दलक्ष्यस्य ब्रह्मणोऽपि सत्यादिगुणविशिष्टतया निर्विशेषत्वप्रतिज्ञाभङ्गप्रसङ्गात्। जहदजहल्लक्षणा नाम—वाच्यैकदेशं परित्यज्य शब्दस्य तदेकदेशोपादानेनार्थान्तरे वृत्तिः। यथा—सोऽयमिति पदयोः परोक्षापरोक्षकालविशिष्टवाचिनोः सामानाधिकरण्ये सति विशिष्टद्वयैक्यप्रतिपादनानुपपत्तौ विरोधिकालद्वयांशपरित्यागेन उभयत्र देवदत्तस्वरूपोपादानेनोभयकालोपलक्षितस्वरूपमात्रे वृत्तिः। सापीह वेदान्तानां ब्रह्मणि न सम्भवति, देवदत्त इव वस्त्वन्तरविशिष्टे ब्रह्मणि शब्दशक्तिग्रहाभ्युपगमे तद्वदेव तस्य स्वरूपेणापि प्रमाणान्तरगोचरत्वप्रसङ्गात्। नहि प्रमाणेन विशेष्यग्रहणमन्तरेण विशिष्टवस्तुप्रमाणगोचरतामाचरेत्, नहि सम्बन्धवस्तुनः प्रमाणदृष्टत्वमन्तरेण तत्र शब्दशक्तिग्रहणमवकल्पते। गौणी नाम—शब्दस्य मुख्यार्थगुणयोगादन्यत्र वृत्तिः। यथा—सिंहो देवदत्त इति। सिंहशब्दस्य मुख्यार्थः केसरादिमान् व्यक्तिविशेषस्तस्य क्रौर्यादिगुणयोगाद् देवदत्ते वृत्तिः। सा चेह न सम्भवति, ब्रह्मणो निर्गुणत्वाभ्युपगमात्। तस्मान्न निर्विशेषं ब्रह्म वेदान्तवाक्यपदसमन्वयः प्रतिपादयितुं शक्नोति। तत्र समाधानमाह—निरस्तेति। यद्यपि ब्रह्मणो निरस्तसमस्तसामान्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशेषादिभावेन शब्दप्रवृत्तिनिमित्ताभावात् "यतो वाचो निवर्त्तन्ते" (तै० २।४) "न चक्षुषा गृह्यते नापि वाचा" (मु० ३।१।८) इत्यादिशास्त्राच्च न शब्दवाच्यं ब्रह्म साक्षादभ्युपगम्यते, तथापि "वेदान्तविज्ञानसुनिश्चितार्थाः" (क० ३।२।६) "तन्त्वौपनिषदं पुरुषं पृच्छामि" (बृ० ३।९।२६) इत्यादिशास्त्राद् वेदान्तप्रमाणकं ब्रह्मेति निश्चिनुम इति द्वयोस्तात्पर्यार्थः ॥ १३१—१३२ ॥

तत्राज्ञाननिवृत्तिः स्यान्मानकृत्यं न चाऽपरम् ।
स्वयंप्रकाशचैतन्यतया सर्वावभासके ॥ १३३ ॥

तत्र वेदान्तप्रमाणकृत्यमाह—तत्रेति । तत्राऽद्वितीये ब्रह्मणि प्रमाणकृत्यमज्ञाननिवृत्तिरेव नानधिगतार्थाधिगतिः स्वयंप्रकाशचैतन्यतया सर्वार्थसिद्धिहेतुत्वाद् ब्रह्मण इत्यर्थः ॥ १३३ ॥

तत्र वेदान्तवाक्यानि स्ववाच्यांशं विहाय वै ।
लक्षयन्ति परं ब्रह्म तत्साक्षित्वेन कानिचित् ॥१३४॥

तस्मादुभयविधवचनपर्यालोचनया ब्रह्मणि शब्दः प्रवर्त्तते इति गम्यते । तत्र ये प्रपञ्चात्मनैव ब्रह्म समर्पयन्ति—यथा सर्वजगत्कारणत्वादिशब्दाः, यथा वा वैश्वानरादिशब्दास्ते स्ववाच्यभूतं प्रपञ्चं परित्यज्य तत्साक्षिमात्रभूतं शुद्धं ब्रह्म लक्षयन्तीत्याह—तत्रेति । ब्रह्मप्रतिपादकानेकवेदान्तवाक्येषु कानिचिद् वेदान्तवाक्यानीत्यन्वयः ॥ १३४ ॥

सत्यज्ञानादिशब्दा ये स्वार्थप्रक्षेपणेन ते ।
ब्रह्मात्मनि प्रवर्त्तन्तेऽजहल्लक्षणयाऽद्वये ॥ १३५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथाप्यनेकभावत्वं ब्रह्मणो न प्रसज्ज्यते ।
एकव्यक्तिपरत्वेन सत्यादीनां न वा क्षतिः ॥ १३६ ॥

सत्यज्ञानादिशब्दानां प्रवृत्तिरजहल्लक्षणयेत्याह—सत्येति। ये पुनः सत्यज्ञानानन्दात्मादिशब्दाः, ते स्वार्थप्रक्षेपेणैव ब्रह्मणि अजहल्लक्षणया प्रवर्त्तन्ते। तथापि न ब्रह्मणः सत्यज्ञानाद्यनेकस्वभावप्रसङ्गः; तेषामन्योन्यनियम्यनियामकभावेनैकव्यक्तिपर्यवसानात्। यथा सन् घटो द्रव्यमिति द्वयोरर्थः। ननु यदि परापरसामान्यभावेन सत्यादीनामेकव्यक्तिपर्यवसानम्, तर्हि मुख्यैवास्तु शब्दप्रवृत्तिः; कुतस्तत्र लक्षणावाचोयुक्तिरित्याशङ्क्याह—न वा क्षतिरिति। लक्षणायाः क्षतिर्नास्तीत्यर्थः। यद्वा, लक्षणाङ्गीकारे सत्यादीनां पदानां ब्रह्मणोऽनेकरसत्वक्षतिरित्यर्थः। सर्वे च सत्यादिशब्दाः स्वं स्वं प्रवृत्तिनिमित्तसामान्यमनाकृष्य व्यक्तिमात्रे वर्त्तन्ते इति लक्षणापरिभाषा। सन् घटो द्रव्यमित्यादिशब्दास्तु सामान्यापरित्यागेनैकव्यक्तिमात्रे वर्त्तन्ते इत्यपर्यवसानवृत्तयः। न च सत्यादिशब्दानां सामान्यपरित्यागेऽपि गङ्गादिशब्दवत् स्वार्थपरित्यागेन वृत्तिः, व्यक्तेरपरित्यागात्। नापि जहदजहल्लक्षणा, व्यक्तेरेकांशपरित्यागेन अंशान्तरोपादानात्मकत्वात् तस्याः। तस्मात् सत्यादिशब्दानामजहल्लक्षणयैव प्रवृत्तिरिति न ब्रह्मणः सत्यानन्दादिस्वभावविरोधः, नाप्यखण्डैकरसत्वहानिरिति भावः ॥ १३५—१३६ ॥

तत्त्वमस्ययमात्माहं ब्रह्मास्मीत्यादिका गिरः ।
प्रत्यग्ब्रह्मणि वर्त्तन्ते भागलक्षणयाऽद्वये ॥ १३७ ॥

ये च "तत्त्वमसि" (छा० ६।८।७) "अहं ब्रह्मास्मि" (बृ० १।४।१०) इत्यादयो ब्रह्मात्मैकत्वविषयास्ते तु जहदजहल्लक्षणा

र्त्तन्ते इत्याह—तत्त्वमसीति । अयमर्थः—तत्त्वमस्यादिवाक्येऽपि तत्त्वंपदयोः सामानाधिकरण्यात् तत्पदमशेषविकारानुगतमायोपाधिकब्रह्मणि मायावच्छेदतत्कृतपारोक्ष्यांशपरित्यागेन परमार्थस्वरूपमात्रमुपादाय अद्वितीयप्रत्यक्चैतन्ये वर्त्तते । त्वंपदमपि तत्पदसन्निधानादन्तःकरणावच्छेदतत्कृतसंसारित्वसद्वितीयांशपरित्यागेनापरोक्षचैतन्यस्वरूपमात्रमुपादाय प्रत्यगद्वितीये ब्रह्मणि पर्यवस्यति । न च देवदत्तस्य तत्त्वात् प्रमाणान्तरगम्यत्वम्, अपि तु जडत्वात् । ब्रह्मणस्तु स्वयंप्रकाशत्वात्तदनपेक्षेति वैषम्यमिति ॥ १३७ ॥

सर्वज्ञादिगिरो विश्वं स्ववाच्यांशं विहाय च ।
प्रकाशमात्रे वर्त्तन्ते न विच्छिन्ने चिदद्वये ॥ १३८ ॥

सर्वज्ञादिशब्दास्तावत् "एकधैवाऽनुद्रष्टव्यम्", (बृ० ४ । ४ । २०) "प्रज्ञानघन एव" ( बृ० ४ । ५ । १३ ) इत्यादिशब्दसन्निधानात् स्ववाच्यप्रपञ्चांशमुत्सृज्य अनवच्छिन्नचैतन्यप्रकाशमात्रे वर्त्तन्ते इत्याह—सर्वज्ञादीति ॥ १३८ ॥

अनन्तापारमित्याद्याः सर्वभेदनिषेधतः ।
जहल्लक्षणया विश्वाभावद्वारोपलब्धिदाः ॥ १३९ ॥

ये पुनरनन्तमपारमित्यादिशब्दा ब्रह्मणोऽशेषविशेषप्रतिषेधेन वर्त्तन्ते, ते प्रपञ्चाभावाभिधानमुखेन जहल्लक्षणया अद्वितीयनिरतिशयानन्दसत्यचैतन्यप्रकाशप्रत्यगेकरसे ब्रह्मणि पर्यवस्यन्तीत्याह—अनन्तेति ॥ १३९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्माद्वेदान्तवाक्यानां निरस्ताशेषविभ्रमे ।
प्रतिपादकता सिद्धा ब्रह्मण्यद्वैतवस्तुनि ॥१४०॥

तस्माद्वेदान्तानां निरस्तसमस्तविशेषब्रह्मप्रतिपादकत्वे न किञ्चिदनुपपन्नमिति फलितमुपसंहरति—तस्मादिति ॥ १४० ॥

अतो वेदान्तवाक्योत्थापरोक्षज्ञानमेव हि ।
सकार्याज्ञानमध्यस्तं बाधते न परोक्षधीः ॥ १४१ ॥

एवं शब्दवृत्तिं निरूप्येदानीं शब्द एव ब्रह्मसाक्षात्कारे कारणं नान्यदित्युपपादयितुमुपक्रमते—अत इति । यस्माद्वेदान्ता निरस्तसमस्तविशेषब्रह्मप्रतिपादका अतो हेतोर्वेदान्तवाक्योत्थं यद्ब्रह्मात्मविषयं ज्ञानं तदपरोक्षमेव, हीति विद्वज्जनप्रसिद्धम्, सकार्याज्ञानमपरोक्षतयाऽध्यस्तं बाधते, न परोक्षज्ञानमित्यर्थः ॥ १४१ ॥

अपरोक्षभ्रमस्यास्य बाधिकाऽस्त्यपरोक्षधीः ।
कारणं तत्र वेदान्तवाक्यमेव न चाऽपरम् ॥१४२॥

अपरोक्षभ्रमस्य बाधकमप्यपरोक्षमेव ज्ञानं तदेव वेदान्तप्रमाणेन जन्यत इत्याह—अपरोक्षेति ॥ १४२ ॥

नन्वत्र श्रवणादीनामभ्यासोद्भूतशाब्दधीः ।
तदुत्थभावनायुक्तं करणं मन इष्यते ॥ १४३ ॥

वेदान्त एव ब्रह्मसाक्षात्कारे करणमित्युक्तमसहमानः स्वयूथ्यः शङ्कते—नन्विति। श्रवणादीनामभ्यासेनोद्भूता या शाब्दधीः तदुत्था दृ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रादुर्भूता या भावना तया युक्तं तत्सचिवं मनोऽन्तःकरणमेव करण-मिष्यते इत्यर्थः ॥ १४३ ॥

न चैवं भावनाधीनसाक्षात्कारस्य कामिनः ।
अप्रामाण्यं गतासुस्त्रीसाक्षात्कारवदित्यपि ॥ १४४ ॥

ननु भावनाधीनसाक्षात्कारस्य कामिनो विरहिणो मृतस्त्रीसाक्षा-त्कारस्येवाप्रामाण्यमित्याशङ्क्य निराचष्टे—न चैवमिति ॥ १४४ ॥

शब्दप्रमाणमूलत्वाद् विश्वासात्तत्प्रमाणता ।
मनोतीतत्ववादिन्याः श्रुतेर्नापि विरोधतः ॥ १४५ ॥

न चेति प्रतिज्ञायां हेतुमाह—शब्दप्रमाणेति । न च "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" ( तै० २ । ४ ) इति श्रुतिविरोधः शङ्क्य इत्याह—मनोतीतत्वेति ॥ १४५ ॥

असंस्कृतमनस्तद्वच्छब्दा ये लौकिकाः स्मृताः ।
तदग्राह्यतया वेदे तन्निषेध उदीरितः ॥ १४६ ॥

तत्रोपपत्तिमाह—असंस्कृतेति । तदग्राह्यतया असंस्कृतमनो-लौकिकशब्दाग्राह्यतया तयोर्निषेधः "यतो वाचो" ( तै० २ । ४ ) इति श्रुतावभिहित इत्यर्थः ॥ १४६ ॥

न संस्कृतमनो नापि वेदवाक्यं निषिद्ध्यते ।
अन्यथा न तवापि स्याज्ज्ञानोत्पत्तिरिहागमात् ॥१४७॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतेर्व्यवस्थयैव प्रवृत्तिरिति वदन् विपक्षे बाधकमाह—न संक्षेतेति ॥ १४७ ॥

**न वा केवलशब्दात् स्यादपरोक्षमभावनात् ।**
**ब्रह्मज्ञानमिति प्राप्ते सम्यगत्राऽभिधीयते ॥ १४८ ॥**

"दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" (क० ३।१) "मनसैवेदमाप्तव्यम्" ( क० ३ । १० ) इत्यादिश्रुतिसिद्धं मनःकरणकं ब्रह्मसाक्षात्कारं वदन् न मनोनिरपेक्षशब्दादपरोक्षज्ञानमित्याह—न वेति । केवलशब्दाद् मनोनपेक्षादभावनाद् निदिध्यासनशून्याद् ब्रह्मज्ञानमपरोक्षं नैव स्यादिति योजना । इति प्राप्ते एवं पूर्वपक्षे प्राप्ते सम्यगुत्तरमत्राभिधीयते ॥ १४८ ॥

**श्रुतिमौलिगिरामेव तन्त्वौपनिषदश्रुतेः ।**
**करणत्वं न चान्यस्याऽस्त्यपरोक्षधियं प्रति ॥ १४९ ॥**

ब्रह्मसाक्षात्कारे श्रुतेः करणत्वे श्रौतलिङ्गमुदाहरति—श्रुतीति । "तन्त्वौपनिषदं पुरुषं पृच्छामि" ( बृ० ३ । ९ । २६ ) इति श्रुते श्रुतिमौलिगिरां वेदान्तवाक्यानामेव करणत्वमपरोक्षधियं ब्रह्मसाक्षात्कारं प्रति अस्तीत्यन्वयः । एवकारव्यावर्त्यमाह—न चान्यस्येति । त्वदुक्तान्तःकरणस्य साक्षात्कारकरणत्वं नास्ति "मनसैवेदम्" ( क० ३ । १० ) इत्यादिश्रुतौ तस्य सहकारितामात्रमेवोक्तमिति सन्तोष्टव्यमिति भावः ॥ १४९ ॥

**इतरागोचरत्वे सत्यात्मनः केवलश्रुतेः ।**
**विषयत्वे तत्सार्थक्यं वृथा नो चेद्विशेषणम् ॥ १५० ॥**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"तन्त्वौपनिषदं" ( बृ० ३ । ७ । २६ ) इत्यत्रात्मन औपनिषदत्व-विशेषणश्रवणात् तच्चेतराविषयत्वे सति तन्मात्रविषयत्वे समञ्जसम्, अन्यथा प्रमाणान्तराव्यावर्त्तकत्वे विशेषणवैयर्थ्यादित्याह—इत-रेति ॥ १५० ॥

सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत् ।
इत्यौपनिषदत्वस्य सार्थक्यं कथमन्यथा ॥ १५१ ॥

विशेषणस्य सार्थक्यप्रकारमाह—सम्भवेति ॥ १५१ ॥

लौकिकस्यापि वाक्यस्यापरोक्षज्ञानहेतुता ।
दशमस्त्वमसीत्यादेर्दृष्टात्तद्वच्छ्रुतेर्गिराम् ॥ १५२ ॥

ननु शब्दोऽपि न क्वचित्साक्षात्करणत्वेन क्लृप्तः, कथं तत्र करणम् ? इति तत्राह—लौकिकस्येति ॥ १५२ ॥

स्वप्रमेयानुसारित्वस्वभावो हि प्रमाणगः ।
नित्यापरोक्षरूपत्वं तत्प्रमेयस्य चाऽऽत्मनः ॥ १५३ ॥

नन्वेवं शब्दस्वभावविरोधः स्यादिति तत्राह—स्वप्रमेयेति । प्रमा-णगः प्रमाणनिष्ठः । तत्प्रमेयस्य वेदान्तशब्दरूपप्रमाणगोचरस्य ब्रह्मा-त्मन इत्यर्थः ॥ १५३ ॥

साक्षाद्ब्रह्मापरोक्षं यद् यश्च सर्वान्तरो विभुः ।
इत्यात्मनोऽपरोक्षत्वं श्रुतं वेदान्तगीर्षु तत् ॥ १५४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न च ज्ञानगतो धर्मोऽपरोक्षत्वम्, "यत्साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः" (बृ० ३ । ४ । १) इत्यात्मनोऽप्यपरोक्षत्वश्रवणादित्याह—साक्षादिति ॥ १५४ ॥

मतं प्रमात्रभिन्नत्वमपरोक्षत्वमक्षगे ।
तच्च पर्य्यवसन्नं स्यात् प्रत्यगात्मनि चिद्घने ॥ १५५ ॥

किं तदपरोक्षत्वमिति तत्राह—मतमिति । वस्तुतः प्रमात्रव्यवहितत्वमपरोक्षत्वम् । अक्षगे इन्द्रियगोचरे । तच्चापरोक्षत्वं चिद्घने स्वप्रकाशे प्रत्यगात्मनि पर्यवसन्नमिति योजना ॥ १५५ ॥

यावद् यावत्प्रमातुः स्याद्विप्रकर्षोऽपि वस्तुनः ।
तावत्तावत्परोक्षत्वोत्कर्षो दृष्टः पदार्थगः ॥ १५६ ॥

प्रमातर्येवाव्यवहितत्वस्य पर्यवसाने हेतुमाह—यावदिति । वस्तुनो वह्न्यादेः । तथा च जडवर्गे परोक्षत्वमेव मुख्यं गौणं त्वपरोक्षत्वमात्मसन्निधानकृतमिति भावः ॥ १५६ ॥

तथा चात्रापरोक्षैकस्वभावे प्रत्यगात्मनि ।
परोक्षं जनयन् वेदो जनयेद्भ्रान्तिमेव सः ॥ १५७ ॥

ततः किमित्यत आह—तथा चेति । प्रमाणं भवन् वेदो विपरीतं कथमनुभावयेत् ? अनुभावयन् वा कथं प्रमाणं स्यादित्यर्थः ॥ १५७ ॥

अपरोक्षस्वभावस्य परोक्षत्वेन बोधनात् ।
कथं वेदः प्रमाणं स्याद् यथार्थज्ञानसाधनम् ॥ १५८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इममेवार्थं व्यतिरेकेणाऽऽह—अपरोक्षेति ॥ १५८ ॥

मोक्षसाधनभूतस्य साक्षात्कारस्य चात्मनः ।
मनोजन्यतया न स्यात् प्रामाण्यमपि सम्मतम् ॥१५६॥

एवं स्वपक्षं साधयित्वा मनःकरणवादिनो निराकरणे हेत्वन्तरमाह—मोक्षेति ॥ १५९ ॥

प्रमाव्याप्तं प्रमाणं हि सङ्गिरन्ते च तार्किकाः ।
मनश्च न प्रमाव्याप्तं ज्ञानमात्रैककारणम् ॥१६०॥

हेतुं विशदयति—प्रमेति ॥ १६० ॥

व्यभिचारि मनस्तस्मात् करणत्वं कथं भजेत् ।
साक्षात्कारे परैक्यस्य साक्षात्कारोऽन्यथा भ्रमः॥१६१॥

ज्ञानमात्रैककारणमित्युक्तम्, ततः किमनिष्टं स्यात् इति तत्राह—व्यभिचारीति। व्यभिचरित्वाद् मनसो नात्मसाक्षात्कारे करणत्वम्। तस्य करणत्वे तज्जन्यसाक्षात्कारो भ्रमः स्यादित्यर्थः ॥ १६१ ॥

सकार्याज्ञानविध्वस्तिरात्मसाक्षात्कृतेर्भवेत् ।
तथात्वं न मनोजन्ये भ्रमोऽज्ञानं न बाधते ॥१६२॥

न चैतद् युज्यते, ब्रह्मसाक्षात्कारस्य सविलासाज्ञाननिवर्तकत्वात्; यदि भ्रमोऽज्ञानं निवर्तयति, अतिप्रसङ्गादित्याशयेनाह—सकार्येति। तथात्वं सकार्याज्ञाननिवर्त्तकत्वमित्यर्थः ॥ १६२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अपरोक्षतयाऽऽत्मानं यदि वेदो न बोधयेत् ।
तथात्वेन कथं तर्हि मनोऽप्येनं प्रबोधयेत् ॥१६३॥

ननु मनोमात्रं वेदात्मसाक्षात्कारं जनयेत्, तदा स्यादेव तत्र भ्रमत्वशङ्का । न चैवं तत्त्वमस्यादिवाक्यजन्यज्ञानसन्ततिसहायं हि मनस्तत्साक्षात्कारे करणम् । तथा च मूलप्रमाणशब्दसंवादादप्रामाण्यशङ्कानिरासः । तदुक्तं कल्पतरौ—"वेदान्तवाक्यजज्ञानभावनाजापरोक्षधीः मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते" इत्याशङ्क्य संवादार्थं यथा ज्ञानं मनसा जन्यते, तथैव चेच्छब्देन जन्यते तदोभयोरन्यतराप्रामाण्यम्; अनधिगतार्थत्वाभावात् । अथैतद्दोषपरिहाराय शब्दः परोक्षतयाऽवबोधयति । तथा सति तद्विसंवादादप्रामाण्यमित्यभिप्रेत्याह—अपरोक्षतयेति ॥ १६३ ॥

वेदमूलं मनो ब्रह्मापरोक्षज्ञानकारणम् ।
वाच्यं त्वया तदा वेदविरुद्धं बोधयेत् कथम् ॥१६४॥

एतदेव स्पष्टयति—वेदमूलमिति ॥ १६४ ॥

अपरोक्षं यदा वेदो बोधयत्यद्वयं परम् ।
तर्हि तन्मूलमनसाऽप्यद्वयं बोध्यते तथा ॥१६५॥
तथा चेत्तर्हि वेदान्तवाक्येनैवापरोक्षधीः ।
जायते करणं तच्च न मनोजापरोक्षधीः ॥१६६॥

वेदो यद्यपरोक्षतया बोधयति तन्मूलमनसापि तथा बोध्यते, तदा वेदस्यैव साक्षात्कारे करणत्वम्, न मनस इत्याह—अपरोक्षमिताद्विभ्याम् ॥ १६५—१६६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किञ्च वाङ्मनसातीतत्वागमान्तो विरुद्ध्यते ।
न मुख्ये बोधकाभावात् तदन्यविषये वचः ॥ १६७ ॥

आत्मसाक्षात्कारस्य मनःकरणकत्वे श्रुतिविरोधश्च दुर्वार इत्याह—किञ्चेति । नन्वेतद्वाक्यमसंस्कृतमनोविषयमित्युक्तमिति नेत्याह—न मुख्ये इति । लक्षणाप्रसक्तेः । सा च मुख्ये सति बाधके युक्ता, नान्यथेत्यर्थः ॥ १६७ ॥

न वेदविषयत्वेऽपि समानो दोष इष्यते ।
यतो लक्षणया वेदवाक्यैरात्माऽवबोध्यते ॥ १६८ ॥

नन्वागमकरणत्वेऽपि तस्य समानो दोष इति तत्राह—नेति । अयमर्थः—"वेदान्तविज्ञानसुनिश्चितार्थाः" ( क० ३ । २ । ६ ) इत्यादिश्रुतिप्रमाणाद् वेदान्तकरणत्वं ब्रह्मसाक्षात्कारस्य प्रतीयते । "यतो वाचो निवर्त्तन्ते" ( तै० २ । ४ ) इति वाक्याच्च तन्निषेधः प्रतीयते । न चान्यतराप्रामाण्यम्, उभयोरपि वेदवाक्यत्वाविशेषात् । विरुद्धत्वाच्च तयोः समुच्चयः । तस्माद् व्यवस्थया परिहर्त्तव्यो विरोधः । निषेधवाक्यमभिधावृत्त्या शब्दप्रवृत्तिं तत्र निषेधति । वेदान्तगम्यत्वानुवादवाक्यानि लक्षणया तत्र शब्दप्रवृत्तिमनुजानन्तीति न कोपि विरोधः इति ॥ १६८ ॥

विरुद्धयोरभेदस्य संसारिपरमात्मनोः ।
प्रत्यक्षादिप्रमाणेन बाधितत्वात् तथेष्यते ॥ १६९ ॥

ननु तत्त्वमस्यादिवाक्ये लक्षणा न युक्ता, भागत्यागलक्षणया एकदेशपरिग्रहे श्रुतार्थपरित्यागप्रसङ्गादिति तत्राह—विरुद्धयोरिति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सामानाधिकरण्यबलात् प्राप्तोऽपि पदार्थयोरभेदो विरुद्धत्वादयोग्य इति तदनुपपत्त्या "अर्द्धं त्यजति पण्डितः" इति न्यायेन विरुद्धांशत्यागेनाविरुद्धमंशं स्वप्रामाण्याय लक्षयति तत्त्वमस्यादिवाक्यम्। तस्माल्लक्षणेष्यते स्वीक्रियते, न तत्र कोऽपि दोष इति तात्पर्यार्थः ॥१६९॥

मानान्तरस्य वेदान्तैर्बाधनं निष्प्रयोजनम् ।
नेष्यतेऽतोऽन्यमानेनाविरोधाथाऽत्र लक्षणा ॥१७०॥

ननु 'पूर्वापरविरोधे पूर्वदौर्बल्यं प्रकृतिवत्' इति न्यायेन ब्रह्मात्मनोरैक्यसिद्धये च सर्वभेदग्राहिमानबाधस्यावश्यवक्तव्यत्वाच्च संसार्यसंसारिभेदग्राहि मानं बाधित्वैव तयोरैक्यं वेदो बोधयतु, ततः कथं मुख्यार्थानुपपत्त्या लक्षणेति तत्राह—मानान्तरस्येति । मानान्तरविरोधाच मुख्यार्थानुपपत्तिमालोच्य वेदो लक्षणया प्रत्यग्ब्रह्मणोरैक्यमवबोधयतीति सिद्धा तत्र लक्षणेत्यर्थः ॥ १७० ॥

मुख्यार्थानुपपत्तिश्च लक्षणाबीजमिष्यते ।
तथास्त्यत्र ततोऽपीयं लक्षणा तत्त्वविन्मता ॥ १७१ ॥

लक्षणाया बीजसत्त्वादपि नानुपपत्तिरित्याह—मुख्यार्थेति ॥१७१॥

मानान्तराविरोधेन विषयो यत्र सिद्ध्यति ।
वृत्त्यन्तरेण तत्रान्यबाधनं नेष्यते बुधैः ॥ १७२ ॥

परिपूर्णब्रह्मात्मैकरसाखण्डार्थसिद्धये यत् सर्वमानान्तरस्य बाधनं तदनन्यगतिकतया । यत्र तु कथमपि प्रमाणान्तराबाधेन स्वार्थसिद्धिर्भवति, तत्र तद्बाधो नोचित इत्याशयेनाह—मानान्तरेति ॥ १७२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न चासङ्गस्य सम्बन्धासम्भवो लक्ष्यवस्तुनः ।
वाच्यार्थेनेति वक्तव्यं लक्षणानुपपत्तिकृत् ॥ १७३ ॥

ननु शुद्धस्य सर्वासङ्गिनो ब्रह्मात्मैक्यस्य लक्ष्यत्वप्रयोगरूपाभावान्न तत्र लक्षणेत्याशङ्क्य निराचष्टे—न चेति ॥ १७३ ॥

स्वतोऽसङ्गस्य चिद्धातो बुद्ध्यविद्याद्युपाधिभिः ।
संसर्गस्याप्यविद्याध्यारोपितस्यास्ति सम्भवः ॥ १७४ ॥

वाक्ये लक्षणामधिकारी कल्पयति । तत्कल्पनञ्च न तावत्साक्षात्कारोत्तरम्, वैयर्थ्याद् अन्योन्याश्रयापत्तेश्च; साक्षात्कारोत्तरं कल्पना कल्पनोत्तरञ्च साक्षात्कार इति लक्षणाया योग्यतासम्पादकत्वेन वाक्यार्थप्रतीतौ कारणत्वात् । तस्मात् तत्त्वसाक्षात्कारात् प्राग् लक्षणाकल्पनं वक्तव्यम् । तथा च वाच्यसंसर्गः सुसम्पाद इति । न चेति प्रतिज्ञायां हेतुमाह—स्वत इति । अयमर्थः—अविद्योपाधिकं चैतन्यं तत्पदवाच्यम्, अन्तःकरणोपाधिकञ्च त्वंपदवाच्यम्, तयोर्लक्ष्यस्य प्रत्यग्ब्रह्मैक्यस्य तत्त्वसाक्षात्कारात् प्रागवस्थायामविद्याया विरोध्यभावेन सत्त्वात् तत्कल्पितः सम्बन्धोऽपि वर्त्तते इति तदुपाधिके कथं न लक्षणेति ॥ १७४ ॥

यथोलूकैः समध्यस्ततमःसंसर्गसम्भवः ।
भानौ तथाऽस्त्यसङ्गेऽपि संसर्गः कल्पितो जडैः॥१७५॥

कल्पितेनाप्यज्ञानादिना संसर्गसम्भवे न लक्षणानुपपत्तिरिति दृष्टान्तमाह—यथेति ॥ १७५ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न वा लक्ष्यपदार्थें स्यान्मूकता यत आगमे ।
विज्ञानं ब्रह्म चेत्यादौ तदर्थप्रतिपादनात् ॥ १७६ ॥

ननु पदाल्लक्ष्यस्यानुपस्थितौ मूकता स्यात्, लक्ष्येऽनुपस्थितौ तत्रापि लक्षणा। तथा चानवस्था स्यादिति तत्राह—न वेति। तत्र हेतुमाह—विज्ञानमिति। तत्राऽऽनन्दादीनां ब्रह्मणि प्रवृत्तिप्रकारः पूर्वमेव प्रदर्शित इति भावः ॥ १७६ ॥

तत्रापि लक्षणाभावाद् नानवस्थादिदूषणम् ।
सत्यादिकपदादेव लक्ष्योपस्थितिरिष्यते ॥ १७७ ॥

सत्यादिपदादेव लक्ष्योपस्थितिरिति तत्र लक्षणाभावात् नानवस्थेत्याह—तत्रापीति ॥ १७७ ॥

न वा सत्यत्वज्ञानत्ववतः सत्याद्युपस्थितौ ।
कथं निर्धर्मलक्ष्यार्थसिद्धिरित्यपि तर्क्यताम् ॥ १७८ ॥

नन्वेवं सत्यत्वज्ञानत्वादिमति वस्तुनि सत्यादिशब्दप्रवृत्तिः[स्या!] न लक्ष्यं शुद्धं ब्रह्मात्मैक्यं प्रतीयेतेति नेत्याह—न वेति। सत्यत्वज्ञानत्वादिमतो वस्तुनः सत्याद्युपस्थितौ सत्यादिशब्देभ्यः उपस्थितौ सत्यां कथं निर्धर्मकस्य लक्ष्यपदार्थस्य सिद्धिरित्यपि न तर्क्यतामिति योजना ॥ १७८ ॥

अनेकोपाधिसम्बन्धव्यक्तिभिन्नं न चेष्यते ।
सामान्यमपि व्यक्त्यैव सिद्ध्यत्यनुगता मतिः ॥१७९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न वेति प्रतिज्ञायां हेतुमाह—अनेकेति। अनेकेषूपाधिषु ज्ञानत्वव्यक्तित्वेन स्वीकृतेषु सम्बन्धानुगता या व्यक्तिर्व्यज्यतेऽनयेति व्यक्तिश्चैतन्यं तद्भिन्नं सामान्यमपि न चेष्यते, निष्प्रयोजनत्वादित्यर्थः। जातेर्निष्प्रयोजनत्वमुपपादयति—व्यक्त्यैवेति। सामान्यं हि नानाव्यक्तिष्वनुगतं तास्वनुगतव्यवहारहेतुः स्वीक्रियते। तच्च ज्ञानत्वसामान्यं ब्रह्मणो न भिन्नम्, अनेकोपाधिषु सम्बद्धया व्यक्त्यैवोपाधिषु अनुगतव्यवहारसिद्धौ सत्यां सामान्यं निष्फलमित्यर्थः॥ १७९॥

**बिम्बवत् प्रतिबिम्बेषु सत्यज्ञानादिशब्दतः।**
**व्यक्त्यैव व्यवहारोऽस्ति सर्वत्रानुगतास्पदम्॥१८०॥**

अनेकोपाधिष्वनुगतव्यवहारहेतुस्तत्संबद्धा व्यक्तिरेवेति सदृष्टान्तमुपपादयति—बिम्बवदिति। यथा अनेकेषु जलपात्रेषु अनेके चन्द्रप्रतिबिम्बाः प्रतीयन्ते। तथाप्ययं 'चन्द्रोऽयं चन्द्रः' इत्यनुगतव्यवहारः, स च न चन्द्रत्वजातिकृतः; तत्र व्यञ्जकाभावेन चन्द्रत्वजात्यनभ्युपगमात्, उपाधीनाञ्चाननुगतत्वात्। सर्वोपाधिषु अनुगता या चन्द्रव्यक्तिस्तयैवानुगतव्यवहारः क्रियते, तद्वदन्तःकरणवृत्तिषु अभिव्यक्ता या चैतन्यात्मकब्रह्मव्यक्तिस्तयैव तत्रानुगतव्यवहारः सम्पाद्यते इति व्यर्थो ज्ञानत्वजातिस्वीकारः। एतेन सत्यत्वादिजातिरप्यपास्ता। तथा चोपाध्युपरक्ते सर्वशब्दप्रवृत्तिः, न तु शुद्धे इति भावः॥ १८०॥

**नह्युपाधेः प्रवेशोऽस्ति वाच्यकोटौ कथञ्चन।**
**तस्मात् सत्यादिकाः शब्दाः लक्ष्यार्थस्य समर्थकाः॥१८१॥**

ननु कथं तर्हि शुद्धचिन्मात्रलक्ष्यस्वरूपोपस्थितिरिति तत्राह—नहीति। उपाधेस्तटस्थतया अभिधेयकोटावप्रवेशेन शुद्धचित्सुखात्मै-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

करसस्य तत्त्वमसीति पदद्वयलक्ष्यस्य सत्यादिपदेभ्य उपस्थितिसम्भवात्। यथा धेनुपदं गोत्वोपहितव्यक्तिशक्तमपि गोत्वं तटस्थतया वाच्यकोटावप्रविष्टमिति धेनुशब्दाद् गोव्यक्तिविशेष एवोपतिष्ठते न गोत्वमिति। तद्वदत्रापीति तात्पर्यार्थः ॥ १८१ ॥

**नास्ति विप्रतिपत्तिर्वा त्वंपदार्थेऽपि साक्षिणि।**
**सर्वप्रमाणसिद्धिः स्यात् साक्षिणः स्वप्रकाशतः॥१८२॥**

ननु सत्यादिपदैस्तदर्थोपस्थितावपि त्वंपदलक्ष्योपस्थितिः कुतः? इति। न च सत्यादिपदादेव तदुपस्थितिः, ब्रह्मपदसामानाधिकरण्यात् तस्येति तत्राह—नास्तीति ॥ १८२ ॥

**न साक्षिव्यतिरेकेण ह्यविज्ञातस्य वस्तुनः।**
**अप्रमाविषयस्यास्ति सिद्धिरेव कथञ्चन ॥ १८३ ॥**

सर्वप्रमाणसिद्धिरित्युक्तं विवृणोति—नेति। अनधिगतार्थगन्तृ हि प्रमाणम्। तत्रार्थस्य प्रमाणविषयत्वेन सम्मतस्यानधिगतत्वं कुतः सिद्धम्? किं प्रमाणात्? उत भ्रमात्? उताहो स्वतः परतो वा? तत्राऽऽद्यं निरस्यति—अविज्ञातस्येति। अप्रमाविषयस्येति हेतुगर्भं विशेषणम्। प्रमाविषयत्वायोग्यस्येत्यर्थः ॥ १८३ ॥

**न स्यात् प्रमाणसिद्धत्वे तदज्ञाननिवर्त्तनम्।**
**तथात्वे वा प्रमाणस्य वैयर्थ्यं स्पष्टमेव हि ॥ १८४ ॥**

एतदेव स्पष्टयति—न स्यादिति। प्रमाणस्य विषयानिवर्तकत्वादित्यर्थः। तथास्त्विति वादिनं प्रति बाधकमाह—तथात्वे वेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रागुक्तातिशयो ह्यज्ञाननिवृत्तिः, सा चेत् न प्रमाणात्, किं तेन? इति स्पष्टं वैयर्थ्यं तस्येत्यर्थः ॥ १८४ ॥

नाप्यस्ति भ्रमसिद्धस्य मानगोचरताऽञ्जसा ।
नापि स्वतो जडत्वात् स्यात् तत्सिद्धिः साक्षिणस्ततः १८५

भ्रमादज्ञातत्वसिद्धिपक्षं पराचष्टे—भ्रमसिद्धस्येति । अज्ञातत्व-सिद्धेर्भ्रमत्वं विषयाज्ञातत्वबाधादेव वाच्यम् । तथा च तादृशि प्रमाणं कथं प्रवर्त्ततां विषयासत्त्वादित्यर्थः । नापि स्वतः, जडत्वात्; जडत्वञ्चा-नात्मत्वादित्यर्थः । परतश्चेत्, स एव तर्हि साक्षीति सिद्धः साक्षी-त्याह—तदिति ॥ १८५ ॥

तथा च मानवृत्तेः प्रागज्ञातत्वेन साक्षिणा ।
विषयीकुरुते मानं मेयं साधितमेव तत् ॥ १८६ ॥

फलितमाह—तथा चेति । प्रमाणप्रवृत्तेः प्राक् प्रमेयं साक्षिणा ज्ञातत्वेन साधितमेव तन्मानं विषयीकुरुते इति योजना ॥ १८६ ॥

अतो विप्रतिपत्तिर्न साक्षिण्यस्ति मनागपि ।
सर्वस्य साधनत्वेन तथोक्तं श्रीसुरेश्वरैः ॥ १८७ ॥

अतः प्रमाणान्यथानुपपत्त्या सिद्धः साक्षी न विप्रतिपत्तिमर्हतीत्यु-पसंहरति—अत इति । एतस्य साम्प्रदायिकत्वमाह—तथेति ॥ १८७ ॥

प्रमाणमप्रमाणं वा प्रमाभासस्तथैव च ।
कुर्वन्त्येव प्रमां यत्र तदसम्भावना कुतः ॥ १८८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्वचनमेवाह—प्रमाणमिति। अत्र प्रमाणस्य साक्षिसाधकत्वमुक्तम्, तथा अप्रमाणं मिथ्याज्ञानम्, प्रमाभासः संशयज्ञानञ्च न प्रमाणात् सिद्ध्यति विरोधात् तदात्मकवृत्तेर्जडत्वात् न स्वप्रकाशता न प्रमात् तस्यैव मानस्य विचार्यमाणत्वात्। तस्मात् साक्षिणैव तयोः सिद्धिरित्यर्थः। तदसम्भावना साक्षिणोऽसम्भावना कुत इत्यर्थः॥ १८८॥

एकार्थवाचकत्वेऽपि पदयोस्तत्त्वमोर्द्वयोः।
वाक्यप्रमाणजं ज्ञानमज्ञानभ्रमबाधकम्॥ १८९॥

ननु तत्त्वमिति पदयोरेकार्थवाचकत्वं भिन्नार्थवाचकत्वं वा? अन्त्ये अद्वैतहानेरैक्यायोगात्, आद्ये एकपदवैयर्थ्यमित्याशङ्क्याह—एकार्थवाचकत्वेऽपीति। यद्यपि पदयोरेकार्थत्वमेव, तथापि पदद्वयं स्वीकर्त्तव्यम्। प्रमाणज्ञानं हि भेदभ्रमं निवर्त्तयति, न विषयतो मिथ्याज्ञानम्। तच्च ज्ञानं नैकस्मात् पदात् पदमात्रस्य प्रमाहेतुत्वाभावात्। ततो भेदभ्रमनिरासिज्ञानजननाय वाक्यत्वसम्पत्तये पदान्तरमपेक्षणीयमेवेत्यर्थः॥ १८९॥

न चैकपदवैयर्थ्यं तद्विना क्व विरोधधीः।
क्व वा लक्षणयाऽखण्डवाक्यार्थप्रतिपादनम्॥ १९०॥

इममेवार्थं स्पष्टयति—न चेति। तेन पदान्तरेण विना विरोधाभावेन लक्षणया अखण्डवाक्यार्थस्य प्रतिपादयितुमशक्यत्वादित्यर्थः॥ १९०॥

पदमात्रं प्रमाणं नो किन्तु वाक्ये प्रमाणता।
तत्सिद्धये द्वयोरेव सार्थक्यं तत्त्वविन्मतम्॥ १९१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदमात्रस्याप्रमाणत्वादपि पदद्वयसार्थक्यमित्याह—पदमात्रमिति ॥ १६१ ॥

प्रमाणज्ञानमेवात्र भेदभ्रमनिवर्त्तकम् ।
न वा विषयतो मिथ्याज्ञानं भेदभ्रमापहम् ॥ १६२ ॥

प्रमाणज्ञानस्यैव अज्ञानभ्रान्तिनिवर्त्तकत्वमित्याह—प्रमाणज्ञानमिति ॥ १६२ ॥

तच्च ज्ञानं न चैकस्मात् पदादुत्पद्यतेऽञ्जसा ।
पदमात्रस्य हेतुत्वं न प्रमां प्रति सम्भवेत् ॥ १६३ ॥

प्रमाणज्ञानञ्च नैकस्मात् पदादित्याह—तच्चेति ॥ १६३ ॥

ततो भेदभ्रमध्वंसितत्त्वधीप्रतिपत्तये ।
वाक्यत्वसिद्धयेऽवश्यं पदान्तरमपेक्ष्यते ॥ १६४ ॥

तत्सिद्धये पदान्तरमावश्यकमित्याह—तत इति ॥ १६४ ॥

न चैकार्थतयाऽप्यत्र तयोः पर्यायशब्दवत् ।
वाक्यत्वानुपपत्तिः स्यादिति शङ्क्यं कथञ्चन ॥ १६५ ॥

एकार्थत्वं पर्य्यायशब्दवत् वाक्यत्वानुपपत्तिरिति पक्षं निषेधति—न चेति ॥ १६५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्मात्तयोः प्रवृत्तेर्हि निमित्तं भिद्यते द्वयोः ।
तत्त्वमोः पदयोः प्रत्यग्ब्रह्मैक्यपरयोः श्रुतेः ॥ १९६ ॥

तत्र हेतुमाह—यस्मादिति ॥ १९६ ॥

त्वंपदे भोक्तृतादीनां स्यात् प्रवृत्तिनिमित्तता ।
तत्पदे सर्ववित्त्वादेर्नातः पर्यायता तयोः ॥ १९७ ॥

प्रवृत्तिनिमित्तभेदमाह—त्वमिति ॥ १९७ ॥

न चानुभावकत्वं वा पदमात्रस्य सम्भवेत् ।
पदमप्यधिकाभावात् स्मारकान्न विशिष्यते ॥ १९८ ॥

ननु पदद्वयप्रयोगो न वाच्योपस्थितये, तस्य निष्प्रयोजनत्वात्; किन्तु लक्ष्योपस्थितये। सा चेदेकपदात् सिद्धा, किं पदान्तरेण। पदस्य अनुभावकत्वात् विषयाबाधाच्च प्रामाण्योपपत्तेरित्यभिसन्धिं निरस्यति—न चेति । तत्र हेतुः—पदमिति । तथा चानुभावकत्वाभावात् स्मारकवस्तुवन्न पदस्य प्रामाण्यमित्यर्थः ॥ १९८ ॥

न वा लक्षणया तत्राखण्डार्थप्रतिपादनम् ।
पदमात्रे यतो नास्ति मुख्यार्थानुपपत्तिता ॥ १९९ ॥

लक्षणया अखण्डार्थसिद्धये पदान्तरमावश्यकमिति व्यतिरेकेणाह—न वेति ॥ १९९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नहि घोषनिवासस्य वाचकं पदमन्तरा ।
गङ्गापदं स्वसम्बन्धि तीरं लक्षयति स्वतः ॥ २०० ॥

मुख्यार्थानुपपत्त्यभावमाह—न हीति ॥ २०० ॥

तथा च तत्पदस्यैव त्वंपदस्यैव वा पुनः ।
प्रयोगे हि विशिष्टार्थ उपतिष्ठेत सर्वथा ॥ २०१ ॥
नाखण्डैकरसं वस्तु सिद्ध्येदिष्टं विपश्चिताम् ।
व्यर्था वेदे तदुक्तिः स्याद्विभ्रमध्वंसकारिणी ॥ २०२ ॥

तथा च नेष्टसिद्धिरित्याह—तथा चेति द्वाभ्याम्। तदुक्तिरखण्डार्थोक्तिर्विभ्रमध्वंसकारणत्वेन प्रसिद्धा त्वदुक्तिरीत्या व्यर्था स्यादित्यर्थः ॥ २०१—२०२ ॥

अतो लक्षणयाऽखण्डवाक्यार्थप्रतिपत्तये ।
पदान्तरप्रयोगोऽत्रापेक्षणीयो भ्रमापहः ॥ २०३ ॥

तस्माल्लक्षणयाऽखण्डार्थलाभाय पदान्तरप्रयोग इति न वैयर्थ्यमिति हेतुमाह—अत इति ॥ २०३ ॥

तस्मादखण्डवाक्यार्थसिद्धिरत्र निराकुला ।
निर्दुष्टवेदप्रामाण्यादेवेत्थं सर्वमङ्गलम् ॥ २०४ ॥

तस्माल्लक्षणया तत्त्वमस्यादिमहावाक्यं प्रत्यग्ब्रह्मणोरैक्यमखण्डैकरसं बोधयतीति वाक्ये न विरोध इत्याशयेनोपसंहरति—



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मादिति । तथा चाखण्डे ब्रह्मात्मैक्ये वेदान्तानां समन्वयः सिद्ध इत्यर्थः ॥ २०४ ॥

अखण्डप्रत्यगात्मैक्यबोधेन भववारिधेः ।
उद्धारो नान्यथातोऽयं बोधः सम्पाद्य उत्तमैः ॥२०५॥

अखण्डब्रह्मात्मैक्यसाक्षात्कारोऽवश्यं सम्पादनीयः सर्वानर्थनिवृत्त्युपलक्षितनिरतिशयानन्दाविर्भावसिद्धये पुरुषधौरेयैरित्यभिप्रेत्याह—अखण्डेति ॥ २०५ ॥

स मुकुन्दपदाम्भोजमकरन्दैकषट्पदैः ।
सुसम्पादोऽत आदृत्य सेव्यः श्रीपतिरेव हि ॥ २०६ ॥

"यस्य देवे परा भक्तिः" (श्वे० ६ । २३) "ददामि बुद्धियोगं तम्" (गी० १० । १० ) इत्यादिश्रुतिस्मृतिसिद्धभगवद्भक्तानामेवाखण्डब्रह्मात्मसाक्षात्कारः, अत एव भगवान् वासुदेवः सर्वप्रयत्नेन आराध्य इत्याह—स इति । सुसम्पादः सुखेनानायासेन सम्पादयितुं शक्यः स ब्रह्मैक्यावबोधः, अतः श्रीपतिरेव सदैवादृत्य सेव्यः । हीति श्रुतिस्मृतिपुराणेतिहाससर्वसज्जनप्रसिद्धिद्योतको निपातः । एवकाराद् न तत्सेवां विनाऽन्योपायः कोऽप्यस्तीति सूचितम् ॥ २०६ ॥

यत्कृपालेशमात्रेण लयमेति कुसंसृतिः ।
सुखमाविर्भवत्यन्तस्तं कृष्णं सर्वदाश्रये ॥ २०७ ॥

इति प्रत्यक्तत्त्वचिन्तामणौ एकादशं प्रकरणं सम्पूर्णम् ॥ ११ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं प्रकरणार्थं परिसमाप्य तमेव सर्वशास्त्रप्रतिपाद्यं भगवन्तं श्रीकृष्णं शरणीकरोति—यदिति । तथा च सर्वदुःखाभावोपलक्षित-निरतिशयानन्दाविर्भावो मोक्षो भगवद्भक्तानामनायासेन तत्प्रसादात् सिद्ध एवेति भावः ॥ २०७ ॥

आनन्दकन्दमीशानं शास्त्रयोनिमखण्डितम् ।
सर्ववेदान्तसिद्धान्तं वन्देऽहं नन्दनन्दनम् ॥ १ ॥

नन्दाङ्कणे नन्दभुजान्तराले
मन्दस्मितास्यं सुकुमारदेहम् ।
नन्दाङ्गनानन्दमनन्यसारं
नन्दार्पिताचं कलये मुकुन्दम् ॥ २ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषिसदानन्द-
विद्वत्कृतायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां स्वप्रभा-
भिधायां वेदस्यापौरुषेयत्वादिनिरूपणपुर-
स्सरमखण्डार्थपरत्वमयूखाभिधमेका-
दशं प्रकरणं समाप्तिमगमत् ॥११॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अथ द्वादशं प्रकरणम्

य एक एवेश्वरजीवशुद्धचि-
　　द्रूपेण भाति व्यवहारगोचरे ।
अखण्डतां स्वामजहन्निरञ्जन-
　　स्तमात्मदेवं यदुराजमाश्रये ॥ १ ॥

वेदान्ततत्त्वमनृतद्वयहेतुशून्यं
　　मुक्तस्वभावममलान्तरभावगम्यम् ।
आनन्दविग्रहमनन्तमपारमीशं
　　कृष्णं भजे दृशिमहं परिहृत्य दृश्यम् ॥ १ ॥

अतीतानन्तरप्रकरणे 'अखण्डप्रत्यगात्मैक्यबोधेन भववारिधेः। उद्धारः' इत्युक्तम्, तदेवोपपादयितुं प्रकरणान्तरमारभमाणः स्वतः सिद्धमद्वैततत्त्वं भगवन्तं सर्ववेदान्तरहस्यमनुसन्धत्ते—य इति। तमहमात्मदेवं स्वेष्टदैवतं यदुराजं यदुवंशमुकुटमणिं भगवन्तं श्रीकृष्णमाश्रये इति सम्बन्धः। तं कमित्याकाङ्क्षायामाह—य इति। यो वस्तुतो निरञ्जनो निरुपाधिरेक एव सन् अत एव स्वां स्वकीयाम् अखण्डतामेकरसस्वभावम् अजहदपरित्यजन्नेव व्यवहारगोचरे मायोपहितेश्वरचैतन्यरूपेणान्तःकरणोपहितजीवचैतन्यरूपेण मायातत्कार्यविनिर्मुक्तशुद्धचैतन्यरूपेण भाति प्रकाशते, तमाश्रये इति सम्बन्धः ॥ १ ॥

यतः समुद्भूतमिदं जगज्जडं
　　न यं स्पृशेच्छुद्धमनन्तमद्वयम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स एव सर्वान्तर आत्मरूपतो
न जीव एषोऽस्ति पृथक् परेशितुः ॥ २ ॥

ब्रह्मणोऽन्यो जीवपदार्थ इति ये मन्यन्ते, तान् पराकुर्वन् परब्रह्मैव तदज्ञानाज्जीवभावमापद्यते, न जीवो नाम ब्रह्मणोऽन्यः कश्चित् पदार्थ इत्याह—यत इति । यतो मायोपहितचैतन्यादिदं प्रत्यक्षादिभिरनुभूयमानं जगद्भूतभौतिकरूपं जडाज्ञानकार्य्यत्वाद् जडं सर्गकाले समुत्पन्नं तं परमात्मानं न स्पृशेत्, अत एव शुद्धं मायातत्कार्यकलङ्कशून्यम्, अत एव मायाकार्यदेशकालवस्तुपरिच्छेदशून्यत्वादनन्तम्, अत एवाद्वयं द्वैतशून्यं स एव परमात्मा सर्वान्तरः सर्वस्यान्तरात्मा प्राणधारणोपाधिना जीवोऽस्ति । एष जीवः परेशितुः परमेश्वरादात्मरूपतः सर्वात्मस्वरूपात् न पृथगस्तीति योजना ॥ २ ॥

ननूक्तिरेषा भवतामसङ्गता
यतोऽस्ति भेदः परमेशजीवयोः ।
विरुद्धधर्माश्रययोः क्व चैकता
क्व दृष्टमैक्यं तिमिरप्रकाशयोः ॥ ३ ॥

ननु जीवपरमेश्वरौ परस्परं भिन्नौ, विरुद्धस्वभावत्वात्, तमःप्रकाशवदिति शङ्कते—नन्विति ॥ ३ ॥

क्व चैष जीवः परतन्त्रचेष्टितः
शरीरयुग्माभिमतिर्विभिन्नधीः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्व च स्वतन्त्रो ह्यशरीर ईश्वर-
स्तयोः कथं स्यादभिदा विभिन्नयोः ॥ ४॥

क्व धर्म्मपापादिवशोऽल्पदेहगः
क्व नित्यशुद्धः परमेश्वरो विभुः ।
तयोर्न चैक्यं परमाणुगोत्रयो-
रिवान्तरं प्रत्युत गम्यतेऽनयोः ॥ ५ ॥

क्व भूतसंघातदृढाभिमानवान्
षडूर्मियुक्तो मितबोधशक्तिमान् ।
क्व कार्यहेत्वादिविवर्जितोऽतुलो
ह्यनन्तशक्तिः सकलज्ञ ईश्वरः ॥ ६ ॥

क्व बद्ध एषोऽखिलदुःखपञ्जरे
क्व नित्यमुक्तः स्वत एष ईश्वरः ।
तयोर्न चैक्यं रविविस्फुलिङ्गयो-
रिवास्ति भेदोऽखिललोकधीगतः ॥ ७ ॥

विरुद्धधर्मान्वितयोः परात्मनोः
कथंचिदैक्यं भवितुं न साम्प्रतम् ।
क्व वारिवह्न्योरभिदाऽञ्जसा भवेत्
क्व सम्भवेद्वा तिमिरप्रकाशयोः ॥ ८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विरुद्धस्वभावत्वादित्युक्तं हेतुं विवृण्वंस्तयोरभेदाभावं साधयति—स चेत्यादिपञ्चभिः । जीवो नाम कार्यकरणसङ्घाताभिमानी धर्माधर्मवान् परिच्छिन्नज्ञानशक्तिरत्यन्तपराधीनः । ईश्वरः पुनरकार्यकरणो धर्माद्यतीतो निरतिशयज्ञानशक्तिसम्पन्नोऽपरतन्त्रः । अतश्च विरुद्धस्वभावयोः कथमपि नाऽभेदो भवितुं युक्त इति प्रघट्टकार्थः । अक्षरार्थस्तु पञ्चानां पद्यानां निगदव्याख्यातः ॥ ४—८ ॥

अथापि बिम्बप्रतिबिम्बयोरिव
भिदावभासेऽपि तयोरुपाधितः ।
स्वभावतः शास्त्रत ईशजीवयो-
रभेद एवेति मतं न साम्प्रतम् ॥ ६ ॥

ननु बिम्बप्रतिबिम्बयोर्घटाकाशमहाकाशयोरिवौपाधिके विरुद्धस्वभावतयाऽवभासे सत्यपि तत्त्वमसीत्याद्येकत्वप्रतिपादकशास्त्राद् जीवपरयोः परमार्थत एकत्वमेव युक्तमित्याशङ्क्य निराचष्टे—अथेति ॥ ९ ॥

अमूर्त्तवस्त्वात्मनि ईशितुः कथं
सङ्गच्छते वा प्रतिबिम्बनं नयात् ।
न वाऽस्ति सर्वत्र गताद् महेश्वराद्
विलक्षणं वस्त्विह बिम्बयोग्यपि ॥ १० ॥

अथापि प्रतिबिम्बावच्छेदयोरसम्भवादिति नेति प्रतिज्ञायां हेतुमाह—अमूर्त्तेति । मूर्त्तद्रव्यस्य मूर्त्तान्तरे स्वच्छद्रव्ये प्रतिबिम्बभावो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्टः। ब्रह्मणः पुनरमूर्त्तत्वात् सर्वगतत्वादद्वितीयत्वाच्च न दर्पणस्थानीयं किञ्चिद् द्रव्यं प्रतिबिम्बयोग्यमस्तीत्यर्थः ॥ १० ॥

स्वच्छे पदार्थे प्रतिबिम्ब ईक्ष्यते
लोकेऽपि मूर्त्तस्य न चाप्यरूपिणः।
न चास्त्यमूर्त्तप्रतिबिम्बसम्भवः
क्व दृष्टमेतत् प्रतिबिम्बनं रसे ॥ ११ ॥

रूपवद् द्रव्यमतिस्वच्छतया रूपवतो द्रव्यान्तरस्य तद्विवेकेन गृह्यमाणस्यापि छायां गृह्णीयात्, चिदात्मा तु नीरूपो विषयी न विषयच्छायामुद्ग्रहीतुमर्हति। यथाहुः—"शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता" इत्यभिप्रेत्याह—स्वच्छ इति ॥ ११ ॥

न रूपगन्धाम्बरवायुबिम्बनं
दृष्टं स्वतो लोक इतोऽपि नाऽञ्जसा।
अमूर्त्तवस्तुप्रतिबिम्बकल्पना
ततो न जीवः प्रतिबिम्ब ईशितुः ॥१२॥

इममेवार्थं स्पष्टयति—न रूपेति ॥ १२ ॥

यथाम्बुसूर्यादिकमूर्त्तवस्तुनो
विदूरदेशः प्रतिबिम्बकारणम्।
यथाऽऽत्मनोऽन्यत् प्रतिबिम्बकारणं
विदूरदेशादि न युज्यते विभोः ॥ १३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आत्मव्यतिरिक्तद्रव्यदेशयोरभावादपि न प्रतिबिम्बकल्पनेत्याह—यथेति। सूर्यादिकमूर्त्तवस्तुनः सकाशाद् यथाऽन्यदम्बु जलं विदूरदेशश्च प्रतिबिम्बकारणं दृष्टम्, तथात्मनो विभोः परिपूर्णात् सकाशादन्यद्विदूरदेशादि प्रतिबिम्बकारणं न युज्यते इति योजना ॥ १३ ॥

अतो न कुत्रापि चिदद्वयात्मनः
कयापि युक्त्या प्रतिबिम्बयोग्यता।
यतो भवच्चाक्षुष एव वस्तुनि
सचाक्षुषस्य प्रतिबिम्बनं नयात् ॥ १४ ॥

तस्मादयुक्ता प्रतिबिम्बकल्पनेत्याह—अत इति ॥ १४ ॥

न चाप्यविद्या परमात्मनो विभो-
र्ग्रहीतुमर्हा प्रतिबिम्बनं कदा।
अवस्तुभावादनृता जडा हि सा
कथं ग्रहीतुं क्षमतेऽस्य बिम्बनम् ॥ १५ ॥

नन्ववस्त्वविद्यायां तत्प्रतिबिम्ब इति नेत्याह—न चेति ॥ १५ ॥

न चाम्बरस्येव जलादिवस्तुनि
प्रत्यक्चितः स्यात् प्रतिबिम्बनं हरेः।
जलादिवत् स्वच्छमिहापि वस्तु किं
यदस्ति हेतुः प्रतिबिम्बने विभोः ॥ १६ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वाकाशस्येव जलादौ सर्वगतस्यापि ब्रह्मणः प्रतिबिम्बनं युक्तमिति नेत्याह—न चेति। साभ्रनक्षत्रस्य आकाशस्य जले प्रतिबिम्बनं दृश्यते इति चेत्, न; जलादावन्तराकाशेन सह अभ्रनक्षत्रादीनामेव प्रतिबिम्बावभासनात्। अथ कथंचित् जानुमात्रजले दूरविशालाकाशदर्शनादाकाशस्य प्रतिबिम्बसम्भवः, तथापि न ब्रह्मणि युज्यते; जलादिवत् स्वच्छपरिच्छिन्नद्रव्यान्तराभावादिति तात्पर्यार्थः॥ १६॥

न चाप्यवच्छेद इहोचितो विभो-
रखण्डभावादपि केनचित् कदा।
अविद्ययाऽन्तःकरणेन वा हरे-
र्न चास्ति सम्बन्ध इतोऽप्यसङ्गिनः॥ १७॥

नन्वस्तु तर्हि केनचिद्ब्रह्मणोऽवच्छेद एवेति नेत्याह—न चेति। नन्वस्त्येव अविद्याऽन्तःकरणेन वा अवच्छेद इति नेत्याह—अविद्येति। असङ्गत्वादेव नावच्छेद इत्यर्थः॥ १७॥

अभावरूपा क्षमते कथं जडाऽ-
विद्याप्यवच्छेदमसङ्गवस्तुनः।
विधातुमन्तःकरणन्तु न क्षमं
क्व जीवभावात् प्रथमं तदुत्थितम्॥ १८॥

अविद्ययाऽन्तःकरणेन वा असङ्गस्य सम्बन्धो नास्तीत्युक्तमर्थं विवृणोति—अभावरूपेति। ज्ञानाभावमात्रत्वात् तस्या अविद्याया अतः सा अभावरूपा अवच्छेदं विधातुं कर्त्तुमसङ्गस्य न क्षमते। अन्तःकरणं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाथवच्छेदो दुःसम्पाद इत्याह—अन्तःकरणमिति । ब्रह्मणोऽसङ्गत्वात् संसार्युपाधित्वाच्च अन्तःकरणस्य कथमाकाशेन घटस्येव ब्रह्मणा तस्य सम्बन्धो भवेत् ? न वा जीवभावात् पूर्वमन्तःकरणस्य सत्त्वमपीत्याह—क्वेति ॥ १८ ॥

ततोऽन्य एवात्मन ईश्वराद्विभोः
स जीव आमोक्षमनन्तदुःखभाक् ।
प्रसिद्ध एवं नयतोऽनुभूतितो
विरुद्धमैक्यं कथमेतयोर्मतम् ॥ १९ ॥

तस्माद् ब्रह्मणो द्रव्यान्तरमेव जीव इत्याह—तत इति । ततस्तस्मादात्मनो व्यापकादीश्वराद्विभोः स जीवोऽन्य एवेति सम्बन्धः । अत एव आमोक्षं मोक्षपर्यन्तमनन्तदुःखात्मकसंसारभाक्त्वेन प्रसिद्ध एव नयतो युक्तितोऽनुभूतितः सर्वलोकानुभवादपि । कथमेतयोर्जीवेश्वरयोर्विरुद्धस्वभावयोस्त्वयैक्यं युक्त्यनुभवविरुद्धं मतं स्वीकृतमित्यर्थः ॥ १९ ॥

वेदेऽयमात्मा त्वमसीति चैक्यगी-
रुपासनार्थाऽस्तु न चैक्यतत्परा ।
उपासनादेव विमुक्तिरिष्यते
किमर्थमद्वैतधियोऽप्यपेक्षणम् ॥ २० ॥

ननु नास्माभिः स्वकपोलकल्पितमेतयोरैक्यम्, किन्तु "तत्त्वमसि" (छा० ६ । ८ । ७) "अयमात्मा" (बृ० २ । ५ । १९) "अहं ब्रह्मास्मि" (बृ० १ । ४ । १०) इति श्रुतिकदम्बेन प्रतिपादितमेव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वीकुर्म्मो वयम्, त्वया कथमैक्यप्रतिपादकश्रुतीनां व्यवस्था क्रियते! इति तत्राह—वेदे इति। "अयमात्मा" (बृ० २। ५। १९) "तत्त्वमसि" (छा० ६। ८। ७) इत्यादिका श्रुतिगीर्जीवब्रह्मणोर्वस्तुतो भिन्नयोरेवैकत्वोपासनार्था भविष्यति। तथा एकत्वप्रतिपादिकाः श्रुतयो भेदापवादाश्च जीवब्रह्मणोरेकत्वोपासनविधिशेषभूतार्थवादत्वेन सम्बध्यन्ते। विधीयमानादेव ब्रह्मोपासनात् संसारोपरमलक्षणो मोक्षोऽपि सम्भवतीति सर्वमुपपन्नम्। ततश्च जीवब्रह्मणोर्भेद एव सिद्ध इति। तात्पर्य्यार्थः॥ २०॥

अत्रोच्यते श्रौतमतं सदुत्तरं
न तावदन्यत्वमखण्डवस्तुनः।
प्रमाणतो जीवगतं प्रतीयते
तयोः प्रमाणाविषयत्वतो द्वयोः॥ २१॥

एवं प्राप्ते समाधानं प्रतिजानीते—अत्रोच्यते इति। न तावदन्यत्वं जीवस्य ब्रह्मणः सकाशात् प्रमाणेनावगन्तुं शक्यते, प्रमाणागोचरत्वात् तयोरित्यर्थः॥ २१॥

चिदात्मभावेन तयोः स्वरूपतो
न भेदसिद्धिः परमेशजीवयोः।
तयोरचित्त्वे तु न खादिवस्तुनो
विशेष ईषज्जडयोर्भवेत् सतोः॥ २२॥

एतदेवोपपादयति—चिदात्मेति। तयोश्चिद्रूपत्वे स्वरूपभेदानव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गमात् प्रमाणागोचरत्वादेव न तद्भेदः प्रमाणगम्यः । द्वयोरप्यचिद्रूपत्वे तु आकाशादिवदनात्मत्वानीश्वरत्वप्रसङ्ग इत्यर्थः ॥ २२ ॥

अतीव शुद्धः परमेश्वरः सदा
स प्रत्यगात्माऽखिलभेदवर्जितः ।
न स्वप्रकाशस्य भिदापि शक्यते
ग्रहीतुमन्यस्य ततोऽस्य वाऽन्यतः ॥ २३ ॥

प्रमाणेन तद्भेदग्रहाभावमुपपादयति—अतीवेति । अत्यन्तशुद्ध आत्मा निर्भेदोऽभ्युपेयः । एकस्यैव स्वयंप्रकाशत्वेऽपीतरस्य तस्माद्भेदो ग्रहीतुमशक्यः । अन्यतो जीवादस्य परमेश्वरस्य, ततः परमेश्वरादन्यस्य जीवस्य ग्रहीतुमशक्य इत्यर्थः ॥ २३ ॥

न गोचरस्याप्यमितादगोचराद्
भिदाग्रहः सम्भवतीतरस्य वा ।
न चक्षुषा रूपभिदाऽपि शब्दतो
ग्रहीतुमर्हा न च दृश्यते तथा ॥ २४ ॥

एतदेव द्रढयति—नेति । नह्येकस्य गोचरस्याप्यगोचरादमितादपरिच्छिन्नाद्भेदग्रहणं सम्भवति, अदृष्ट्या रूपस्य शब्दाद् भेदग्रहणादर्शनादित्यर्थः ॥ २४ ॥

ततो न भेदोऽप्यनयोः प्रमाणतो
ग्रहीतुमर्हः परमेशजीवयोः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न चान्यसंवेदनवन्महस्वतोः
केनापि मानेन तयोः स गृह्यते ॥ २५ ॥

ततः किमित्यत आह—तत इति। तस्मान्नानयोर्भेदः प्रमाणग्राह्यः; न च पुरुषान्तरसंवेदनवत् स्वयंप्रकाशयोः केनापि प्रमाणेन ग्रहणं सम्भवतीत्यर्थः ॥ २५ ॥

अथाभ्युपेयेत स जीव आगमा-
दौपाधिकस्तर्हि न वास्तवो भवेत्।
स जीवभावो निरुपाधिकं परं
ब्रह्मैव सिद्ध्येयदभिदा तयोः स्वतः ॥ २६ ॥

ननु जीव औपाधिकस्तस्य कथं ब्रह्मणा वास्तवेनैक्यम्? इति तत्राह—अथेति। तर्हि स जीवभावो वास्तवो न भवेत्। तथा च परं ब्रह्मैव निरुपाधिकं परमार्थवस्त्विति स्वत एव तयोर्घटाकाशमहाकाशयोरिवाभेद इत्यर्थः ॥ २६ ॥

ततोऽपि बिम्बप्रतिबिम्बयोरिव
भिदावभासः परमात्मजीवयोः।
अनाद्यविद्याप्रविजृम्भितो न सन्
स्वतस्त्वभेदः परमार्थ इष्यते ॥ २७ ॥

तस्माज्जीवब्रह्मणोर्भेदावभासो बिम्बप्रतिबिम्बयोरिव मायाविजृम्भित इत्याह—तत इति ॥ २७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथेह दृष्टं प्रतिविम्बनं जले
　　व्योम्नस्तथा ब्रह्मण इष्यते न किम् ।
अनाद्यनिर्वाच्यमखण्डचिद्घनेऽ-
　　ध्यस्तं तमस्तत्र स इष्यते भ्रमः ॥ २८ ॥

यत्तूक्तम्—ब्रह्मणो मूर्त्तत्वाद् वस्त्वन्तराभावाच्च प्रतिबिम्बनं न सम्भवतीति, तत्राह—यथेति । अमूर्त्तस्याप्याकाशस्य जले प्रतिबिम्बदर्शनान्नासम्भवः, न च वस्त्वन्तराभावः; परमार्थवस्तुत्वाभावेऽपि अविद्यावत्कार्याणामभावविलक्षणत्वेनाभ्युपगमादित्याह—अनादीति । तमोऽज्ञानम्, तत्राऽज्ञाने स भ्रमो विम्बप्रतिबिम्बभावलक्षण इष्यते इत्यर्थः ॥ २८ ॥

अतोऽस्त्यविद्याविषये चिदात्मन-
　　स्तत्कार्यबुद्धौ प्रतिविम्ब एव वा ।
स जीव ईशान्न विलक्षणः स्वतो-
　　मृषाभिदा नैक्यविरोधिनी भवेत् ॥ २९ ॥

तथा चाऽविद्याकल्पितानिर्वचनीयभेदेन न वास्तवैक्यस्य क्षतिरित्याह—अत इति । स प्रतिबिम्बरूपो जीव ईशादनवच्छिन्नचैतन्याद् विलक्षणो न भवतीत्यर्थः सुगममन्यत् ॥ २९ ॥

यथा जडेऽच्छे मुकुरेऽस्ति विम्बनं
　　तथाऽस्त्यविद्याविषये परात्मनः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आभासयोग्यत्वमपीष्यते जडेऽ-
ज्ञाने च तत्कार्यमनस्यपीशितुः ॥ ३० ॥

नन्वविद्याया अस्वच्छत्वात् तत्र कथं प्रतिविम्ब इष्यते ? इत्याश-
ङ्कायास्वच्छत्वस्यासिद्धत्वादित्याह—यथेति । अस्वच्छत्वं न तावदचेतन-
त्वम्, दर्पणादावपि तत्प्रसङ्गात् । चैतन्यावभासायोग्यत्वं चेत्, तद-
सिद्धम् । यत आभासयोग्यत्वमज्ञाने जडे तत्कार्ये मनस्यन्तःकरणे
चापीशितुर्ब्रह्मचैतन्यस्येष्यते स्वीक्रियते तस्माद् यथा स्वच्छे जडेऽपि
मुकुरादौ विम्बनं प्रतिविम्बनमस्ति लोकप्रसिद्धम्, तथा परमात्मनोऽव-
विद्याविषयेऽस्त्येव प्रतिविम्ब इति न काचिदनुपपत्तिरित्यर्थः ॥ ३० ॥

ततोऽस्त्यविद्याप्रतिविम्बितं परं-
ब्रह्मैव जीवो व्यवहारगोचरे ।
तद्विम्बभूतं परमेश्वरस्त्विति
स्वतश्चिदानन्दमखण्डमद्वयम् ॥ ३१ ॥
यदाऽपि बुद्धौ प्रतिविम्ब ईशितुः
स जीवभावोऽभ्युपगम्यते विभोः ।
तथापि शुद्धं परमात्मवस्तु स-
च्चिदद्वयं लक्ष्यत एतयोर्वपुः ॥ ३२ ॥

तस्मादविद्याप्रतिविम्बितमन्तःकरणप्रतिविम्बितं वा ब्रह्मचैतन्यं
जीवशब्दवाच्यं भवति, तदेव विम्बभूतमनवच्छिन्नचैतन्यमीश्वर इति
गीयते । तयोश्च जीवपरमेश्वरयोस्तत्त्वंपदवाच्ययोरवच्छिन्नान-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च्छिन्नरूपेण विरुद्धस्वभावयोरप्येकत्वोपदेशेन तदुभयानुगतप्रत्यगद्वितीयचिन्मात्रं लक्ष्यते। ततश्च संसारमूलाविद्यानिवृत्तिरिति सर्वमुपपन्नमित्याशयेनाह—तत इत्यादिद्वाभ्याम्॥ ३१—३२॥

मायाद्यवच्छेदमतेऽपि सम्भवे-
द्भावात्मकत्वात्तमसस्तयोर्भिदा।
मिथ्या तदुच्छेद इहात्मबोधत-
स्तदैक्यमाभाति विशुद्धमक्षरम्॥ ३३॥

यत्पुनरुक्तम्—ब्रह्मणो वस्त्वन्तराभावादज्ञानस्य च ज्ञानाभावमात्रत्वादन्तःकरणस्य संसारहेतुतया ब्रह्मसम्बन्धाभावादवच्छेदानुपपत्तिरिति, तत्राह—मायादीति। तमसो मायाविद्यादिशब्दवाच्यस्याज्ञानस्य संसारकारणभूतस्याभावविलक्षणत्वाद् भावात्मकत्वम्। नहि भावरूपस्य दृश्यप्रपञ्चस्य प्रकृतिभूतमज्ञानमभावरूपं भवितुमर्हति; घटादिष्वदर्शनात् "मायां तु प्रकृतिं विद्यात्" (श्वे० ४। १०) इति श्रुतेः। ततश्च मायाया अभावविलक्षणत्वात् तदवच्छेद उपपद्यते ब्रह्मणः। आदिपदेनान्तःकरणानामपि मायाकार्यत्वात् तद्द्वारेण ब्रह्मसम्बन्धाद्ब्रह्मचैतन्यस्यावच्छेदकत्वमवकल्पते। ततश्च मायावच्छेदेन परमेश्वरत्वव्यवहारोऽन्तःकरणावच्छेदेन जीवव्यवहार इति तयोर्मिथ्याऽनिर्वचनीया भिदा सम्भवेत्। इहाऽधिकारिशरीरे आत्मबोधतो ब्रह्मैक्यज्ञानेन तदुच्छेदे तयोर्मायातत्कार्ययोर्बाधे तदैक्यं तयोर्जीवपरमेश्वरयोरखण्डैक्यं विशुद्धं मायातत्कार्यसंसर्गशून्यमत एवाक्षरमपरिच्छिन्नात्मकं वास्तवं शास्त्रप्रतिपाद्यमाभाति—स्वयमप्रतिबन्धेन प्रकाशत इत्यर्थः॥ ३३॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथा तयोस्तत्त्वमसीतिवाक्यतोऽ-
प्यखण्डमैक्यं परमार्थतो वपुः।
न चास्त्यविद्याकृतभेदतः क्षतिः
स्वतोऽप्यभिन्नस्य चिदद्वयात्मनः ॥ ३४॥

इममेवार्थं स्पष्टयति—तथेति ॥ ३४ ॥

तदैक्यनिष्ठस्य जगन्निषेधिनः
शास्त्रस्य योगो विधिना न सम्भवेत्।
ततो न भेदः परमात्मजीवयो-
र्मनाक् श्रुतीनां परितोऽवलोकनात् ॥ ३५॥

तदेवं तत्त्वमस्यादिशास्त्रस्यैकात्मवस्तुमात्रपरत्वान्न विधिगन्धेनापि सम्बन्धः। तथैकत्वप्रतिपादिकाः श्रुतयो भेदापवादिकाश्चाऽद्वितीयवस्तुमात्रपर्यवसायिन्य इति न तासां विधिशेषार्थवादत्वसम्भव इत्याशङ्क्येनाह—तदैक्यनिष्ठस्येति। ब्रह्मैक्यपरस्य तत्त्वमस्यादिशास्त्रस्य "नेह नानाऽस्ति किञ्चन" इत्यादिद्वैतस्यापवादनिष्ठस्य च शास्त्रस्य विधिना विधिगन्धेनापि योगः सम्बन्धो न भवेदित्यर्थः। ततश्च श्रुतीनां परितोऽवलोकनादद्वैतवस्तुतात्पर्यग्राहकषड्विधलिङ्गपर्यालोचनाद् जीवब्रह्मणोरेकत्वमेव न भेदगन्धोऽप्यस्तीति निरवद्यमित्यर्थः ॥ ३५ ॥

स्वातन्त्र्यमेकस्य विपर्ययोऽन्यतो
मायाकृतो भेद इति प्रतीयते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न बन्धमोक्षौ परमार्थतस्तयो-
र्न वाऽस्य ताभ्यां विमलस्य लेपता ॥ ३६ ॥

आविद्यकधर्म्मैः परस्परविरुद्धस्वभावः, न तेन परमार्थवस्तुक्षति-
रित्याह—स्वातन्त्र्यमिति । एकस्य परमेश्वरस्य अन्यतो जीवस्येत्यर्थः ।
स्पष्टमन्यत् ॥ ३६ ॥

न यावदात्मावगतिः श्रुतेर्नयात्
स्वयाऽनुभूत्या भ्रमसंशयोज्झिता ।
न तावदैक्यं परमात्मजीवयोः
प्रतीयते कस्यचिदप्यसङ्गिनोः ॥ ३७ ॥

स्वरूपसाक्षात्कारपर्यन्तमेव विरुद्धधर्मभानमपीत्याह—न याव-
दिति ॥ ३७ ॥

अनाद्यविद्याकृतभेदभानत-
स्तयोरभेदानवभासनात्तथा ।
जीवस्य संसारगतिर्ह्यनर्थिका
प्रवाहरूपेण दृढेव भासते ॥ ३८ ॥

वास्तवैक्याभानात् कल्पितभेदावभासादेव च जीवस्य संसृतिदार्ढ्य-
मित्याह—अनादीति ॥ ३८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुणाश्च दोषाः परमात्मवस्तुनि
स्वयंप्रकाशे परिकल्पिता मृषा ।
अविद्यया संसृतिरद्वयात्मनि
न तेन काचित् क्षतिरात्मवस्तुनः ॥३९॥

सार्वज्ञ्यमौढ्यादीनां मायिकधर्माणां परस्परविरुद्धत्वेऽपि न वस्तुतो मनागपि तयोरैक्यस्य क्षतिरस्तीत्याह—गुणा इति । अनाद्यविद्यया तत्त्वज्ञानैकनिवर्त्यया परमात्मवस्तुनि तत्पदार्थे गुणाः सार्वज्ञ्यादयो दोषाश्च मौढ्यादयः स्वयंप्रकाशे प्रत्यगात्मनि त्वंपदार्थे मृषा अनिर्वचनीया एव परिकल्पिताः । संसृतिः कार्यकारणरूपेण नानाभेदमयी अद्वयात्मनि केवलाद्वैततत्त्वे मृषैव परिकल्पितेति वचनपरिणामेनान्वयः । तेन गुणदोषादिकल्पितत्वेन हेतुना शुद्धसच्चित्सुखात्मकस्यात्मवस्तुनो ब्रह्माद्वयस्य न काचित् क्षतिरस्तीति योजना । ३९ ॥

अज्ञानमित्यत्र नञाऽवबोध्यतेऽ-
प्यभाव एव प्रतियोगिनोऽस्तु सः ।
अभावमानेन तयोः प्रसिद्धितो
न भावरूपे खलु दृश्यते प्रमा ॥ ४० ॥

स्यादेतद्, यदि संसृतिकारणमविद्यादिशब्दवाच्यमज्ञानं भावरूपं भवेत् । ननु कथं न भावरूपम् ? प्रपञ्चकारणस्य भावरूपत्वमज्ञानस्य सिद्ध्येदिति चेत्, न; तथात्वे प्रमाणाभावात्, ज्ञानप्रागभावप्रध्वंसयोरज्ञानत्वप्रसिद्धेश्च । तयोरेव ज्ञानप्रतिषेधरूपतयाऽज्ञानशब्दवाच्यत्वोपपत्तेरभावप्रमाणसिद्धत्वाच्च तयोर्न तद्व्यतिरिक्तभावरूपाज्ञाने प्रमाणमस्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नापि तत्प्रसिद्धं लोके । अतो ज्ञानाभावमात्रमेवाज्ञानमिति मीमांसकास्तार्किकाश्च मन्यन्ते । तदेतन्मतं दूषयितुमुत्थापयति—अज्ञानमिति । तदन्यतदभावतद्विरुद्धाद्यर्थेषु सत्स्वपि अज्ञानमित्यत्र नञाऽभाव एव बोध्यते प्रतियोगिनो ज्ञानस्य । स चाभावोऽवभासनशीलस्य ज्ञानस्य प्रागभावो भवतु । यदि वा तस्य प्रध्वंस इतीष्यताम्, न तत्राऽऽग्रहः । नह्यभावस्य भावरूपकार्यं प्रति कारणत्वं कथञ्चित् सम्भाव्यते इत्यर्थः । एवमज्ञानशब्दव्युत्पादनेन तस्याभावरूपत्वं प्रसाध्य प्रमाणप्रसिद्धिरपि तत्रैवेत्याह—अभावमानेनेति । अभावप्रमाणेन तयोः प्रागभावप्रध्वंसयोः विषयेऽज्ञानशब्दप्रसिद्धेर्न भावरूपे ज्ञाने प्रमा लौकिकी वैदिकी वा दृश्यत इति योजना ॥ ४० ॥

सुप्तः समुत्थाय परामृशत्यहं
गाढं किलास्वाप्समवेदिषं न किम् ।
सोऽयं परामर्श ऋते सुषुप्तिगा-
नुभूतिमज्ञानपदान्न सम्भवेत् ॥ ४१ ॥

भावरूपाज्ञाने प्रमाणाभावपक्षं प्रत्याचक्षाणस्तत्र प्रमाणत्वेनार्थापत्तिं दर्शयति—सुप्त इति । सुप्तोत्थितस्य तावदज्ञानपरामर्शान्यथानुपपत्तिर्भावरूपाज्ञाने प्रमाणमिति तदभाववचनं साहसमात्रम् । सुप्तः पुरुषः समुत्थाय गाढमहमस्वाप्समेतावन्तं कालं न किंचिदवेदिषमिति सुषुप्तिकालीनमज्ञानं परामृशति । स चायं परामर्श ऋते सुषुप्तिगानुभूतिं सुषुप्तिकालीनाज्ञानविषयानुभवमन्तरेणानुपपन्न इत्यर्थः ॥ ४१ ॥

यतो विशिष्टानुभवानुसार्ययं
तादृक् परामर्श इतीह निर्णयः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न सुप्तिकालेऽनुभवोऽस्त्यभावगो
ग्रहाद्यभावात् प्रतियोगिधर्मिणोः ॥ ४२ ॥

तत्रोपपत्तिमाह—यत इति। विशिष्टानुभवपूर्वकत्वात् विशिष्टपरामर्शस्य। न च सुषुप्तिकालेऽभावानुभवः सम्भवति। धर्मिग्रहणप्रतियोगिस्मरणाद्यपेक्ष्यते हि अभावानुभवः। न च सुषुप्तिकाले धर्मिग्रहणं सम्भवति, निःशेषकरणव्यापारोपरमात्। सकलकरणव्यापारोपरमो हि सुषुप्तिरित्यभिप्रेत्याह—ग्रहाद्यभावादिति। धर्मिग्रहणप्रतियोगिस्मरणाद्यभावादित्यर्थः ॥ ४२ ॥

सामग्र्यभावादपि नैव सम्भवे-
दभावबोधस्य तदा सुषुप्तिके।
त्वदुक्तबोधप्रतियोग्यभावगा-
नुभूतिरज्ञानमितोऽपि मन्मतम् ॥ ४३ ॥

तस्मादभावज्ञानसामग्र्यसम्भवात् सुषुप्तौ न ज्ञानाभावानुभवः सम्भवतीत्याह—सामग्रीति। अभावबोधस्य सामग्र्यभावादपि तदा सुषुप्तिके त्वदुक्तबोधप्रतियोग्यभावगानुभूतिः। त्वदुक्ता योऽज्ञानप्रतियोगिको भावस्तस्यानुभवो नैव सम्भवेत्। इतोऽपि मन्मतं यद्धर्मिमतं भावरूपमज्ञानं सेत्स्यतीत्यर्थः ॥ ४३ ॥

अतोऽनुभूतं जडमात्मगोचरं
चैतन्यभासोदितया सदैव तत्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावात्मकं ज्ञानविरोधिसुप्तिके

ज्ञानं परामृश्यत एतदुत्तरम् ॥ ४४ ॥

एतदेव विवृणोति—अत इति । अतः सदैवोदिततया चैतन्यभासा नित्यचैतन्यप्रकाशेनैवाज्ञानं मायादिशब्दवाच्यमात्मगोचरं ज्ञानविरोधितया ज्ञानपर्युदासेन वा अज्ञानमिति चोच्यमानं भावात्मकं भावरूपमेव सुप्तिके सुषुप्तावनुभूतम्, एतस्मात् सुप्तिकालादुत्तरकाले जाग्रति परामृश्यत इति योजना ॥ ४४ ॥

अभाववोधः प्रतियोगिधर्मिणो-

र्ग्रहाद्यपेक्षो न च तत्र सम्भवेत् ।

विकल्पयुक्तः स च वोध इष्यते

न जायतेऽन्तःकरणं विना कदा ॥ ४५ ॥

ननु नित्यात्मचैतन्येनैव ज्ञानाभावानुभवः सुषुप्तौ कल्प्यताम् । किं भावरूपाज्ञानानुभवकल्पनया ? इति तत्राह—अभाववोध इति । अभावानुभवस्य धर्मिग्रहणप्रतियोगिस्मरणादिसविकल्पकज्ञानापेक्षत्वात् । तस्य चान्तःकरणकार्यतयाऽन्तःकरणमन्तरेणासम्भवात् केवलस्वरूपचैतन्यमात्रान्निर्विकल्पादसिद्धेरित्यर्थः ॥ ४५ ॥

इदन्तु सुप्तौ निजसाक्षिणा तमोऽ-

नुभूतमज्ञानमनादिभावतः ।

विकल्पशून्येन तदुत्तरं त्विदं

सम्यक् परामृश्यत इत्यतस्तथा ॥ ४६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावरूपाज्ञाने ततो महद्वैषम्यमित्याह—इदन्त्विति। तुशब्देन ज्ञानाभावाद् वैलक्षण्यं द्योत्यते। इदं भावरूपमज्ञानं सुषुप्तिकाले निजसाक्षिणा विकल्पशून्येन निर्विकल्पककेवलात्मसाक्षिचैतन्येनानुभूतम्, उत्तरकाले तदिदमनादिभावरूपमज्ञानं सम्यक् परामृश्यते इति वैषम्यमित्यतो हेतोस्तथा—भावरूपमज्ञानं स्वीकर्त्तव्यमित्यर्थः ॥ ४६ ॥

अथात्मचैतन्यमिदं सनातनं
तथेदमज्ञानमनाशि चामृतम्।
सुप्तः समुत्थाय परामृशत्यदः
कथं हि संस्कारमृते तमो जडम् ॥ ४७॥

ननु स्वरूपचैतन्यस्य नित्यत्वादज्ञानस्य चासंसारविमोक्षादविनाशाभ्युपगमादज्ञानानुभवजनितसंस्काराभावे कथमुत्थितस्य तद्विषयः परामर्शः स्यादिति शङ्कते—अथेति। आ अमृतं तत्त्वसाक्षात्कारेणाविर्भूतमोक्षपर्यन्तमित्यर्थः। अदस्तमो जडमावरणात्मकमज्ञानमिदं कथं संस्कारमृते सुप्तो नरः समुत्थाय परामृशतीत्यक्षरयोजना। तथा च कथं भावरूपाज्ञानसिद्धिरित्यर्थः ॥ ४७ ॥

विनाऽऽत्मबोधं न निवर्त्तते तम-
स्तथाप्यनेकात्मकमस्ति जाग्रति।
अज्ञोऽहमस्मीति विकल्पसंयुता-
नुभूतिरन्तः सुखगोचरेव सा ॥ ४८ ॥

अज्ञानस्य नित्यत्वेऽपि जाग्रदाद्यवस्थासु विपरिवर्त्तमानं तत्तदवस्थाविशेषसंसृष्टमेवानुभूयते। तथाविधावस्थासंसर्गाव्यभिचाराद् भवत्येवा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नुभवजनितसंस्कारः । ततश्चोत्थितस्य परामर्शोऽपि युज्यत एवेत्याशयेन समाधत्ते—विनेति । जाग्रति जागरावस्थायाम् 'अहमज्ञः' इति स्फुटतरसविकल्पानुभवेन सुखादिवदनुभूयते इत्यर्थः ॥ ४८॥

स्वप्ने पुनस्तद्गतकुञ्जरादिव-
त्तमोऽपि बाधार्हमदोऽनुभूयते ।
सुप्तेऽखिलज्ञानविरामतस्तमः
संस्कारयुक्तं स्वचिताऽनुभूयते ॥ ४९ ॥

स्वप्ने इति । स्वप्नावस्थायां पुनस्तद्गतहस्त्यादिवद् बाधयोग्यतयाऽनुभूयते तददस्तमोऽज्ञानम्, सुषुप्ते तु सकलसविकल्पकज्ञानोपरमात् केवलसंस्काररञ्जितमज्ञानमनुभूयते इत्यर्थः ॥ ४९ ॥

अतोऽपि जाग्रत्समये तथाविधा-
वस्थादिसंसर्गविनाशतो भवेत् ।
ज्ञानोत्थसंस्कार इतोऽपि युज्यते
पुंसः परामर्श इहोत्थितस्य च ॥ ५० ॥

ततः किमित्यत आह—अत इति । अतो जागरितावस्थायां तथाविधावस्थासंसर्गव्यभिचाराद् भवत्येवानुभवजनितसंस्कारः । ततश्चोत्थितस्य परामर्शो युज्यते एवेत्यर्थः ॥ ५० ॥

नायं ह्यभावानुभवोऽनुमानतोऽ-
नैकान्तिकत्वाद् भ्रमताऽस्य नाऽन्ततः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रश्नान्यथासम्भवतोऽपि सन्मते
भावात्मकं सिद्धमनादि तत्तमः ॥ ५१ ॥

ननूत्थितस्यैतावन्तं कालं न किञ्चिदवेदिषमित्ययं परामर्शो न भवति; किन्तु प्राचीनस्यैव ज्ञानाभावस्यायं प्रबोधकालेऽनुभवः। यथा प्रातःकालीनस्यैव चत्वरादौ गजाभावस्य सायंकालेऽनुभवः—प्रातश्चत्वरादौ नासीदिति। सुषुप्तिकालीनस्यैव ज्ञानाभावस्यायं प्रबोधकालेऽनुभव इति नेत्याह—नायमिति। प्रातःकालीनस्यैव गजाभावस्य तदानीमेव धर्म्यनुभवात् तत्परामर्शेन सायङ्काले प्रतियोगिस्मरणे गजाभावानुभवो युक्तः। इह पुनः सुषुप्त्यवस्थायां धर्म्यादिसमस्तवस्तुग्रहणाभावे सति कस्य कुत्राऽभावः प्रबोधकाले प्रतिपद्यते। अतो नायमभावानुभव इत्यर्थः। अस्तु तर्हि ज्ञानाभावानुमानम् तथाहि—सुषुप्तिकाले किञ्चिन्मया नानुभूतम्, अस्मर्यमाणत्वात्, यन्न स्मर्यते तन्नानुभूयते, यथा सप्तमो रसः। तथा च सुषुप्तिकालीनं वस्तु न किञ्चिदपि स्मर्यते; तस्मात्तदा न किञ्चिदनुभूतमिति नेत्याह—अनुमानत इति। नेत्यत्राप्यनुपज्यते। न ज्ञानाभावानुमानमपि, सार्वविभक्तिकस्तसि, हेतोरनैकान्तिकत्वात्। नह्यनुभूते वस्तुनि स्मृतिनियमोऽस्ति, वेगेन धावतो मार्गवर्त्तितृणपर्णाद्यनुभवेऽपि पुनस्तदस्मरणदर्शनात्। अथ नियमेनास्मर्यमाणत्वादिति हेतुं विशिंष्याः, तथापि निर्विकल्पकज्ञानानुभूतपदार्थे व्यभिचारः। तस्मादस्मरणलिङ्गेन ज्ञानाभावानुमानमयुक्तम्। न च ज्ञानाभावस्य लिङ्गान्तरमुपलभामहे। न चायमुत्थितस्याज्ञानपरामर्शो विभ्रम इत्याशयेनाह—भ्रमतेति। अस्य परामर्शस्य न भ्रमता शङ्कनीया। तत्र हेतुः— अक्षतेः बाधरूपक्षतेरनुपलम्भादित्यर्थः। तस्मादुत्थितस्याज्ञानपरामर्शान्यथानुपपत्त्या भावरूपमेवाज्ञानं सुषुप्तावनुभूतमिति निश्चीयते। विमतः सुषुप्तोत्थितस्याज्ञानपरामर्शः भावरूपविषयः, अभावप्रमाणागोचरवस्तुविषय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वाद्, घटादिपरामर्शवदित्यनुमानमपि तत्र प्रमाणमिति द्रष्टव्यम् । अपि च जागरितावस्थायामप्यज्ञातार्थप्रश्नान्यथानुपपत्त्या भावरूपमज्ञानं गम्यत इत्याह—प्रश्नान्यथासम्भवतोऽपीति । अयमर्थः—कश्चित् स्वयमज्ञातमर्थं तदभिज्ञमन्यं पुरुषं पृच्छति—कीदृशोऽयमर्थोऽसौ न ज्ञायते इति । तत्र यदि ज्ञानाभावाज्ञानं तदा सुषुप्तत्वादर्थस्य तदनुवादेन प्रश्नोऽनुपपन्नः । नह्यप्रतिपन्नेऽर्थे तदनुवादो घटते । अथ सामान्यमात्रेणावगतमर्थमनूद्य तद्विशेषविषयप्रश्न इत्युच्यते तदेतद्वक्तव्यम्—किं सामान्यविशेषौ भिन्नौ ? उताऽभिन्नौ ? भिन्नाभिन्नौ वा ? इति । आद्ये सामान्यस्यावगतत्वात् तद्बुभुत्साया अभावाद् विशेषस्य चार्थान्तरत्वात् तस्य च प्रसुप्तत्वादनुवादेन प्रश्नासम्भवात् लोके प्रश्नव्यवहारोऽस्तमियात् । अथ विशेषोऽपि सामान्याकारेणावगत इति मतम्, तथाप्यवगतैकदेशो बुभुत्साया अभावादनवगतांशस्य सुषुप्तत्वात् तदनुवादेन प्रश्नानुपपत्तेस्तदवस्थ एव दोषः । अथ तावभिन्नौ, तदा सामान्यावगमेनैव विशेषांशस्य अवगतत्वान्न विशेषांशबुभुत्सा, नापि प्रश्नावसरः । अथ सामान्यविशेषयोर्भिन्नाभिन्नत्वात्सामान्यावगमेनैव तद्भेदाद् विशेषोऽप्यवगतः । ततश्च विशेषानुवादेन प्रश्नोपपत्तिः, भिन्नत्वाच्च विशेषस्य; तद्विषये बुभुत्सापि सम्भवति । अतो न काचिदनुपपत्तिरिति मन्येत, तदापि वक्तव्यम्—किं भिन्नरूपमेवाभिन्नम् ? आहोस्वित्ततोऽर्थान्तरमिति ? आद्ये विशेषस्यावगतिरनवगतिरेव स्यान्नोभयसिद्धिः, रूपद्वयाभावात् । अथार्थान्तरं तदाऽवगतमवगतमेव । न तु तत्र बुभुत्सा, नापि प्रश्नावकाशः । अनवगतरूपस्यावगतरूपादन्यत्वात्, तस्य च सुषुप्तत्वात्, तदनुवादेन प्रश्नोऽनुपपन्न एव । तस्माज्ज्ञानाभाव एव चेदज्ञानं स्यात्, तर्हि प्रश्नप्रतिवचनादौ लोकव्यवहारः प्रलीयेतेति । ननु भावरूपमज्ञानं विषयावभासविरोधित्वेनैव भवद्भिरभ्युपगतम्, तत्कथं भवतामपि अज्ञातेऽर्थे प्रश्नादिव्यवहार इति ? तत्राह—मन्मत इति । अस्मत्पक्षे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदार्थानां द्वयी गतिः—एका साक्षिसिद्धिः; अपरा प्रमाणसिद्धिः। तत्र भावरूपमज्ञानं प्रमाणज्ञानविरोधित्वेनाभ्युपगम्यते, न साक्षिचैतन्यविरोधित्वेन। ततः प्रमाणज्ञानोदयात् प्रागज्ञानविशिष्टतया साक्षिचैतन्यसिद्धोऽर्थोऽज्ञात इति व्यवह्रियते। ततश्चार्थस्यात्यन्तसुषुप्त्यभावादज्ञातत्वाच्च तस्यामवस्थायां प्रश्नादिव्यवहारोपपत्तिः। स्वतः परतो वा प्रमाणज्ञाने सञ्जातेऽज्ञाननिवृत्तेः अर्थस्य ज्ञातत्वादिव्यवहारो बुभुत्सानिवृत्तिश्चेति सर्वमवदातमिति। तत्तमः साक्षिचैतन्यावभासितमनाद्यज्ञानं भावरूपमेवेति सिद्धमिति तात्पर्यार्थः ॥ ५१ ॥

ज्ञानैकबाध्यत्वमिहास्य लक्षणं
विवक्षितं भावपदेन हेतुता।
हेत्वन्तरासम्भवतोऽस्त्यनादिता
प्रकल्पितस्यास्य निवर्त्तनं धिया ॥ ५२ ॥

ज्ञानमात्रैकनिवर्त्त्यत्वमेवाऽस्य लक्षणम्, भावरूपप्रपञ्चं प्रति कारणत्वसिद्धये भावरूपमज्ञानं विवक्षितम्। अनादित्वन्त्वस्य कारणान्तराभावादनादिप्रपञ्चप्रवाहकारणत्वाच्चेत्याशयेनाह—ज्ञानेति। ज्ञानैकबाध्यत्वमज्ञानत्वम्—इतीह वेदान्तशास्त्रे अस्याज्ञानस्य लक्षणं विवक्षितम्। तस्य भावपदेन भावरूपप्रपञ्चं प्रति कारणत्वं विवक्षितम्। तथा, चात्मस्वरूपावरकत्वेन सर्वविश्वकारणत्वेन ज्ञानैकनिवर्त्त्यत्वेन च भावरूपत्वमित्यर्थः। हेत्वन्तरासम्भवादस्याऽनादित्वम्। अस्य ब्रह्मणि कल्पितत्वादेव तत्साक्षात्कारात्मकधिया निवर्त्तनमपि सुकरमित्यर्थः ॥ ५२ ॥

अज्ञानकार्यं भ्रम इष्यते ततो
भ्रमो न चाऽज्ञानमतो विलक्षणम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्यान्यतोऽपि क्षय इष्यते तमो
ज्ञानैकबाध्यं यत इष्यते बुधैः॥ ५३॥

तत्त्वज्ञाननिवर्त्यतया भ्रान्तिज्ञानमेवाज्ञानं स्यादिति शङ्कानिरासाय भ्रमतोऽस्य वैलक्षण्यमाह—अज्ञानकार्यमिति। भ्रमो हि अज्ञानकार्यम्। न च भ्रम एवाज्ञानमिति वाच्यम्, ज्ञानमात्रैकनिवर्त्यत्वाभावात्। स्वप्नेऽपि गन्धर्वनगरादिभ्रमनिवृत्तौ किमिदमासीदिति विवित्सादर्शनात्। भ्रमस्यान्यतोऽपि नाशसम्भवात्। तमोऽज्ञानन्तु ज्ञानमात्रैकबाध्यत्वाद् भ्रमतो विलक्षणमेवेष्यते, तस्माद्भ्रम एवाज्ञानमतिरिक्तं वच इत्यर्थः॥ ५३॥

भ्रमक्षयानन्तरमीक्ष्यते तमः
किं तद्विवित्सेति ततो विलक्षणम्।
जिज्ञास्यतेऽज्ञातमतोऽपि न भ्रमोऽ-
ज्ञानं समस्तभ्रमकारणं मतम्॥ ५४॥

उक्तमज्ञानस्य भ्रमतो वैलक्षण्यं पुनर्द्रढयति—भ्रमक्षयानन्तरमिति। भ्रमे नष्टेऽपि तमोऽज्ञानमीक्ष्यते। किं तदिति विवित्सादर्शनात् पुनरपि अज्ञातस्य वस्तुनो जिज्ञासादर्शनादज्ञानं समस्तभ्रमकारणत्वादेर्भ्रमाद्विलक्षणमेवेत्यर्थः॥ ५४॥

अज्ञानमात्मावरकं जगज्जनि
नञा यतो ज्ञानविरोध्युदीर्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनादि भावात्मकमद्वयात्मनः
साक्षात्कृतौ सर्वमिदं निवर्त्तते ॥ ५५ ॥

अस्त्वेवम्, प्रकृते किमायातम् ? इत्यत आह—अज्ञानमिति। तस्मादात्मस्वरूपावरकमज्ञानं जगदुपादानमनादि भावात्मकमेवेति सिद्धम्। यतो नञा ज्ञानविरोधि ह्यज्ञानमित्युदीर्यते, न तदभावः। इदं साक्षिसिद्धमज्ञानं सर्वं सविलासमद्वयात्मतत्त्वस्य साक्षात्कृतौ सिद्धायां निवर्त्तते इति योजना ॥ ५५ ॥

न सन्न चासन्न च तद् द्वयात्मकं
ततोऽस्त्यनिर्वाच्यमनादि तत्तमः।
ज्ञानानिवर्त्यं सदसत्त्वयं नहि
ज्ञानैकबाध्यं तम इष्यते बुधैः ॥ ५६ ॥

एवमज्ञानस्य भावरूपत्वं प्रसाध्यानिर्वाच्यत्वं साधयति—नेति। न तावदज्ञानं सत्, बाध्यत्वात्। न चासत्, भावकार्यमात्रं प्रति कारणत्वात्। न वा सदसदात्मकम्, उभयात्मकविरोधात्। ततोऽस्त्यनादि तमोऽज्ञानमनिर्वाच्यमेवेत्यर्थः। तस्य सत्यत्वे आत्मवज्ज्ञाननिवर्त्यत्वं न स्यात्; असत्यत्वे शशविषाणादिवन्नित्यनिवृत्तत्वात् तथात्वं न स्यात्। तस्माज्ज्ञानैकनिवर्त्यत्वान्यथानुपपत्त्याऽनिर्वाच्यमेवाज्ञानमिति सिद्धम् ॥ ५६ ॥

नन्वस्तु भावात्मकमावृतेः पदं
परन्तु जीवाश्रयमेव तत्तमः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अज्ञोऽहमित्यत्र विभाति संश्रयो
ज्ञानस्य जीवोऽनुभवे जडात्मधीः ॥ ५७ ॥

एवं भावरूपमनाद्यनिर्वाच्यं ज्ञानविरोध्यज्ञानं प्रसाध्य तस्य ब्रह्मैवा-श्रयो विषयश्चेति प्रसाधयितुं स्वयूथ्यशङ्कामुत्थापयति—नन्विति । 'अहमज्ञः' इत्यज्ञानस्य जीवाश्रयत्वं प्रत्यक्षम्, नहि 'ब्रह्माज्ञम्' इति प्रतीति-रस्ति, न चाप्रतीयमानमपि कल्पयितुं शक्यम्, अज्ञानस्याप्यज्ञानसद्धा-भ्युपगमे प्रमाणगम्यत्वं ब्रह्मवत् सत्यत्वञ्च दुर्वारमापद्येत । अपि च श्रयाज्ञानाभ्युपगमे प्रमाणान्तरविरोधो दुष्परिहर इत्याशयेन ङ्कते—नन्विति । आवृतेरावरणशक्तेः पदमाश्रयभूतं तत्पूर्वोक्तलक्षण-क्षितं तमोऽज्ञानं भावात्मकमस्तु, न तत्र विवदामहे; परन्तु जीवाश्र-येव युज्यते । 'अज्ञोऽहम्' इति प्रत्यक्षमेव तस्यावरकस्य जीवाश्रयत्वं यतीत्याह—अज्ञोऽहमिति । 'अज्ञोऽहम्' इत्यस्मिन्ननुभवे जीव एवा-ज्ञानस्य संश्रयः—आश्रयत्वेन विभाति, अत एव जडेषु देहेन्द्रियादिष्वेवा-त्मबुद्धिर्यस्येति योजना ॥ ५७ ॥

न ब्रह्म तस्याश्रय एव सर्वविद्
ब्रह्माज्ञमस्तीति न कस्यचित् प्रथा ।
न चाप्रतीतं किल शक्यते तमोऽ-
प्रमाणकं कल्पयितुं कथञ्चन ॥ ५८ ॥

ब्रह्मणस्तु सर्वज्ञत्वान्न तदाश्रयत्वमित्याह—नेति । ब्रह्म तस्या-श्रयो न भवति, यतः सर्ववित् । न च ब्रह्माऽज्ञमिति प्रथा कस्यचिदप्यस्ति । अप्रमाणकत्वाद् अप्रतीतं तमः कथञ्चन कल्पयितुमपि न च शक्यते, किलेति लोकप्रसिद्धम्, इति योजना ॥ ५८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अज्ञातमज्ञानमपीष्यते यदा
प्रमाणगम्यत्वमपीष्यतां तदा ।
तस्याऽऽत्मवत् सत्त्वमशक्यवारणं
भवेत् प्रमाणोज्झितकल्पना त्वियम् ॥५९॥

अज्ञानस्य प्रामाणिकत्वे बाधकमप्याह—अज्ञातमिति । अज्ञातं हि प्रमाणजज्ञाननिवर्त्त्यम् । तत् चेत् प्रमाणसिद्धम्, तदा ब्रह्मवत् सत्यमेव स्यात् । तथा चाऽद्वैतक्षतिरित्यर्थः ॥ ५९ ॥

ब्रह्मास्ति सर्वज्ञमिति प्रतीयते
श्रुतिप्रमाणादपि नाज्ञमस्ति तत् ।
सार्वज्ञ्यमज्ञत्वमिहैकदैव न
स्यातामखण्डात्मनि तत्पदे पदे ॥ ६० ॥

"यः सर्वज्ञः सर्ववित्" (मु० १ । १ । ९) इत्यादिश्रुतेर्ब्रह्म सर्वज्ञम् इति ज्ञायते, कथं तस्य ज्ञानाश्रयत्वं स्यात् ? इत्याह—ब्रह्मेति । न चैकस्य युगपदज्ञत्वसर्वज्ञत्वे सम्भवतः । ततश्च ब्रह्माश्रयाऽज्ञानाभ्युपगमे सर्वज्ञश्रुतिव्याकोपः स्यादित्यर्थः ॥ ६० ॥

अतश्च जीवाश्रयमिष्यते बुधै-
रज्ञानमतद्वैसुखात्मगोचरम् ।
तदाश्रयादेश्च भिदामपेक्षते
तत्कस्य कस्मिन्निति बुद्धिदर्शनात् ॥६१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतो जीवाश्रयं ब्रह्मविषयमज्ञानम्, आश्रयविषयभेदापेक्षं ह्यज्ञानं कस्य कस्मिन्नित्यपेक्षादर्शनादित्याह—अतश्चेति। अद्वैतसुखात्मगोचरमद्वयानन्दब्रह्मविषयं तदज्ञानमाश्रयादेराश्रयविषययोर्भेदमपेक्षते इति योजना ॥ ६१ ॥

जीवाश्रयस्येशपदस्य तस्य चाऽ-
ज्ञानस्य सम्यग्विनिवृत्तये श्रुतौ।
ब्रह्मोपदेशोऽप्यत एव युज्यते
तदन्यथात्वे विपरीततां भजेत् ॥ ६२ ॥

ततश्च जीवाश्रयस्य ब्रह्मविषयस्याज्ञानस्य निवृत्तये जीवस्य ब्रह्मोपदेशो युक्त इत्याह—जीवाश्रयस्येति। तदन्यथात्वे ब्रह्माश्रयस्याऽज्ञानस्य जीवविषयत्वे ब्रह्मणो जीवोपदेशविषयं शास्त्रमिति वैपरीत्यमापद्येतेत्यर्थः ॥ ६२ ॥

भ्रान्त्यैकरूपं प्रतिभासकारणं
न न्यायतः शक्यनिरूपणं तमः।
अज्ञोऽहमेवं प्रतिभास इष्यते
स्वसाक्षिसिद्धस्त्विति पूर्वमीरितम् ॥ ६३ ॥

नन्वज्ञानसम्बन्धे सति जीवत्वम्, जीवत्वे सत्यज्ञानसम्बन्ध इत्यन्योन्याश्रयत्वप्रसङ्ग इति नेत्याह—भ्रान्त्यैकरूपमिति। अज्ञानस्य भ्रान्त्यैकरूपत्वेन न्यायनिरूपणानपेक्षणात् प्रतिभासमात्रशरीरत्वाच्च। प्रतिभासश्च 'अहमज्ञः' इति सर्वलोकसाक्षिक इत्युक्तमधस्तात्। तथा च



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'षडस्माकमनादयः' इत्युक्तेरज्ञानतत्सम्बन्धजीवत्वादेरनादित्वान्नान्यो-न्याश्रयादिशङ्काऽप्यवकाशं लभते इत्यर्थः ॥ ६३ ॥

जीवाश्रयं ब्रह्मपदं ततस्तमो
जीवास्त्वनन्ता भवमृत्युभागिनः ।
प्रत्येकमेषां पृथगावृतेः पदं
मायाख्यमज्ञानमनेकमिष्यते ॥ ६४ ॥

अतो न ब्रह्माश्रयमज्ञानम्, किन्तु जीवगतमेवेत्याह—जीवाश्रय-मिति ॥ ६४ ॥

जीवाश्रयाणीशपदानि तानि चाऽ-
नादीनि तैरेव जगत् प्रकल्पितम् ।
आध्यात्मिकं बाह्यमशेषमात्मनि
स्वाज्ञाननाशे विनिवर्त्तते भवः ॥ ६५ ॥

बहवश्च जीवास्तेषां प्रत्येकमज्ञानानि भिन्नानि, तानि च भ्रान्ति-तत्संस्काररूपेणानादीनि, न दण्डायमानरूपेण । तैरेव स्वासाधारणं बाह्य आध्यात्मिकश्च प्रपञ्चः परिकल्पित इत्याशयेनाह—जीवाश्र-याणीति ॥ ६५ ॥

यस्यात्मतत्त्वैक्यमतिर्विचारजा
वेदान्तवाचामपवर्गभागसौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वाज्ञाननाशेन निवृत्तबन्धनो
　　मुक्तः स आचार्य उदारदैशिकः ॥६६॥

अत एव स्वस्वाज्ञानपरिकल्पितत्वात् सर्वेषां प्रपञ्चप्रतिभासो न विरुद्ध्यते, तत्त्वमसीति ब्रह्मात्मैकत्वावगमे सति स्वस्वासाधारणबन्धप्रध्वंसेन तस्य तस्यैवापवर्ग इत्याशयेनाह—यस्येति । स तत्त्ववित् उदारदैशिकः परमानन्दपदोपदेशक आचार्य्य इत्यर्थः ॥ ६६ ॥

विवेकविज्ञानविवर्जिता जना
　　बद्धास्ततोऽन्ये हि मुमुक्षवो बुधाः ।
इति व्यवस्था घटते मते मम-
　　साधारणाज्ञानजसंसृतिर्यतः ॥ ६७ ॥

अतोऽनेकजीववादिमते सर्वापि बद्धमुक्तादिव्यवस्था सङ्गच्छते इत्याह—विवेकेति । यतोऽसाधारणाज्ञानजन्या संसृतिरस्ति । अतो यस्यात्मसाक्षात्कारः, स च मुच्यते, अन्ये बद्धा इत्यादिव्यवस्था घटते इत्यर्थः ॥ ६७ ॥

यदैकजीवोऽभ्युपगम्यते तदा
　　जीवान्तरस्यात्मविदोऽप्यभावतः ।
गुरोरभावे कथमात्मबोधनं
　　स्वरूपबोधानुदयान्न मुक्तता ॥ ६८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कथञ्चिदेकस्य चिदद्वयात्मनो
बोधोदये सर्वजगन्निवृत्तितः ।
तद्विद्ययैवेति पुनर्न वाऽधुना
प्रपञ्चभानं किल कस्यचिद्भवेत् ॥ ६९ ॥

एकजीवपक्षे जीवान्तरस्य विदुषोऽभावादाचार्य्याभावः, ततश्चोपदेशाभावे विद्याभावः, तदभावाच्च मोक्षाभावादनिर्मोक्षप्रसङ्गः। कथञ्चिदेकस्य विद्योदये च तद्विद्ययैव समस्तप्रपञ्चनिवृत्तेर्नेदानीं प्रपञ्चोपलब्धिः स्यादित्यादिदोषगणमुद्भावयति—यदेति द्वाभ्याम् ॥ ६८—६९ ॥

तस्मादनन्ताः स्युरनेकदेहगा
जीवास्तथाऽज्ञानमनेकमिष्यते ।
जीवाश्रयं संसृतिहेतुरित्यजा-
ध्यस्तात्मभेदान्धधियां प्रकल्पना ॥ ७० ॥

तस्माद्बद्धमुक्तादिव्यवस्थान्यथानुपपत्त्याऽनेकजीवपक्ष एव श्रेयानित्येकदेशिनो मतमुपसंहरति—तस्मादिति । एतन्मतं दूषयितुमुपक्रमते—इतीति । इतीत्थं प्रकल्पना अजयाऽविद्ययाऽध्यस्तो य आत्मभेदस्तेनान्धा विवेकदृष्टिवर्जिता धीर्येषां तेषामेवेत्यर्थः ॥ ७० ॥

स्यादेतदेवं यदि ते श्रुतेर्मतं
ज्ञातं भवेत्तत्त्वविदां सदुक्तिभिः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शृणु श्रुतीनां मतमात्मविन्मतं
भ्रमापहं भेदमतेर्विलापनम् ॥ ७१ ॥

जीवभेदवासितान्तःकरणतया अपरिपक्वविद्ययैव त्वयेदं समुत्प्रेक्षितमित्याह—स्यादिति । न पुनः सम्यक्तत्त्वविदां मतं सम्यग् ज्ञातमित्यर्थः ॥ ७१ ॥

ब्रह्मैकमेवास्ति तदेव संसृतिं
स्वाज्ञानतो याति तदेव बोधतः ।
विमुच्यतेऽतः स्थितिरित्यखण्डचि-
त्प्रत्यक्परब्रह्मविदां तथा श्रुतेः ॥ ७२ ॥

किं तत् सम्यक्तत्त्वविदां मतमित्याकाङ्क्षायां ब्रह्मैव स्वाज्ञानात् संसरति, ब्रह्मैव स्वाज्ञानान्मुच्यते इति तत्त्वविदां स्थितिरित्याह—ब्रह्मेति । अखण्डचित् सजातीयादिभेदविनिर्मुक्तचैतन्यं तदेव प्रत्यक् सर्वान्तरः प्रत्यगात्मा तदेव परब्रह्माहमस्मीत्येवं विजानतां मतमिदं श्रुतेश्चेत्यर्थः ॥ ७२ ॥

ब्रह्माद्वयत्वात् परमार्थवस्तु तत्
तत्रैव सत्यात्मनि चिद्घने पदे ।
सकार्यमज्ञानमिदं प्रकल्पितं
न कल्पिते कल्पितमीक्ष्यते क्वचित् ॥७३॥

ब्रह्मण एव परमार्थवस्तुत्वात् तस्य चाद्वितीयत्वात् परमार्थे चापर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मार्थाविद्यातत्कार्यकल्पनम्। नहि शुक्तिरजतादावपरमार्थे किञ्चिदन्यत् कल्पितमुपलभामहे इत्याशयेनाह—ब्रह्माद्वयत्वादिति ॥ ७३ ॥

घटाद्युपाधेर्गगनादिवस्तुना
दृष्टोऽस्ति सम्बन्ध इहापि कल्पितः।
चैतन्यमात्रेण सतैव युज्यतेऽ-
प्यज्ञानसम्बन्ध इह प्रकल्पितः ॥ ७४ ॥

लोके च मुखाकाशादेः स्वरूपेणैव दर्पणघटाद्युपाधिसम्बन्धो दृश्यते। एवमद्वितीयचैतन्यमात्रेणैवाविद्यातत्कार्यसम्बन्धो युक्तः, नाविद्यावच्छिन्नेन घटाकाशादिस्थानीयेन जीवेन; आत्माश्रयप्रसङ्गादित्याशयेनाह—घटादीति ॥ ७४ ॥

अज्ञानयोगात् प्रथमं न सम्भवेत्
स जीवभावः परमार्थचिद्घने।
न पश्चिमोऽयं तमसः समाश्रयो
न गोचरः किन्तु विशुद्धचित्तथा ॥ ७५ ॥

अज्ञानसम्बन्धात् पूर्वं जीवस्यैवाभावान्न जीवाश्रयमज्ञानमित्याह—अज्ञानयोगादिति। तथेति। आश्रयत्वविषयत्वभागिनी विशुद्धा चिदेवेत्यर्थः। तदुक्तम्—

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः" ॥ इति।

(सं० शा० ३१९) ॥ ७५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्योन्यसम्बन्धवशात् प्रतीयतेऽ-
हमज्ञ इत्येकचिति द्वयोर्यतः ।
आरोपितत्वं प्रतिभासरूपयो-
रहङ्कृतेरावृतिशक्तिकस्य च ॥ ७६ ॥

'अहमज्ञः' इति प्रतिभासस्यान्यथाऽपि सम्भवे सति न्याय-विरोधेनैव प्रतिभासस्य गतिकल्पनं न च युक्तमित्याशयेनाह—अन्योन्यमिति । अज्ञानाहङ्कारयोरेकचैतन्यसम्बन्धात् परस्परं सम्बन्ध-प्रतिभासः 'अहमज्ञः' इति युज्यत इत्यर्थः । आवृतिशक्तिकस्याज्ञान-स्येत्यर्थः ॥ ७६ ॥

नाहङ्कृतेर्नो तदुपाधिकस्य वाऽ-
ज्ञानाश्रयत्वं तु परस्पराश्रयात् ।
अहन्त्वजीवत्वमृते न तद्वपु-
र्न तस्य सम्बन्धमृतेऽस्ति तद्द्वयम् ॥७७॥

नाहङ्कारस्य न वा तदुपाधिकस्य जीवस्याज्ञानाश्रयत्वसम्भवः, अन्योन्याश्रयप्रसङ्गात् । नेति । अन्योन्याश्रयमाह—अहन्त्वमिति । चैतन्यस्याज्ञानाश्रयत्वे सत्यहङ्कारस्वरूपसिद्धौ तदुपाधिकजीवभावः, जीवत्वे च सिद्धे तस्याज्ञानाश्रयत्वसिद्धिरित्यर्थः ॥ ७७ ॥

नाऽनादिभावात् परिहार एतयोः
स्वाभाविकी स्यात्तव जीवता तदा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदाऽनपेक्षास्ति तयोः परस्परं
कथं भवेन्मुक्तिरितोऽपि संसृतेः ॥ ७८ ॥

ननु तयोरनादित्वात् परिहारो भविष्यतीति नेत्याह—नाऽनादीति। जीवाज्ञानयोः परस्परानपेक्षत्वे जीवभावस्य स्वाभाविकत्वप्रसङ्गादनिर्मोक्षप्रसङ्ग इत्यर्थः ॥ ७८ ॥

एकाग्निसम्बन्धवशाद्यथाऽयसः
प्रदाहकत्वस्य परस्परभ्रमात् ।
सम्बन्धभानञ्च तथाऽस्त्यहङ्कृते-
रज्ञानकस्यैकचिदात्मयोगतः ॥ ७९ ॥

मन्मते न कोऽपि दोष इत्याह—एकाग्निरिति। एकाग्निसम्बन्धाद् दाहकत्वायसोरिवैकचैतन्यसम्बन्धादहङ्काराज्ञानयोः परस्परसम्बन्धप्रतिभास इत्यर्थः ॥ ७९ ॥

अज्ञानमद्वैतचिदाश्रयं स्वतो
मिथ्यात्मकत्वाद्रजतादिवज्जडम् ।
उपाधिभावाद् घटदर्पणादिव-
न्निजानपेक्षप्रतिभादिवस्तुगम् ॥ ८० ॥

अज्ञानं स्वकल्पितचैतन्यमात्राश्रयम्, मिथ्यात्वात्, रजतादिवदित्यनुमानमाह—अज्ञानमिति। अज्ञानं स्वानपेक्षसत्ताप्रतीतिविरुसम्बन्धि, उपाधित्वात्, घटदर्पणादिवदित्यनुमानान्तरमभिप्रेत्याह—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽपाधीति । निजानपेक्षप्रतिभादिवस्तुगं स्वानपेक्षप्रतीतिसत्तावस्तु-सम्बन्धीत्यर्थः ॥ ८० ॥

न चास्त्यविद्याश्रय एव जीवको
विद्यानिमित्तप्रतिभाससत्त्वतः ।
तथा परिच्छिन्नतया घटादिव-
न्न सम्भवेदाश्रयताऽस्य तां प्रति ॥ ८१ ॥

तथा जीवोऽविद्याश्रयो न भवति, अविद्यानिमित्तसत्ताप्रतीतिकत्वात्; रज्जुसर्पवदिति । तथा जीवोऽज्ञानाश्रयो न भवति, परिच्छिन्नत्वात्, घटादिवदित्यनुमानद्वयमभिप्रेत्याह—न चेति। तां प्रति अविद्यां प्रति ॥८१॥

उपाधिशून्यस्य चिदद्वयात्मनो
ब्रह्मत्वमत्राभिमतं श्रुतेर्गिराम् ।
न चाप्यविद्याप्रतिबिम्बितं कदा-
ज्ञानाश्रयं ब्रह्म न बिम्बवस्त्वपि ॥ ८२ ॥

ननु निरुपाधिकचैतन्यस्य जीवभाववद् ब्रह्मभावस्याप्यविद्याकृतत्वाद् ब्रह्माश्रयत्वपक्षेऽपि तुल्य एव दोष इति तत्राह—उपाधिशून्यस्येति । निरुपाधिचैतन्यस्यैव ब्रह्मत्वाभ्युपगमात्, न पुनरविद्याप्रतिबिम्बितमेव सप्रतियोगिकं ब्रह्म अज्ञानाश्रयमिष्यत इत्यर्थः ॥ ८२ ॥

विशिष्टसम्बन्धगतावभासतोऽ-
ज्ञानस्य सम्बन्ध इहाप्यवारितः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्स्थे स्वरूपेऽतिविशुद्धवस्तुनि
नातोऽप्रतीताज्ज्ञतमःप्रकल्पनम् ॥ ८३ ॥

यत्तूक्तम्—'ब्रह्माऽज्ञम्' इति प्रतीत्यभावादज्ञानस्याप्यज्ञानसत्त्वे च प्रमाणवेद्यत्वप्रसङ्ग इति, तत्राह—विशिष्टेति। अज्ञानस्य विशिष्ट-सम्बन्धप्रतिभासे तद्गतस्वरूपेणापि सम्बन्धप्रतिभासस्य दुर्वारत्वादतो नाप्रतीताज्ञानकल्पनेत्यर्थः ॥ ८३ ॥

अज्ञातताभावत आत्मकल्पिता-
ज्ञानस्य मिथ्याप्रतिभासरूपिणः ।
प्रमाणवेद्यत्वमसङ्गतं ततो
न मानमत्र प्रतिभासतः पृथक् ॥ ८४ ॥

नापि प्रमाणवेद्यत्वप्रसङ्गस्तस्येत्याह—अज्ञाततेति। अज्ञातताया अभावत इति च्छेदः ॥ ८४ ॥

सार्वज्ञ्यसिद्धिः परमात्मनः सतोऽ-
विद्याश्रयत्वाच्छ्रुतिरप्यबाध्यगीः ।
सार्वज्ञ्यगा सापि महेशितुर्यतो
मायाविनः प्राह न शुद्धवस्तुनः ॥ ८५ ॥

यत्पुनरुक्तम्—ब्रह्माज्ञानपक्षे सर्वज्ञश्रुतिव्याकोपः स्यादिति, तत्राह—सार्वज्ञ्यसिद्धिरिति। अज्ञानाश्रयत्वादेव सर्वज्ञत्वसिद्धिरित्यर्थः ॥ ८५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न वास्त्यविद्याश्रयतां विना विभोः
शुद्धाद्वयस्य प्रकृतेः परस्य तत् ।
सार्वज्ञ्यमध्यस्तजगद्गतं न वाऽ-
सार्वज्ञ्यमप्यत्ययसंसृतिप्रदम् ॥ ८६ ॥

अतोऽस्त्यविद्याश्रयताप्यलङ्कृतिः
सर्वज्ञभावं प्रति चिद्घनात्मनः ।
स्वतस्तु सर्वव्यवहारवर्जिते
निरञ्जने नास्ति गिरां प्रवर्त्तनम् ॥ ८७ ॥

नह्यविद्याश्रयत्वमन्तरेण तत्परिकल्पितप्रपञ्चविषयं सर्वज्ञत्वमस-
र्वज्ञत्वं वा सम्भवतीत्याह—न वेति । अतो नेदं दूषणम्; प्रत्युत भूषण-
मित्यभिप्रेत्याह—अत इति । तत्र हेतुः—स्वत इति ॥ ८६—८७ ॥

अज्ञानमप्यावरणात्मकं यतोऽ-
भ्युपेयते संसृतिमूलकारणम् ।
नापेक्षते स्वाश्रयगोचरद्वयो-
र्भेदं हि वस्त्रादिवदेव तत्ततः ॥ ८८ ॥

न चाश्रयाविषयभेदापेक्षमज्ञानमावरणमात्रत्वात्तस्येत्याह—अज्ञा-
नेति। अज्ञानं ह्यावरणमभ्युपगम्यते, "अज्ञानेनावृतं ज्ञानम्" (गी०
५।१५) इति स्मृतेः । अतो वस्त्रादिवदाश्रयमेव आवृणोत्यज्ञानम्,
नान्यदित्यर्थः ॥ ८८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथा तमो देशविशेषमाश्रितं
स्वेनावृणोत्येवमिदं क्रियोज्झितम् ।
अज्ञानमाश्रित्य चिदद्वयं पदं
तदा वृणोतीति भिदां न कांक्षति ॥ ८९॥

एतद् दृष्टान्तेन द्रढयति—यथेति । यथा तमः प्रदेशविशेषमाश्रित्य तमेवावृणोति, एवमज्ञानमप्यक्रियात्मकत्वाच्च न विषयात् पृथग्भूतमाश्रयमपेक्षते इत्यर्थः ॥ ८९ ॥

यत्कस्य कस्मिन्निति भेद इष्यते
तदन्यसापेक्षतयास्ति न स्वतः ।
द्वयानपेक्षा स्थितिरस्ति वस्तुतो
यथोच्यते सा गतिपर्युदासतः ॥ ९० ॥

यच्चोक्तम्—कस्य कस्मिन्नज्ञानमिति स्वाश्रयविषयभेदापेक्षमज्ञानं प्रतीयते इति, तत्राह—यदिति । तदपि द्वयसापेक्षज्ञानपर्युदासेनोच्यमानत्वादेव न स्वत इत्यर्थः । तत्र दृष्टान्तमाह—यथेति । यथा द्वयसापेक्षगमनपर्युदासेनागमनशब्देनोच्यमाना स्थितिर्द्वयानपेक्षापि द्वयसापेक्षवत् प्रतिभाति कस्य कस्मिन्नगमनमिति, तथेहापि द्रष्टव्यमित्यर्थः ॥ ९० ॥

तस्मादखण्डैकरसं चिदद्वयं
स्वाज्ञानयोगात् प्रतिबिम्बबिम्बवत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भात्याश्रयादेव न वस्तुतस्तथा
दर्शादियोगादिव वक्तृबिम्बनम् ॥ ६१ ॥

तस्मादाश्रयविषयभेदानपेक्षमेवाज्ञानमेकाश्रयविषयमिति सिद्धमि-
त्युपसंहरति—तस्मादिति । तस्मादखण्डैकरसमेव ब्रह्मचैतन्यमज्ञान-
सम्बन्धादेव दर्पणसम्बन्धादिव मुखं बिम्बप्रतिबिम्बस्वरूपेण विषय-
ाश्रयवच्च भातीत्यर्थः ॥ ६१ ॥

उपाधिरेकस्तत एक एव स
जीवो निजाज्ञानवशेन कल्पितान् ।
अनेकजीवान् प्रतिभासदेहिनः
पश्यत्यबोधेऽपगते न पश्यति ॥ ६२ ॥

ततः किमित्यत आह—उपाधिरिति । ततश्चैकोपाधिसम्बन्धा-
देक एव जीवः । स खलु स्वाज्ञानपरिकल्पितानन्तजीवनिर्भासान्
पश्यति । स्वात्मज्ञानेन अज्ञानेऽपगते न पश्यति जीवभेदानित्यर्थः ।
उक्तम्—
स्वाज्ञानादीशजीवादिभावाक्रान्तं जाग्रत्स्वप्नसुप्तीर्बिभर्ति ।
ज्ञानेऽज्ञाततायां निवृत्तौ नान्यो जीवो नास्ति वा ज्ञानमन्यत् ॥"
ति ॥ ६२ ॥

आ चात्मबोधं गुरुशिष्यदेवता-
विमुक्तबद्धाद्यखिलं व्यवस्थया ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सम्पद्यते स्वप्न इवावभासनं
युक्त्यैकजीवात्ममते यथातथम् ॥ ६३ ॥

बद्धमुक्तादिव्यवस्थाऽप्यज्ञानकालिक्येवेत्याह—आ चेति। तदेवं जीवभेदावभासादाप्रबोधात् स्वप्नावस्थायामिव गुरुशिष्यबद्धमुक्तजीवेश्वरादिसकलव्यवस्थाप्रतिभासोऽपि सम्पद्यते यथायोग्यमित्यर्थः ॥ ६३ ॥

नानेकजीवात्ममते परस्परं
जीवात्मनां स्यात् प्रतिभाससम्भवः।
सर्वोऽप्यविद्यापरिकल्पिता यतोऽ-
प्येकात्मनो नैषु तमोऽपि सम्भवेत् ॥ ६४॥

प्रत्युतानेकजीववादे व्यवस्थानुपपत्तिरित्याह—नेति। न चानेकजीवपक्षे जीवानां परस्परं प्रतिभासो घटते, सर्वेषामेकाज्ञानपरिकल्पितत्वेन एकं प्रत्यवभासमानत्वे सति तेषां तदज्ञानपरिकल्पितत्वात् न तेष्वज्ञानसम्भवः। ततस्तान् प्रत्यसौ नावभासेत। एवं प्रतिजावमन्योन्यप्रतिभासो न स्यादित्यर्थः ॥ ६४ ॥

शुकादिमुक्तिश्रुतिरद्वये परा
न जीवभेदे सफलाभिधायिनी।
न चैकमुक्तौ सकलस्य मुक्तता
न जीव नानात्वमिहेष्यते यतः ॥ ६५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत एव 'शुको मुक्तो वामदेवो मुक्तः' इत्यादिश्रुतिस्मृतीतिहास-
पुराणानि एकजीवमुक्तेरर्थवाद इत्यभिप्रेत्याह—शुकादीति । न
चैकजीवमुक्तौ सर्वमुक्तिप्रसङ्गः, अनेकजीवानभ्युपगमादित्यर्थः ॥ ९५ ॥

कोऽसौ स जीवस्त्विति नास्ति संशयो
यस्यास्ति सन्देह इहैष एव सः ।
ततः प्रवृत्तिश्रवणादिसाधने
तज्जात्मबोधेन स एव मुच्यते ॥ ९६ ॥

ननु कोऽसौ जीव इत्यनिश्चये कथं श्रवणादिसाधने प्रवृत्तिर्मुमुक्षो-
रित्यत्राह—कोऽसाविति । कोऽसावेको जीव इत्यपि सन्देहो न
कार्यः, यस्येयं विचिकित्सा सोऽहमेको जीव इति तस्य निश्चयोपपत्तेः ।
न च सर्वेषामस्ति विचिकित्सेति शङ्क्यम्, स्वप्नदृष्टजीवान्तरवदन्येषा-
मसत्त्वस्यैव दर्शितत्वादित्यर्थः ॥ ९६ ॥

तस्मादविद्यापरिकल्पितो विभो-
रेकस्य जीवेश्वरता जगद्भ्रमः ।
चिदात्मबोधोदयबाधितश्च स-
न्नासीन्न चास्त्येष न वा भविष्यति ॥ ९७ ॥

तस्मादेकाविद्यापरिकल्पितोऽयं जीवेश्वरत्वजगदाकारभेदावभास
इति फलितमित्याह—तस्मादिति । स्वात्मबोधोदयेन बाधितः सन्
एष भ्रमः कालत्रयेऽप्यत्यन्ताभावप्रतियोगितया नासीत्, न चास्ति,
न वा भविष्यतीति निश्चयगोचरतामापद्यते इत्यर्थः ॥ ९७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनीशया शोचति मोहमागत
एकामजामेक इति श्रुतिर्जगौ ।
एकास्त्यविद्या तदुपाधिका विभु-
र्जीवो भवन्नेक इहास्ति विभ्रमी ॥ ९८ ॥

न चैकजीवे प्रमाणाभावोऽपि शङ्क्यः, "अनीशया शोचति मुह्यमानः" (मु० २ । ३) "अजामेकाम्" (श्वे० ४ । ५) इति "अजो ह्येको जुषमाणोऽनुशेते" (श्वे० ४ । ५) इत्यादिश्रुतिस्तस्यैकत्वानुवादिनीत्यभिप्रेत्याह—अनीशयेति । उपाधिरप्येक एव तदुपहितो जीवो भवन्नप्येक एव भवतीत्यर्थः ॥ ९८ ॥

शोकं तरत्यात्मविदित्यपि श्रुते-
र्ब्रह्मैक्यविद्यास्त्यपवर्गसाधनम् ।
स्वाज्ञानजः शोकमयो भवाम्बुधिः
स्वात्मावबोधेन स तीर्यतेऽञ्जसा ॥ ९९ ॥

ननु ब्रह्मगताविद्यास्तीत्यत्र किं प्रमाणम् ? श्रुतिस्तदर्थापत्तिश्चेति ब्रूमः, श्रुतिस्तावत्—"अनृतेन हि प्रत्यूढाः" (छा० ८ । ३ । २) "त इमे सत्याः कामा अनृतापिधानाः" (छा० ८ । ३ । १) "अनीशया शोचति मुह्यमानः" (मु० २ । ३) इत्याद्याः "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" (गी० ५ । १५) इति स्मृतिः तदर्थापत्तिः "तरति शोकमात्मवित्" (छा० ७ । १ । ३) "ब्रह्म वेद ब्रह्मैव भवति" (मु० २ । ९) इत्यादिश्रुतिषु ब्रह्मविद्यामोक्षसाधनत्वेन श्रूयते । सा चेयमनुपपन्ना स्वनिवर्त्यतद्गताविद्यामन्तरेणेत्यभिप्रेत्याह—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऋमिति । स्वस्वरूपं शुद्धं ब्रह्म तद्गताज्ञानजन्यः शोकोपलक्षितः
नारसिन्धुः । स च स्वात्मावबोधेन तीर्यतेऽनायासेन । तथा च
ज्ञानमात्रनिवर्त्याविद्यातत्कार्यानर्थजालान्यथानुपपत्त्या ब्रह्मण्य-
ज्ञास्तीति गम्यते इत्यर्थः ॥ ९९ ॥

स्वयंप्रकाशत्वमखण्डवस्तुनः
स्वभावसिद्धं श्रुतियुक्तिनिश्चितम् ।
न तद्विरोध्यात्मनि कल्पितस्य चाऽ-
ज्ञानस्य तत्साक्षितयाऽस्ति साधकम् ॥१००॥

ननु स्वयंप्रकाशं ब्रह्म, तत्र कथमविद्या सम्भवेदित्याशङ्क्य
किमिह स्वयंप्रकाशस्याज्ञानविषयत्वं पर्यनुयुज्यते ? किं वा तदाश्रय-
त्वम्? न च तावत् स्वयंप्रकाशत्वमज्ञानविरोधि, स्वयंप्रकाशेऽपि
...ने ज्ञानविपर्यासदर्शनात् । अपि च ज्ञानस्वरूपं चेदिष्टम्,
स्वयंप्रकाशविषयमेव, जडे चाज्ञानकृत्याभावात् । जडस्य स्वयमनवभा-
समानत्वादेवाप्राप्तावभासरूपत्वात् तत्राज्ञानस्य तदवभासविरोधित्वात् ।
न च जडविषयप्रमाणावभासे विरोधितयाऽज्ञानमवतिष्ठते, स्वयं
...वैयर्थ्यात् । न च जडेऽज्ञानाभावादेव प्रमाणप्रवृत्तिरपि सम्भवति ।
यदज्ञानं चेदस्ति, तत्स्वतःसिद्धावभासविरोधिस्वयंप्रकाशविषयमेव ।
प्रमाणमपि तन्निवर्तनेन तत्रार्थवत् । व्यवहारावस्थायान्तु जडस्य स्वयं-
प्रकाशेऽध्यस्तत्वात्तद्विषयमेव प्रमाणम् । तन्निवर्त्यश्चाज्ञानं तदभेदाज्जड-
मिवावभासते इति न व्यवहारविरोध इत्यभिप्रेत्याह—स्वयंप्रका-
शमित्यादिद्वाभ्याम् । न तावदात्मनः स्वयंप्रकाशत्वे विवादः ।
...स्वभावसिद्धं श्रुत्यादिभिर्विनिश्चितम् । तत्स्वयंप्रकाशत्वमात्मनि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वस्मिन् कल्पितस्याज्ञानस्य न विरोधि; प्रत्युत तस्याज्ञानस्य साक्षितया साधकमस्तीति योजना ॥ १०० ॥

जडे न चाज्ञानकृतावृतिर्यतः
स्वयंप्रकाशे तत एव तिष्ठति ।
स्वभावमावृत्य चिदात्मनः स्वयं
प्रमाणबाध्यं व्यवहारगोचरे ॥ १०१ ॥

जडे इति । यतो जडे चाज्ञानकृतावृतिर्नास्ति, उक्तरीत्या तत्रातिशयाभावात् । ततस्तस्मात् स्वयंप्रकाशे एव तदज्ञानं तिष्ठति—तमेवाश्रित्य विषयीकरोतीत्यर्थः । एतदेव विवृणोति—स्वभावमिति । चिदात्मनोऽद्वयानन्दस्वभावमावृत्य तिष्ठतीत्यनुषज्यते । अत एव व्यवहारगोचरे तदज्ञानं प्रमाणबाध्यं स्वयं स्वभावादेव भवति, तस्य तेन सह विरोधादित्यर्थः । तथा चाज्ञानाश्रयत्वविषयत्वपर्यनुयोगः स्वयंप्रकाशे न सम्भवति, नयतोऽज्ञानस्योक्तरीत्या आश्रयविषयभेदाभावात् । यद्विषयं तदाश्रयमेवेति स्वयंप्रकाशस्यैव युक्तमज्ञानाश्रयत्वम् । जडस्य तु न क्वचिदज्ञानाश्रयत्वं दृष्टमुपपन्नं वेति महद्वैषम्यमिति भावः ॥ १०१ ॥

अतः प्रमाणं श्रुतिमौलिगीश्च त-
न्निवर्त्तनेनैव फलान्विता भवेत् ।
तदेवमज्ञानमखण्डसंश्रयं
तद्गोचरं सिद्धमिति श्रुतेर्नयात् ॥ १०२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्माद्ब्रह्मविषयं ब्रह्माश्रयमेवाज्ञानम्, तेन ब्रह्मैव संसरति ब्रह्मैव मुच्यते इत्युपसंहरति—अत इति । यतो ब्रह्माश्रयं ब्रह्मविषयमज्ञानम्, अतस्तन्निवर्त्तकब्रह्मसाक्षात्कारजनकप्रमाणं श्रुतिमौलिगीश्च तन्निवर्त्तनेनैव ब्रह्माश्रयब्रह्मविषयाज्ञाननिवर्त्तकसाक्षात्कारोत्पादनेनैव फलान्विता अर्थवती भवेदित्यर्थः । तदेवं ब्रह्मज्ञाननिवर्त्त्यान्यथानुपपत्त्या तदाश्रयं तद्विषयमेवाज्ञानमिति सिद्धं श्रुतियुक्तिभ्यामित्यर्थः ॥ १०२ ॥

नन्वस्तु शुद्धात्मचिदाश्रयं तमो
न तन्निवृत्तिः परमात्मविद्यया ।
किमात्मविद्या परमार्थवस्तु वाऽ-
निर्वाच्यरूपा प्रथमे विचारणा ॥ १०३ ॥

तदेवं ब्रह्माश्रयविषयमज्ञानं प्रसाध्य तस्य ब्रह्मज्ञानैकनिवर्त्त्यत्वमुपपादयितुं पूर्वपक्षमुत्थापयति—नन्विति । तत्राज्ञाननिवृत्तौ बहवो दुर्वासितान्तःकरणाः सन्तोऽनाघ्रातपरमार्थतत्त्वज्ञाना ब्रह्मज्ञाननिमित्ताज्ञाननिवृत्तिमपलपन्ति । तदपलापनप्रकारं पूर्वपक्षमुखेन दर्शयति—नन्विति ॥ १०३ ॥

विद्या सती ब्रह्म सदस्ति तत्ततो
ह्यद्वैतसिद्धान्तविरोध आपतेत् ।
ब्रह्मैव विद्येत्यपि नैव शोभते
तन्नित्यमज्ञानलयोऽपि सर्वदा ॥ १०४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किं ब्रह्मज्ञानं परमार्थवस्तु ? किं वाऽनिर्वाच्यम् ? इति विकल्प्य आद्यं दूषयति—विद्येति। ब्रह्मतज्ज्ञानयोरपि सत्यत्वादद्वैतसिद्धान्तभङ्गः। न च ब्रह्मैव तत्त्वज्ञानम्, तस्य नित्यत्वात्, अज्ञानस्य नित्यनिवृत्तिप्रसङ्गादित्यर्थः ॥ १०४ ॥

तथा च तद्धेतुकसंसृतिप्रथा
न स्यात्तथा शास्त्रविचारणा वृथा ।
सर्वप्रमाणैरपि ते विरोधतो
मुक्तेरभावोऽपि तव प्रसज्ज्यते ॥ १०५ ॥

अस्तु नित्यनिवृत्तिरज्ञानस्य, ततः किं स्यात् ? इत्यत आह—तथा चेति। तद्धेतुकसंसृतिप्रथा अज्ञानोपादानकसंसारभानं न स्यात्। तथा शास्त्रविचारणापि तस्य नित्यनिवृत्तत्वे वृथा भवेत्। सर्वप्रमाणसिद्धप्रपञ्चभानापलापिनस्तव तैः सह विरोधोऽपि। अपि च तवाभिमतमुक्तेरपि अभाव एव प्रसज्ज्येत, संसारमुक्त्योरविशेषादित्यर्थः ॥ १०५ ॥

अन्त्ये मृषारज्जुफणिस्रगादिवत्-
स्यादप्रमाणं न तमोनिवर्त्तिका ।
विद्योद्भवाज्ञाननिवृत्तिरप्यतो
भिन्नाऽथवा ब्रह्मवपुर्मता तव ॥ १०६ ॥

ब्रह्मज्ञानमनिर्वाच्यमिति पक्षं दूषयति—अन्त्ये इति। किञ्च, अज्ञाननिवृत्तिरपि विकल्पनीया। सा किं सती ? किं वाऽसती ?

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[…]ञ्यानिर्वाच्येति । यदि सती, किमात्मनो व्यतिरिक्ता ? अव्य-[…]रिक्ता वा ? उभयरूपा वेति विकल्पार्थः ॥ १०६ ॥

सती स्वतः सिद्ध्यति सा न साधनैः
कृत्यं न वा शास्त्रमनर्थकं च ते ।
भिन्ना सती चेत् क्षतिरद्वयस्य ते
मृषा यदाज्ञानमनन्ततां व्रजेत् ॥ १०७॥

आत्मनोऽव्यतिरिक्ता सतीति पक्षं दूषयति—सतीति । आत्मनो […]सिद्धत्वादज्ञानस्य नित्यनिवृत्तेस्तन्निमित्तः संसारप्रतिभासो न […]। अतश्च सर्वप्रमाणविरोधो मोक्षशास्त्रानारम्भश्च प्रसज्येत । […]रिक्ता सती चेत्, द्वैतवादप्रसङ्गादद्वैतमतक्षतिः, ब्रह्मणस्तदज्ञान-[…]पेश्च द्वयोर्वस्तुत्वाभ्युपगमात् । व्यतिरिक्ता मृषा चेत्, तर्हि […]योरप्यज्ञानमनन्ततां व्रजेदित्यर्थः ॥ १०७ ॥

द्वयात्मिका चेद्युगपन्न सम्भवे-
द्विरोधतः सा तिमिरप्रकाशवत् ।
न चास्त्यनिर्वाच्यवपुर्न दृश्यते
कार्यं क्वचित् कारणमन्तरा यतः ॥१०८॥

उभयरूपाज्ञाननिवृत्तिरिति पक्षं दूषयति—द्वयात्मिकेति । आत्मनो […]भिन्ना सा ज्ञाननिवृत्तिश्चेत्, तदा निरूपणीयम्—किं येन […] भेदस्तेनैव रूपेणाभेदोऽपि ? आहोस्विद्रूपान्तरेण ? आद्ये […]भेदयोर्भेदाभावादद्वैतप्रसङ्गः, अज्ञानस्य नित्यनिवृत्तिप्रसङ्गो वा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात्। रूपान्तरेणेति चेत्, तयोरपि रूपयोर्भेदे भेदाभेदौ भिन्नाश्रयौ स्याताम्। अभेदे तु भेदाभेदयोरभेदत्वप्रसङ्गः। भेदाभेदाभ्युपगमे तु तत्रापि रूपान्तरकल्पनायामनवस्था प्रसज्ज्येत। अतो नाज्ञाननिवृत्तिः सती। अथवाऽनिर्वाच्या सेति तत्राह—न चेति। सा किमज्ञानोपादाना? उतानादिरिति। नह्यनिर्वाच्यं कार्यं क्वचिद्देशे काले वा कारणमन्तरा यतो दृश्यते, अतोऽत्रापि कारणमन्तरा अनिर्वाच्या सा न च स्यादित्यर्थः॥ १०८॥

अज्ञानजाऽनिर्वचनीयशब्दिता
यदीष्यतेऽज्ञाननिवृत्तिरप्यसौ।
तद्धेतुरज्ञानमपि स्थितं तदा
कार्ये स्थिते नश्यति नैव कारणम्॥ १०९॥

प्रथमं विकल्पमनूद्य दूषयति—अज्ञानजेति। तदा तद्धदुपादानमज्ञानमप्यवतिष्ठेत, नहि कार्येऽवतिष्ठमाने कारणं निवर्त्तमानं क्वचिद् दृष्टमित्यर्थः। आत्मोपादानेति चेत्, तदात्मनः परिणामित्वप्रसङ्गः, अज्ञाननिवृत्तेश्च सत्योपादानत्वे सत्यत्वादद्वैतवादभङ्गप्रसङ्गश्चेत्यपि द्रष्टव्यम्॥ १०९॥

सा चेदनादिर्भवतेष्यते तदा
संसारभानं न भवेत् कदाचन।
न चाऽनुसर्त्तव्यमखण्डबोधकं
शास्त्रं वृथा साधनजातमप्यहो॥ ११०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साऽनादिरिति तृतीयं विकल्पमनूद्य दूषयति—सा चेदिति । ज्ञानानिवृत्तिरनादिरभिप्रेता यदि, तर्हि नित्यनिवृत्तेरज्ञानस्य संसारानुपलब्धिः शास्त्रानारम्भश्चेत्युक्तदोषप्रसङ्ग इत्यर्थः ॥ ११० ॥

तस्मान्न ते ज्ञाननिवृत्तिरद्वया-
ववोधतोऽतोऽपि वृथा परिश्रमः ।
स्वज्ञानसिद्धाविति तत्र कथ्यते
वेदान्तसिद्धान्तमतं निरत्ययम् ॥ १११ ॥

तस्मान्न ब्रह्मज्ञानादज्ञाननिवृत्तिरवकल्पत इत्युपसंहरति—तस्मादिति । स्वज्ञानसिद्धौ स्वात्मसाक्षात्कारमुद्दिश्य श्रवणादिसाधने प्रवृत्तिस्तव मते वृथा श्रम एव स्यादित्यर्थः । इत्येवं पूर्वपक्षे प्राप्ते समाधानं प्रतिजानीते—तत्र कथ्यते इति । स्वमतस्य प्रबलप्रमाणकत्वं दर्शयति—वेदान्तेति ॥ १११ ॥

तरति सकलशोकं स्वात्मविभ्रान्तिमूलं
तिमिरजलधिपारं तारयत्यात्मबोधात् ।
इह पुनरवसाने विश्वमायानिवृत्तिः
श्रुतिरिति वदतीतो बोधतोऽज्ञानहानम् ॥११२॥

प्रपद्यन्ते ये मां हृदिगतमनन्तं हरिमजं
तरन्त्येनां मायां भवजलधिमूलां सपदि ते ।
अविद्यां मायाख्यां तरति विततां कृष्णधिषणः
स्मृतिः प्राहाऽविद्याक्षयमपि निजानन्दमतितः॥११३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रमाणराजवाक्यान्युदाहरति—तरतीति। "तरति शोकमात्म-वित्" (छा० ७।१।३) "अविद्यायाः परम्पारं तारयसि" (प्र० ६।८) "भूयश्चान्ते विश्वमायानिवृत्तिः" (श्वे० १।१०) इत्याद्याः श्रुतयः "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" (गी० ७।१४) "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः" (गी० ५।१६) "तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते" इत्याद्याः स्मृतयश्चात्मज्ञानादज्ञाननिवृत्तिं दर्शयन्तीति द्वयोर्योजना ॥ ११२—११३ ॥

लोकेऽपि रज्ज्वादिगतप्रमाणजं
ज्ञानं भुजङ्गादिविपर्ययेण तत्।
सहैतदज्ञानमलं निवर्त्तयत्-
प्रदृश्यतेऽतो नयसिद्धमित्यपि ॥ ११४ ॥

तन्निवृत्तौ युक्तिमप्याह—लोक इति। लोके च रज्ज्वादिविषय-प्रमाणज्ञानं सर्पादिविपर्यासेन साकं तदज्ञानं निवर्त्तयद् दृश्यते इति नयसिद्धमपीत्यर्थः ॥ ११४ ॥

श्रुतिस्मृतिन्यायबलेन चिद्घन-
ब्रह्मैक्यबोधोदयमात्रतोऽखिलम्।
सकार्यमज्ञानमपि व्रजेल्लयं
निश्चायते सम्यगिति स्वभावतः ॥ ११५ ॥

ततश्च श्रुतिस्मृतिन्यायैर्ब्रह्मात्मैक्यविज्ञानादेव तद्गताज्ञानस्य तत्कार्येण सह निवृत्तिर्निश्चीयते इत्याह—श्रुतीति ॥ ११५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न च प्रपञ्चस्य मृषात्वहेतुना
ब्रह्मैक्यबोधस्य तदन्तरुत्थितेः ।
मृषाहिविज्ञानवदप्रमाणता
त्वयेति वाच्यं कुत इत्यतः शृणु ॥ ११६ ॥

यत्पुनरुक्तं प्रपञ्चस्य मिथ्यात्वात्तदन्तर्गतत्वाद् ब्रह्मज्ञानस्य रज्जुसर्पज्ञानवदप्रमाण्यान्न तेनाज्ञाननिवृत्तिः, तस्य वस्तुत्वे वाऽद्वैतहानिरिति तत्र दूषयति—न चेति ॥ ११६ ॥

मानस्वरूपस्य न सत्यता भवे-
त्प्रामाण्यहेतुस्तदसत्यता न वा ।
अबाधितज्ञानजनिर्यतो भवे-
द्यत्रैव तत्तत्र भवेत् प्रमाणकम् ॥ ११७ ॥

तत्र हेतुमाह—मानेति । यतः प्रमाणस्वरूपस्य सत्यत्वमसत्यत्वं न प्रामाण्याप्रामाण्यहेतुः, किन्तु यद्यत्राबाधितप्रतीतिं जनयति, तत्तत्र प्रमाणमिति प्रमाणविदां स्थितिरित्यर्थः ॥ ११७ ॥

सतः स्वरूपेण घटादिवस्तुनो
यथार्थबोधाजननान्न मानता ।
दैर्घ्यादिधर्म्मस्य मृषात्मकस्य च
वर्णेषु सत्यार्थधियोऽस्ति हेतुता ॥ ११८ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्रोपपत्तिमाह—सत इति। घटादेः स्वरूपेण सत्यस्यापि तदभावे सति प्रमाणत्वादर्शनादित्यर्थः। ननु न स्वरूपसत्यत्वं प्रामाण्यकारणं ब्रूमः, किन्त्वसत्यत्वमप्रामाण्यकारणम्, शुक्तिरूप्यादौ तथा दर्शनादिति तत्राह—दैर्घ्यादीति। वर्णदैर्घ्यादेरसत्यस्यापि सत्यार्थप्रतीतिहेतुत्वदर्शनादित्यर्थः ॥ ११८ ॥

दृष्टान्तवैषम्यमपि त्वया न चाऽऽ-
शङ्क्यं यतस्तत्र न सर्वसाम्यतः।
येनात्मना वर्णधियोऽस्य हेतुता
तेनात्मना स्यात्तदसत्यमेव हि ॥ ११९ ॥

ननु वर्णदैर्घ्यादिस्वरूपेणासत्यं न भवति, किन्तु [वर्णधर्मत्वेन ?]। तच्च न(?) वर्णात्मत्वमात्रं सत्यमिति तत्राह—दृष्टान्तेति। तथापि तस्य येनात्मना वर्णप्रतिपत्तिहेतुत्वं तेनात्मना तदसत्यमेवेति योजना ॥ ११९ ॥

दैर्घ्यादिमात्रं नहि वर्णबुद्धिकृत्
किन्त्वस्ति तद्धर्म्मतयैव कारणम्।
तच्चास्त्यसत्यं सकलस्य सम्मतं
तथाऽऽत्मविद्यास्ति मृषापि सत्परा ॥ १२० ॥

तत्रोपपत्तिमाह—दैर्घ्यादीति। नहि दैर्घ्यादिमात्रस्य वर्णप्रतिपत्तिहेतुत्वं किन्तु वर्णधर्मत्वेन। तच्चासत्यमिति सर्वेषां सम्प्रतिपन्नं तथेहापीत्यर्थः ॥ १२० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अख्यातिवादेऽप्यविवेकतो यथा
भ्रमं विना सत्यपदार्थगा प्रथा ।
तथास्त्वनिर्वाच्यमपि प्रमाणजं
ज्ञानं परात्मैक्यपदं न नः क्षतिः ॥ १२१ ॥

नहीदमदृष्टचरमित्याह—अख्यातिवादे इति । अख्यातिपक्षे संसर्गभ्रमानभ्युपगमेऽप्यविवेकात् सत्यवस्तुप्रतिपत्तिरिष्टा, तद्वदनिर्वचनीयमपि सत्यवस्तुविषयं विज्ञानं प्रमाणरूपमुपपद्यते इत्यर्थः ॥१२१ ॥

अबाधितप्रत्ययसाधकत्वतो
धियः प्रमात्वं न तु सत्यरूपतः ।
स्रक्सर्पबोधस्य तु बाध्यरूपतोऽ-
प्रामाण्यमस्ति प्रमितेरकारणात् ॥ १२२ ॥

नन्वसत्यमपि स्वरूपेण ज्ञानकारणं प्रमाणज्ञानं जनयतु नाम । तत्तु न क्वचिदसत्यभूतं प्रमाणं दृष्टम्; प्रत्युताप्रमाणमेव रज्जुसर्पाज्ञानमुपलभामहे इति तत्राह—अबाधितेति । अबाधितप्रतीतिजनकत्वादेव ज्ञानस्य प्रमाण्यम्, न स्वरूपसत्यत्वेन । स्रजि पुष्पमालायां सर्पज्ञानस्य तु बाध्यविषयत्वेन प्रमितिजनकत्वाभावादप्रामाण्यमित्यर्थः ॥ १२२ ॥

सर्वप्रपञ्चस्य मृषात्वबोधनात्
श्रुतिस्मृतिस्वप्ननिदर्शनादिभिः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतिस्मृतिन्यायबलेन सद्धियां
सिद्धप्रमात्वस्य न चाऽस्त्यपह्नवः ॥१२३॥

तस्माज्ज्ञानानां प्रामाण्यमबाधितप्रत्ययजनकत्वेनैव, न स्वरूपसत्यत्वेनेत्याह—सर्वेति। सर्वस्य ज्ञानज्ञेयादिलक्षणस्य प्रपञ्चस्य स्वप्नादिदृष्टान्तेन श्रुतिस्मृतिन्यायशतबलेन च मिथ्यात्वावगमात् सद्धियां सम्यग्ज्ञानानां सिद्धं यत् प्रमात्वं प्रामाण्यं तस्यापह्नवो नास्ति। स्वरूपेण ज्ञानानां मिथ्यात्वं प्रामाण्यञ्च श्रुतिस्मृतिन्यायानुभवसिद्धं नापलपितुं शक्यमित्यर्थः ॥ १२३ ॥

अज्ञानविध्वस्तिगता विकल्पनाः
सत्यादिरूपा भवतानुभाविताः।
वृथा श्रमः खे लगुडप्रहारव-
दन्यप्रकाराभ्युपगम्यते यतः ॥ १२४ ॥

यदप्युक्तमज्ञाननिवृत्तिः सती किं वा सतीत्यादि, तदखिलमाकाशमुष्टिविदलनमिवायोग्यविषयमनवसरदुष्टं विकल्पजालमित्यभिप्रेत्याह—अज्ञानेति। अज्ञानविध्वस्तिरविद्यानिवृत्तिस्तत्र गतास्तद्विषया या विकल्पनाः सत्यसती वेत्यादिरूपा भवता भेदवासितान्तःकरणेनानुभाविता उत्प्रेक्षिताः, स वृथा श्रम एव। तव जात इति शेषः। तत्र दृष्टान्तः—खे आकाशे लगुडादिप्रहारवत्। कुतो यतो यस्मादज्ञाननिवृत्तिः सदसत्सदसदनिर्वचनीयप्रकाराऽस्माभिरभ्युपगम्यते, किन्त्वन्यप्रकारा पञ्चमप्रकाराऽभ्युपगम्यते। सदसदादिप्रकाराः किल निवृत्तयो भावाभावयोरेव दृष्टाः। अज्ञानं पुनः सदसद्विलक्षणम्, अतस्तन्निवृत्तिरपि तदनुसारिणी युक्तेत्यर्थः ॥ १२४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपद्वयाङ्गीकृतितोऽपि युक्तिभि-
रज्ञानबाधस्य न चास्ति दूषणम् ।
स बाधको बाधतयाऽखिलस्य च
बाध्योऽपि बाध्यात्मजगत्स्वरूपतः ॥१२५॥

प्रकारान्तरेणापि तन्निवृत्तिं दर्शयति—रूपद्वयाङ्गीकृतित इति । वृत्त्यपरपर्यायो बाधस्तस्य रूपद्वयाङ्गीकारात्, तत्र बाधत्वरूपेण खिलस्याज्ञानतत्कार्यस्य बाधको भवति, बाध्यात्मकजगत्स्वरूपेण स्यापि जगदन्तःपातित्वेन बाध्यत्वमस्तीति नानुपपत्तिरित्यर्थः॥१२५॥

यथा श्रुतिर्द्वैतनिषेधकारिका
श्रुतित्वरूपेण जगन्निषेधिका ।
जगत्स्वरूपेण निषेध्यतां स्वयं
व्रजेत्तथाऽज्ञाननिवृत्तिरिष्यताम् ॥ १२६ ॥

इममेवार्थं दृष्टान्तेन द्रढयति—यथेति । यथा द्वैतनिषेधकर्त्री श्रुतिः "नेह नानास्ति किञ्चन" इत्यादिरूपा श्रुतित्वरूपेण प्रमाणमूर्द्धन्यरूपेण सकलस्य नानाशब्दवाच्यस्य अज्ञानतत्कार्यस्य जगतो निषेधिका भवति, स्वयमपि श्रुतिर्नाम जगदन्तःपातित्वेन निषेध्यताम्—निषेधप्रतियोगितां व्रजेत् । तथाऽज्ञाननिवृत्तिरपीष्यतामिति न कोऽपि दोषः इत्यर्थः ॥ १२६ ॥

यत्तानुरूपो बलिरित्यतोऽपि चाऽ-
ज्ञानानुरूपास्य निवृत्तिरिष्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथाऽस्त्यनिर्वाच्यमिदं तथैव साऽ-
निर्वाच्यरूपास्तु न नः क्षतिर्मनाक् ॥१२७॥

यद्वा, "यक्षानुरूपो बलिः" इति न्यायेनाज्ञानस्यानिर्वचनीयतां ब्रह्मज्ञानादज्ञाननिवृत्तिश्च श्रुतिस्मृतिन्यायैरुपलभ्यानिर्वचनीयाज्ञानानुरूपेण सदसदादिप्रकारविलक्षणामज्ञाननिवृत्तिं परिकल्पयाम इति नाज्ञाननिवृत्त्यभावः, नापि द्वैतप्रसङ्ग इत्यभिप्रेत्याह—यक्षानुरूप इति ॥ १२७ ॥

यद्वात्मरूपाऽस्तु निवृत्तिरस्य साऽ-
धिष्ठानरूपः परिकल्पितक्षयः ।
प्राक् सिद्धभावस्य विलक्षणाकृति-
र्निवृत्तिरिष्टा किल पश्चिमा यतः ॥१२८॥

अथवा आत्मस्वरूपमेवाज्ञाननिवृत्तिरित्याह—यद्वेति । तत्र हेतुः—अधिष्ठानरूप इति । परिकल्पितस्याध्यस्तस्य वस्तुनः क्षयो विनिवृत्तिरधिष्ठानरूपैव किलेति । यतः सर्ववादिसम्प्रतिपन्नं पश्चिमसिद्धभावविलक्षणनिवृत्तित्वं पूर्वसिद्धभावस्यैवेत्यर्थः ॥ १२८ ॥

प्रमाणजा वृत्तिरुदेति पश्चिमा
या तत्र चैतन्यमखण्डमद्वयम् ।
आरूढमेवेदमनादिविभ्रमं
ह्यज्ञानमाबाध्य विराजते स्वयम् ॥ १२९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मभावपरिणतान्तःकरणवृत्त्युपलक्षितरूपेणैव ब्रह्माज्ञाननिवृत्तिः,
…रोपितरूपेण । यथा घटविनाशोपलक्षितमेव भूतलं घटनिवृत्ति-
…भिप्रेत्याह—प्रमाणजेति । या तत्त्वमस्यादिवाक्यजा पश्चिमा
…त्या वृत्तिरुदेति, तत्र तस्यां वृत्तौ अद्वयमखण्डचैतन्यमारूढमेवेद-
…दिविभ्रमं तद्धेतुमज्ञानमावाध्य स्वयं स्वमहिम्नि विराजते । हीति
…श्रुतिविद्वज्जनप्रसिद्धमेतदित्यर्थः ॥ १२९ ॥

अज्ञानबाधादखिलं भ्रमात्मकं
वृत्त्यादिरूपं स्वयमेव नश्यति ।
न तन्निवृत्तौ श्रम इष्यते पृथक्
स्वहेतुनाशे क्व च कार्यसत्यता ॥ १३० ॥

नैतावता ब्रह्मणः सविशेषत्वप्रसङ्ग उपलक्षकान्तःकरणवृत्तेः कारण-
…शेन निवृत्तौ तन्निवृत्त्युपलक्षणाभावाद् ब्रह्मज्ञानादज्ञाननिवृत्ति-
…नश्वरेत्यभिप्रेत्याह—अज्ञानेति । अज्ञानबाधात् सकलकार्यहेतु-
…ज्ञाननिवृत्तेरखिलं वृत्त्यादिरूपं भ्रमात्मकं स्वयमेव हेतुनाशेन
…यति, न तस्य निवृत्तौ पृथक् श्रम इष्यते । तत्रोपपत्तिमाह—स्वहेतु-
…इति ॥ १३० ॥

तस्मान्निजज्ञानत आसमन्ततः
स्वाज्ञानविध्वस्तिरवद्यवर्जिता ।
सिद्धा ततो ब्रह्मविदः स्वभावतो
जीवद्विमुक्तिस्थितिरद्वयात्मना ॥ १३१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मात्तत्त्वज्ञानादज्ञाननिवृत्तिसिद्धिरनवद्येत्युपसंहरति—तस्मादिति । ततोऽज्ञानतत्कार्यविनिवृत्तेर्ब्रह्मात्मविदो 'ब्रह्मैवाहमस्मि' इत्येवं स्वात्मतत्त्वं साक्षात्कृतवतः पुरुषधौरेयस्य स्वभावत एवानायाससिद्धा जीवत एवाद्वयात्मनाऽद्वयानन्दरूपेणावस्थितिलक्षणा मुक्तिरिति योजना ॥ १३१ ॥

नन्वप्यवस्थात्रययोग आत्मनः
स्वाज्ञानतो जीवनमेतदुच्यते ।
मुक्तिस्त्ववस्थात्रययोगकारणा-
विद्यानवच्छेद इहात्मनि स्थितिः ॥१३२॥

एवमज्ञाननिवृत्तिं प्रसाध्याधुना सर्वानर्थनिवृत्त्युपलक्षितस्वस्वरूपसुखाविर्भावलक्षणां जीवन्मुक्तिं प्रसाधयितुं पूर्वपक्षमुत्थापयति—नन्विति । जीवन्मुक्तिरिति प्रतीतिरेव प्रतिषिद्धा । तथा हि—जीवनं नाम आत्मनो निजाज्ञानकृतजागराद्यवस्थात्रयावच्छेद उच्यते । मुक्तिः पुनरवस्थात्रयतत्कारणाविद्यानवच्छेदे सति नित्यनिरतिशयानन्दचैतन्यब्रह्मरूपाविर्भाव इत्यर्थः ॥ १३२ ॥

एवं सतीदं प्रतिषिद्धमेव तद्
यज्जीवतो मुक्तिरितीर्यते त्वया ।
दृष्टं क्व चैक्यं तिमिरप्रकाशयोः
क्व वा सहावस्थितिरेतयोर्भवेत् ॥१३३॥

ततः किमित्यत आह—एवमिति । एवञ्च सति प्रतिषिद्धमेव तदिदं यज्जीवतो मुक्तिरिति त्वया प्रमाणविदा ईर्यते । अत्यसम्भावितमिति दृष्टान्तेनाह—दृष्टमिति ॥ १३३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तयोदूर्ध्वमायन्नमृतत्वमेत्यतः
श्रुतेः शरीरोत्क्रमतो हि योगिनः ।
या ब्रह्मनाड्याऽभिमताऽपवर्गता
विरुद्ध्यते सा वदतोऽन्यथा तव ॥ १३४ ॥

अत्र श्रुतिविरोधोऽपीत्याह—तयेति । "तयोद्ध्वर्मायन्नमृतत्व-मेति" ( क० ६ । १६, छा० ८ । ६ । ६ ) इति ब्रह्मनाड्या शरीरा-त्क्रमतोऽमृतत्वप्राप्तिः श्रुता, जीवन्मुक्तिपक्षे तु विरुद्ध्यते सा श्रुतिः । अन्यथा वदतो विरुद्धवादिनस्तवेत्यर्थः ॥ १३४ ॥

किञ्चात्मबोधस्तिमिरं निवर्त्तयं-
स्तत्कार्यदेहेन्द्रियमानसादिकम् ।
निवर्त्तयेच्चेन्न निवर्त्तते तदाऽ-
नाविद्यकं स्यात्तदिदञ्च वस्तु सत् ॥१३५॥

दूषणान्तरमाह—किञ्चेति । आत्मबोधो ब्रह्मज्ञानं तिमिरमज्ञानं निवर्त्तयंस्तत्कार्यभूतं शरीरेन्द्रियादिकमपि निवर्त्तयेत् । यदि चाज्ञाने निवृत्तेऽपि शरीरेन्द्रियादिकं न निवर्त्तेत, तर्हि तस्याज्ञानकार्यत्वासिद्धेः परमार्थसत्त्वप्रसङ्गः । ततश्चाद्वैतहानिरित्यर्थः ॥१३५॥

न जीवतो मुक्तिरिह प्रमाणतो
भवेदतो युक्तमिदं मतं न ते ।
अत्रोच्यते जीवत एव मुक्तताऽ-
नङ्गीकृते ज्ञानमसम्भवीत्यपि ॥१३६॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नहि जीवत एव मुक्तिर्भवतीत्यत्र किंचित् प्रमाणमपीत्याह—नेति। जीवतोऽवस्थात्रयवतो देहिनः सर्वव्यापारञ्च कुर्वतः इह लोके च मुक्तिः प्रमाणतो न भवेत्। अतो मतमिदं ते तव न युक्तमिति योजना। तदेतत्पूर्वपक्षं दूषयितुं प्रतिजानीते—अत्रोच्यते इति। जीवन्मुक्तेरनङ्गीकरणे विद्यैवानुपपन्ना स्यादित्यर्थः ॥१३६॥

गुरूपदिष्टा परमात्मगोचरा
विद्याप्यसौ सिद्ध्यति शास्त्रयुक्तिभिः।
न तत्त्वसाक्षात्कृतिमन्तरा गुरु-
र्विद्योपदेष्टा भवतीह कश्चन ॥१३७॥

एतदेवोपपादयितुं भूमिकां रचयति—गुरूपदिष्टेति। आचार्योपदिष्टा परमात्मविषयिणी विद्याप्यसौ शास्त्रयुक्तिभिः सम्यग्विचारवतः सिद्ध्यति, "आचार्याद्धैव विदिता विद्या साधिष्ठं प्रापयति" (छा० ४।९।३) "आचार्यवान् पुरुषो वेद" (छा० ६।१४।२) इत्यादिश्रुतिभ्यः, नह्यसाक्षात्कृतब्रह्मभावो विद्यागुरुर्भवतीत्यर्थः ॥१३७॥

ब्रह्मापरोक्षैकरसं परोक्षधी-
र्भ्रमात्मिका तत्र न सम्भवेन्नयात्।
नैवोपदेष्टुं निजतत्त्वदर्शनं
भ्रान्तः समर्थोऽस्ति गुरुः परोक्षधीः ॥१३८॥

नन्वस्तु परोक्षज्ञानवानेवाचार्यः, तेनोपदिष्टा विद्या सेत्स्यतीत्यत आह—ब्रह्मेति। ब्रह्मण्यपरोक्षैकरसे परोक्षज्ञानस्य भ्रान्तित्वान्नहि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्वस्तत्त्वदर्शनमुपदेष्टुमीष्टे । तथा च निखिलजगद्गुरोर्भग-
नोऽनुशासनम्—"उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः"
गी० ४ । ३४ ) इति । तत्र ज्ञानिन इत्युक्तेः परोक्षज्ञानवतो गुरुत्वं
न भूदित्याह—तत्त्वदर्शिन इति । एतावन्मात्राभिधानेऽप्युपाधिवि-
ष्टब्रह्मोपासनया साक्षात्कुर्वन्नपि ब्रह्म विद्यागुरुः प्रसज्येत, तन्मा-
भूदित्याह—ज्ञानिन इति । अतो "ज्ञानिनस्तत्त्वदर्शिनः" इत्युभय-
शेषणेन शब्दप्रमाणजनिता परोक्षज्ञानवन्तमेवाचार्यं दर्शयतीति
रहस्यमिति भावः ॥ १३८ ॥

न च प्रमाणेन चिदद्वयामृते
साक्षात्कृतेऽज्ञानमिहाऽवतिष्ठते ।
अज्ञानमाबाध्य सकार्यमद्वय-
स्वरूपसाक्षात्कृतितो गुरुर्भवेत् ॥ १३९ ॥

तस्माद् दग्धाज्ञाना एव ज्ञानोपदेष्टार आचार्या भवन्तीत्याह—
न चेति । न च प्रमाणेन तत्त्वमस्यादिरूपेण चिदद्वयामृते प्रत्यगभिन्ने
ब्रह्मतत्त्वे साक्षात्कृते सति तत्राज्ञानमवतिष्ठते, अभ्रराह्वादिविनिर्मुक्तमध्यं-
दिनवर्तिमार्त्तण्डमण्डलेऽन्धकारमिवेत्यर्थः । नह्यज्ञानबाधमन्तरा गुरुर्भ-
वतीत्याह—अज्ञानमिति ॥ १३९ ॥

ज्ञानाग्निनाऽज्ञानमले समूलतो
दग्धे हि तत्कार्यमशेषमप्यलम् ।
दग्धं शरीरेन्द्रियमानसादिकं
पश्यत्ययं सत्त्वबहिष्कृतं मुनिः ॥ १४० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बाधितानुवृत्त्या जीवन्मुक्तव्यवहारो नानुपपन्न इत्याह—ज्ञानाग्निनेति। सत्त्वबहिष्कृतमाभासमात्रशरीरमयं जीवन्मुक्तो मुनिस्तत्त्वावगन्ता बाधितानुवृत्त्या पश्यतीत्यर्थः ॥ १४० ॥

यथा पटो दग्ध इहावभासते
पटात्मना कञ्चन कालमेव सः
तथा शरीरेन्द्रियमानसादिकं
दग्धं तदाभासतयाऽवभासते ॥ १४१ ॥

स च दग्धोऽपि कार्यकारणसंघातो दग्धपट इव पटाकारेण कञ्चित् कालं सद्भावाकारेणावभासते इत्याह—यथेति ॥ १४१ ॥

तथाप्यसौ दग्धसमस्तकारणा-
विद्यत्वतो दग्धमिदं समीक्षते ।
नाऽद्वैतनिष्ठस्य विदः क्षतिर्भवेत्
देहेन्द्रियादिप्रतिभासमात्रतः ॥ १४२ ॥

न वा व्यवहाराभासेन जीवन्मुक्तिक्षतिरित्याह—तथापीति । असौ तत्त्ववित् दग्धा समस्ताऽनर्थतत्कारणाविद्या यस्य तस्य भावस्तत्त्वं तस्मादित्यर्थः । स्पष्टमन्यत् ॥ १४२ ॥

तस्मादविद्याकृतसर्वदाहत-
स्तद्धेत्ववस्थात्रयसङ्गवर्जितः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सदाचिदानन्दपदेऽवतिष्ठते
जीवन् विमुक्तो न तु संसृतिं भजेत्॥१४३॥

आभासमात्रावस्थादिसम्बन्धोऽपि वस्तुगत्या तत्त्वविदो नास्तीत्याह—तस्मादिति ॥ १४३ ॥

तस्मात् स जीवन्नपि मुक्त एव स-
न्नाचार्य आत्मैक्यपदोपदेशकः।
ज्ञानिन्ययं जीवनशब्द आमृतं
दग्धे पटेऽप्यस्ति पटप्रयोगवत्॥ १४४ ॥

ब्रह्मविद्याविर्भावतद्धेतुशास्त्रोपदेशान्यथानुपपत्त्या सिद्धा जीवन्मुक्तिरित्युपसंहरति—तस्मादिति। तस्माद् विद्वान् जीवन्नपि मुक्त एव सन्नाचार्यः, नाविद्वान्, नापि बद्धः। तत्र ज्ञानिनि जीवनशब्दप्रयोगोऽयम्, आ अमृतमिति च्छेदः, विदेहमुक्तिपर्यन्तं दग्धपटे पटशब्दप्रयोगवत्। दग्धस्यापि कञ्चित्कालं प्रतिभासनात्। अतो विद्योदयान्यथानुपपत्तिरेव जीवन्मुक्तमेवाचार्यं गमयतीति तात्पर्यार्थः ॥ १४४ ॥

नन्वस्य जीवान्तरदृष्टथभावतो
गुरोः कथं स्यादुपदेशयोग्यता।
स्वाप्नं न कश्चित् प्रतिबुद्ध एव स-
न्नुद्धर्तुमन्यं मतिमान् प्रवर्त्तते ॥१४५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वाचार्यस्यादग्धाविद्यातत्कार्यत्वात् तद्दृष्ट्या जीवान्तरस्याभासत्वाद् आत्ममुक्त्यैव तन्मुक्तिं जानन् कथं तं प्रति विमोक्षार्थं विद्यामुपदिशेत् ? नहि स्वप्नावस्थायामनेकैः सह सागरे निमज्ज्य स्वयं प्रतिबुद्धः पुनस्तानालोचयन्नपि उद्धर्तुमुत्सहते। उपदिशन्नपि मन्मुक्त्यैव मोक्ष्यसे मोक्षाय पृथग् यत्नं मा कार्षीरित्युपदिशेदित्यभिप्रेत्य शङ्कते—नन्विति ॥ १४५ ॥

अत्रोच्यते यावदयं स्वतः सुधी-
निःसंशयात्मात्मनि नाऽवतिष्ठते।
तावन्निजाज्ञानवशेन कल्पितं
गुर्वादिसर्वं व्यवहार ईक्षते ॥१४६॥

न तावदनेकजीवपक्षे काचिदनुपपत्तिः, प्रत्येकमज्ञानानां भेदात् स्वपराज्ञानपरिकल्पितत्वात् साधारणासाधारणप्रपञ्चस्यानेकपुरुषदृष्टेन्द्रजालवन्नष्टानष्टत्वोपपत्तेश्च स्वज्ञानेन स्वाज्ञानमात्रनिवृत्तेरन्यं प्रत्युपदेशोऽर्थवानेवेत्ययं तावदङ्गीकरणवादः। एकजीववादे तु यावन्मुमुक्षोरज्ञस्य न निर्विचिकित्सं विज्ञानमुदयमासादयति, तावत् स्वाज्ञानपरिकल्पितं बद्धमुक्तगुरुशिष्यजीवेश्वरविद्याविद्यादिविभागजातमवभासते। तत्राचार्य्यः शिष्याविद्ययावभासमानो यावदज्ञानमहंप्रत्ययानुवृत्तेः प्रमाणव्यवहारानुवृत्तेः शास्त्रप्रामाण्यादेव जीवन्मुक्तोऽवभासते, न जडतया; नाप्यज्ञाततयेति सर्वमनुपपन्नमित्यभिप्रेत्य समाधानं प्रतिजानीते—अत्रोच्यते इति। यावदयं सुधीः शुद्धान्तःकरणो मुमुक्षुर्निःसंशयात्मा सन् आत्मनि प्रत्यगभिन्ने ब्रह्मणि नावतिष्ठते कृतकृत्यतया गलितकार्यकारणविद्यो न भवति, तावत्कालपर्यन्तं निजाज्ञानेन कल्पितमेव गुर्वादिसर्वमपि व्यवहारगोचरे ईक्षते इति योजना ॥१४६॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स यावदज्ञानमहंप्रतीतितः
प्रमाणमेयादि यथावभासनम् ।
स्वाविद्यया कल्पितमेव सर्वतोऽ-
प्यव्याहतं पश्यतु तेन का क्षतिः ॥१४७॥

एतदेव स्पष्टयति—स इति । स मुमुक्षुर्यावदज्ञानं अहमिति प्रतीतेः [illegible]त्वात् प्रमाणप्रमेयादि स्वाविद्यया कल्पितमेव यथावभासं सर्वतो [illegible]प्रत्यूहमव्याहतं पश्यतु । तेन भ्रान्तव्यवहारेण परमार्थवस्तुनः [illegible] क्षतिः ? न कापीत्यर्थः ॥ १४७ ॥

विद्योपदेष्टा गुरुरप्यविद्यया
शिष्यस्य यस्मादवभासतेऽक्षतः ।
जीवन् विमुक्तो निगमप्रमाणतो
नासम्भवस्तत्र मनागपीक्ष्यते ॥ १४८ ॥

"यक्षानुरूपो हि बलिः" इति न्यायेन गुरुरपि तथैव भवि-[illegible]तीत्याह—विद्येति । विद्योपदेष्टा गुरुरपि शिष्यस्याऽविद्यया [illegible]यादक्षतः उपदेशकरणसमर्थः जीवन् मुक्त एव निगमप्रमाणतोऽ-[illegible]भासते । तत्र जीवन्मुक्तौ न मनागप्यसम्भव ईक्ष्यते दृश्यते इत्य-[illegible]र्थयोजना ॥ १४८ ॥

तेनोपदिष्टं गुरुणा यथातथं
ब्रह्मात्मभावं सकलभ्रमोज्झितम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वविद्यया पश्यति तत्र मास्तु स
जीवान्तरादिभ्रम आन्ध्यजोऽखिलः॥१४६॥

तत्त्वसाक्षात्कारदशायां न जीवान्तरादिविभ्रमो न वा जगद्विभ्रमस्तद्धेतोरज्ञानस्य विनिवृत्तेरित्यभिप्रेत्याह—तेनेति। आन्ध्यजः अज्ञानजन्योऽखिलोऽपि मास्त्वित्यर्थः। स्पष्टमन्यत्॥ १४९॥

यथास्त्यहेर्निर्ल्वयिनीति वेदतो
जीवन् विमुक्तो निरहङ्कृतिर्मुनिः।
स चक्षुरित्यादिगिरा सदेहवा-
निवाप्यदेहो गुरुरस्ति शाश्वतः॥ १५०॥

अपि च न केवलार्थापत्त्यैव जीवन्मुक्त्यवगमः, श्रुतिश्च जीवन्मुक्तिं दर्शयति—"तद्यथा अहिनिर्ल्वयिनी वल्मीके मृता प्रत्यस्ता शयीत एवमिदं शरीरं शेते अथायमशरीरो मृतः प्राणो ब्रह्मैव तेज एव" (बृ०४।४।७) इति तथा "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव" इत्याद्या च इत्यभिप्रेत्याह—यथेति। यथा अहेः सर्पस्य परित्यागात् प्राग् देहभावेनाहंबुद्धिग्राह्यायामपि परित्यागोत्तरमहिनिवासे वल्मीके पतितायामपि निर्ल्वयिन्यां निर्मोकत्वचि यथा नात्मबुद्धिस्तद्वत्तत्त्वविदोऽपीति श्रुतेरेकदेशार्थः॥ १५०॥

स्मृतौ स्थितप्रज्ञविनिर्णये स्फुटं
जीवन्विमुक्तो मुनिरित्युदीरितम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतो विदो जीवत एव सम्भवे-
न्मुक्तिः प्रमाणान्निगमात् स्मृतेर्नयात् ॥ १५१ ॥

स्मृतिश्च स्थितप्रज्ञलक्षणानि अद्वेष्टृत्वामानित्वादिधर्मकलापं ज्ञानीवलक्षणञ्चाचक्षाणा स्पष्टमेव जीवन्मुक्तिमाचष्टे इत्याह—स्मृता-न्ते । अत एव विदुषो जीवनाभासे जीवनव्यवहाराद् जीवन्मुक्तिरिति नीतिर्निगमस्मृतियुक्तिप्रमाणसिद्धेत्यर्थः ॥ १५१ ॥

तयोर्द्ध्वमायन्नमृतत्वमेत्यदो
न तत्परब्रह्मविदो गतौ परम् ।
उपासनासिद्धफलं वदत्यतो
जीवद्विमुक्तिं न च तन्निषेधति ॥ १५२ ॥

"तयोर्द्ध्वमायन्नमृतत्वमेति" ( छा० ८ । ६ । ५ ) इति श्रुतेः सगुणब्रह्मप्राप्तिविषयत्वाद् न तद्वाक्यं परब्रह्मविदो जीवन्मुक्तिं प्रतिबध्नातीत्याह—तयेति । अदो वचः तत्परब्रह्मविदो निर्विशेषब्रह्मात्मसाक्षात्कारवतो गतौ परं न भवति, उपासनया सिद्धं यत्फलं क्रममुक्तिरूपं तद् वदति; न तज्जीवन्मुक्तिं निषेधतीति योजना ॥ १५२ ॥

स्वज्ञानमज्ञानमिदं निवर्त्तय-
न्निर्वर्त्तयत्येव कलेवरादिकम् ।
किन्त्वेतदारब्धफलस्य कर्मणो
मुक्तेषुवत् स्यादनुवृत्तिरामृतम् ॥ १५३ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यत्पुनरुक्तम्—ब्रह्मज्ञानमज्ञानं निवर्त्तयत् तत्कार्यमपि निवर्त्तयतीति, तत्तथैवाभ्युपगम्यते इत्याह—स्वज्ञानमिति। तथापि प्रारब्धफलस्य कर्मणो मुक्तेषुवद्, आ असृतं विदेहमुक्तिपर्यन्तमनुवृत्तिरस्त्येवेत्यर्थः ॥ १५३ ॥

न तस्य कार्यप्रतिभासमन्तरा
स्यात्सम्भवोऽतो व्यवहारगोचरे।
देहेन्द्रियादेः प्रतिभास इष्यतां
प्रदग्धवस्त्रप्रतिभासवन्नयात् ॥ १५४ ॥

तस्य च कार्यकारणसङ्घातप्रतिभासमन्तरेणासम्भवात् संस्कारनिमित्तो देहेन्द्रियादिप्रतिभासोऽज्ञानशेषनिमित्तो वा दग्धपटन्यायेनेति समाश्रयणीय इत्याह—नेति। तस्य प्रारब्धकर्मण इत्यर्थः। स्पष्टमन्यत् ॥ १५४ ॥

शास्त्रस्य बाधो वदतोऽन्यथा मते
प्रारब्धकर्माद्यवबोधकस्य ते।
श्रुतिप्रमाणाय यथावभासनं
देहेन्द्रियादिर्विद इष्यतां नयैः ॥ १५५ ॥

विपक्षे बाधकमाह—शास्त्रस्येति। प्रारब्धकर्मानुवृत्तिप्रापकस्य शास्त्रस्य आदिशब्दाज्ज्ञानादज्ञाननिवृत्तिप्रापकस्य च बाधप्रसङ्गः अन्यथा वदतस्ते मते। ततश्चोभयविधप्रमाणविरोधपरिहाराय बाधितस्यैव देहेन्द्रियादेर्दग्धपटन्यायेन विदुषोऽपि यथावभासनं प्रतिभास उपपद्यते इत्यर्थः ॥ १५५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आचार्यवान् वेद च तस्य तावदे-
वेत्यादिशास्त्राद्विदुषः श्रुतं स्फुटम् ।
शरीरपातस्य विलम्बकारणं
प्रारब्धकर्माप्यनुवर्त्तते त्विति ॥ १५६ ॥

कुतस्तर्हि प्रमाणात् प्रारब्धफलस्य कर्मणोऽनुवृत्तिरवगता ? इति त्राह—आचार्यवानिति । "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" ( छा० ६ । १४ । २ ) इति विदुषोऽपि कञ्चित्कालं शरीरपातस्य विलम्बकरणात् श्रुत्यैवारब्ध-कर्मणोऽनुवृत्तिरवगता । लोके च मुक्तशरादेरपि कारणनाशात् बलप्रतिबन्धाद्वा विनाशप्रतिबन्धौ न दृश्येते, यद्यपि तत्र समवायिकारण-नाशादेर्भवत्येव नाशादि, तथापि हेतुविनाशेऽपि कार्याविनाशे भवत्येव दृष्टान्तः । स्मृतिश्च स्थितप्रज्ञलक्षणाभिधानेन प्रारब्धकर्मानुवृत्तिं दर्शयति, तथा चाह भगवान् बादरायणः—"अनारब्धकार्ये एव तु पूर्वे तदवधेः" ( ब्र० सू० ४ । १ । १५ ) इति । तस्माज्जीवन्मुक्तिः श्रुतिस्मृतिन्यायानुभवसिद्धा नापलपितुं शक्येति तात्पर्यार्थः ॥ १५६ ॥

तस्मादवद्योज्झितमुज्ज्वलं मतं
वेदान्तिनां जीवपरैक्यवादिनाम् ।
अखण्डवाक्यार्थधियो जनिर्यदा
मुक्तिर्भवेत् तत्क्षण एव निर्मला ॥ १५७ ॥

तस्मान्निर्दुष्टं मतमद्वैतवादिनामिति सिद्धमित्युपसंहरति—तस्मा-दिति । अवद्योज्झितं सर्वदोषविनिर्मुक्तापौरुषेयवेदान्तप्रमाणकत्वाद्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दोषविनिर्मुक्तम्, अत एवोज्ज्वलस्वच्छवस्तुविषयत्वादत्यन्तस्वच्छं वेदान्तिनामौपनिषदानां जीवपरैक्यवादिनामद्वैतमेव तत्त्वमिति निश्चयबुद्धीनां मतं निर्दुष्टमिति। सिद्धमिति शेषः। अत एव तन्मतनिष्ठानामधिकारिणामखण्डवाक्यार्थधियः अद्वैततत्त्वज्ञानस्योक्तरीत्या यदा यस्मिन्नेव समये जनिरुत्पत्तिस्तत्क्षणे एव निर्मलस्वरूपावस्थानलक्षणा मुक्तिर्भवति, न साधनान्तरसमुच्चयं कालविलम्बं वाऽपेक्षते इत्यर्थः। "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (श्वे० ६। १५) इति श्रुतेः। "तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च" (बृ० १। ४। १०) इत्यादिश्रुतेश्चेति। तद् ब्रह्मैतत्प्रत्यक्तत्त्वमस्मीति पश्यन् तस्माज्ज्ञानाद् वामदेवो मुनीन्द्रः शुद्धं ब्रह्म प्रतिपेदे, इह तत्र ज्ञाने निष्ठन् दृष्टवान् आत्ममन्त्रान् स्वस्य सर्वात्मत्वप्रकाशकानहं मनुरित्यादीन् मन्त्रान् ददर्शेति श्रुतेरर्थः। मोक्षस्य कालान्तरभावित्वे एतच्छ्रुतिबाधः स्यादिति भावः॥ १५७॥

न वा न चैतादृशबोधसम्भवः
कदाचिदित्थं ननु वाच्यमास्तिकैः।
वेदान्तवाक्याच्युतदेशिकोक्तिषु
सद्भक्तिशून्यस्य तथैव दुर्मतेः॥ १५८॥

नन्वेतादृशबोध एव नोत्पद्यते; दूरे तत्फलं मुक्तिरित्याशङ्क्य निराचष्टे—न वेति द्वाभ्याम्। आस्तिकैरिति। अस्ति ईश्वरः परलोको धर्मादिश्च शास्त्रमेव प्रमाणमितिवादिभिरेवं न च वाच्यं कदाचित्। नहि श्रुतिस्मृतिन्यायसिद्धमर्थमपलपन्तः आस्तिकाः स्युरिति भावः। तथा च तादृशदुर्मतेर्वेदान्तवाक्येषु अच्युते भगवति वासुदेवे देशिकोक्तिषु सूत्रकारभाष्यकारतदनुयायिसज्जनसूक्तिषु च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भक्तिशून्यस्य चास्तिककल्पस्य [ नास्तिककल्पस्य ? ] तथैवास्ति एता-दृग्बोधसम्भवाभाव एवास्ति । नहि तादृशस्य दुर्मतेः शास्त्रेऽधिकार-लेशोऽपीत्यर्थः ।

"अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ! ।
अप्राप्य मां निवर्त्तन्ते मृत्युसंसारवर्त्मनि ॥
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥
( गी० ९-३, ३-३२ )

इत्यादि श्रीमद्भगवद्गीतासु समस्तजगदधीश्वरस्य भगवतोऽनुशासनादिति द्रष्टव्यम् ॥ १५८ ॥

गोविन्दवेदान्तगुरूक्तिभक्तितः
सुधीः स्वबोधं लभते भ्रमापहम् ।
स एव शास्त्रेऽधिकृतो न चापरो
नराकृतिर्गर्दभशूकरैः समः ॥ १५९ ॥

इममेवार्थमन्वयव्यतिरेकमुखेन प्रतिपादयति—गोविन्देति ॥१५९॥

यैर्ध्यात ईशो हृदि मेघसुन्दरः
पीताम्बरः कौस्तुभरत्नकन्धरः ।
श्रीवत्सलक्ष्म्या वनमालयाऽञ्चितो
हरिर्न तेषां किमपीह दुर्लभम् ॥ १६० ॥

भगवद्भक्तिरेव परमपुरुषार्थहेतुः, अत एव भगवद्वासुदेवानुध्यानैकनिष्ठानां सर्वं सुलभमित्यादरेण स एव ध्येयो नैरन्तर्येणेत्यभिप्रेत्याह—यैरिति ॥ १६० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त एव धन्या भुवि पुण्यभागिनः
त एव धीराः श्रुतिसारविद्वराः ।
यैः श्रीपतिः श्रीगिरिशादिसेवितः
समाश्रितोऽनन्यधिया विशुद्धया ॥ १६१ ॥

भगवद्भक्तानेव महीकरोति—त इति । ते एव धन्याः कृतार्था भुवि पृथिव्यामधिकारिजने इति यावत् । पुण्यभागिनो यज्ञदानतप-आदिकर्मानुष्ठानजनितपुण्यपुञ्जवन्तः पूर्वकाण्डे कृतकृत्या इत्यर्थः । ते एव धीरा अत एव शुद्धान्तःकरणतया विवेकवैराग्यादिदार्ढ्येन विषयैरक्षुब्धान्तःकरणा इत्यर्थः । तेनोपासनाकाण्डे कृतकृत्या इत्यर्थः । श्रुतिसारविद्वराः श्रुतीनामुपनिषदां सारभूतं ब्रह्मतत्त्वं विदन्ति ये तेषु वराः—असन्दिग्धाविपर्यस्ततया निश्चिताद्वैततत्त्वा अप्रतिबद्धसाक्षात्कारवन्त इति यावत् । तेन ज्ञानकाण्डे कृतकृत्या इत्यर्थः । ते के ? इत्याकाङ्क्षायामाह—यैरिति । यैः पुरुषधौरेयैः श्रीपतिः रमाकान्तो भगवान् वासुदेवः श्रीगिरिशादिसेवितः—श्रीः सर्वविभूत्यधिष्ठात्री देवी, गिरिशः श्रीसदाशिवादिनामविभूषितः श्रारुद्रः, आदिपदेन ब्रह्मेन्द्रादयः शुकसनकादयश्च गृह्यन्ते तैः सेवितः, इत्थं भूतोऽनन्यधिया भगवान् वासुदेव एव तत्त्वम्, न ततोऽन्यत् किमपि वस्तु सदिति निश्चयरूपया बुद्ध्या विशुद्धया मोक्षपर्यन्तं फलाभिलाषकलङ्कशून्यया समाश्रितः—सम्यगर्च्यत्वेन ध्येयत्वेन ज्ञेयत्वेन चाश्रितः शरणीकृतस्ते एवोक्तलक्षणा धन्या इति सम्बन्धः ॥ १६१ ॥

तस्मान्मुकुन्दाङ्घ्रिसरोजसौरभे
स्वक्तं मनो यस्य स आशु तत्त्वमोः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऐक्यं समाज्ञाय विमुच्यतेऽञ्जसा
वेदान्तसिद्धान्तविचारणात् सुधीः ॥१६२॥

तस्माद् भगवद्भक्तिसमासक्तचेतसो ब्रह्मज्ञानमनायासेन सिद्ध्य-
त्युपसंहरति—तस्मादिति । तस्माद् यस्य मनो मुकुन्दस्याङ्घ्रिसरोज-
गन्धे चरणारविन्दसम्बन्धिसौष्ठवमाधुर्य्यसौन्दर्यरूपसुगन्धे समासक्तं
भवेत्, स सुधीस्तत्प्रसादलब्धसाधनचतुष्टयसम्पन्नः सद्गुरूपदिष्टवेदान्त-
सिद्धान्तविचारणादञ्जसाऽनायासेन तत्त्वमोस्तत्त्वंपदार्थयोर्ब्रह्मात्मनो-
रखण्डवाक्यार्थमाशु शीघ्रमप्रतिबन्धेनैकस्मिन्नेव जन्मनि सम्यगा-
त्मा—अयमहमस्मीति साक्षात्कृत्य विमुच्यते कृतकृत्यो भवतीति
व्याख्या ॥ १६२ ॥

दृश्यातीतं दृशिमविषयं प्रत्यगात्मानमेकं
पूर्णानन्दं प्रकृतिविकृतिद्वैतशून्यं विशुद्धम् ।
देहादिभ्योऽनृतजडतयानात्मरूपेभ्य इष्टं
भिन्नं बुद्ध्वा जयति सुकृती नष्टसंसारबन्धः१६३

एवं शास्त्रार्थपरिज्ञानं भगवद्भक्त्यधीनमिति भगवद्भक्तानामनायासेन
पुरुषार्थसिद्धिरिति च दृढीकृत्य इदानीं भगवत्प्रसादलब्धतत्त्वसाक्षा-
त्कारवतो जीवन्मुक्तस्य स्वभावत एव भगवद्भक्तिनिष्ठत्वं प्रदर्शयिष्यन्
तस्य कृतकृत्यत्वं दर्शयति—दृश्यातीतमित्यादिपञ्चभिः । तत्रादौ यादृशं
रूपं बुद्ध्वा कृतकृत्यो भवति तन्निरूपयति—दृश्यातीतमिति ।
सुकृती भगवदाराधनजन्यपुण्यपुञ्जवान् नष्टसंसारबन्धः सन् जयतीति
सम्बन्धः । कथं जयति ? इत्यत आह—दृश्यातीतमिति । दृश्य-
मविद्यातत्कार्यं ततोऽतीतमतिक्रान्तं प्रत्यगात्मानं बुद्ध्वा जयति । ननु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थूलादिशरीरत्रयसम्बन्धसत्त्वे कथं दृश्यातीतत्वम् ? इति तत्राह—देहादिभ्य इति। अनृतजडतया स्वाप्निकशरीरादिवत् मिथ्याजडदुःखात्मकत्वेनानात्मरूपतया निश्चितदेहादिभ्यो भिन्नम्। तत्र हेतुः—दृशिं तत्साक्षिणं तत्साक्षित्वेन ततो विलक्षणम्। ननु यथा देहादिसाक्षित्वेन प्रत्यगात्मा ततो भिन्नः, तद्वदेव तस्यापि कश्चिदन्यो ग्राहकः स्याद् इत्यत आह—अविषयमिति। अवेद्यत्वे सति अपरोक्षरूपमित्यर्थः। एतावता शोधितत्वंपदार्थं बुद्ध्वा जयति, तथापि सुखविलक्षणत्वात् तस्य किं तद्बोधेन ? इति न; इत्याह—इष्टमिति। परप्रेमास्पदत्वात् सुखस्वरूपमित्यर्थः। एतावता शोधितत्वंपदार्थं बुद्ध्वा जयतीत्युक्तं स्यात्। तथा च वेदान्तसिद्धैक्यज्ञानं वृथा भवेत्, तन्मा भूदित्यत आह—पूर्णानन्दमिति। अद्वयमानन्दं तत्पदार्थस्वरूपमित्यर्थः। तत्रापि मायाद्युपाधिसत्त्वे तदैक्यं दुर्लभं स्यादित्यत आह—प्रकृतिविकृतिशून्यमिति। प्रकृतिः प्रपञ्चोपादानं माया, विकृतिर्वियदादिः, तज्जन्मादिकारणत्वञ्च द्वैतं तद्विनिर्मुक्तमित्यर्थः। तत्र हेतुः—विशुद्धमिति। अखण्डार्थसिद्धार्थमाह—एकमिति। अखण्डवाक्यार्थभूतमद्वैततत्त्वं बुद्ध्वा जयति सर्वोपरि वरीवर्त्ति कृतकृत्यतया विराजते इत्यर्थः॥ १६३॥

कृतं कृत्यं तेन श्रुतिभिरुदितं यत्तदखिलं
परब्रह्मात्मैक्यं सकृदनुभवारूढममृतम्।
भवेद् यस्यास्वाद्यं निरवधिसुखं शान्तकलनं
स जीवन्मुक्तोऽन्यानपि नयति तत्त्वं निजधिया॥१६४॥

कृतकृत्यत्वमेव विशदयति—कृतमिति। यस्य ब्रह्मविदः श्रुतिभिरुदितं परब्रह्मात्मैक्यं निरवधिसुखं परिच्छिन्नानन्दस्वरूपम्, शान्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मविद्यातत्कार्यकल्पनाविनिर्मुक्तम्, अमृतमलौकिकपीयूषं सकृदेक-
नुभवारूढं सत् स्वाद्यमास्वादनीयं भवेत् । तेनाखिलम्, श्रुतिभि-
मित्यत्राप्यनुपज्यते, यत्कृत्यं ब्राह्मणेन कर्त्तव्यं तदखिलमेव
। न किमपि कृत्यं तस्यावशिष्यते इत्यर्थः, "एतद् बुद्ध्वा बुद्धि-
स्यात्कृतकृत्यश्च भारत !" (गी० १५ । २) इति भगवद्वचनात् ।
केवलं स्वयमेव कृतार्थः, किन्त्वन्यानपि कृतार्थीकरोतीत्याह—
इति । स स्वयं जीवन्मुक्तोऽन्यानपि मुमुक्षून् निजधिया स्वात्म-
त्कारोपदेशेन तत्त्वमनारोपितं ब्रह्मैक्यं नयति प्रापयतीत्यर्थः ।
नु वाच्यं तस्य कृतकृत्यत्वमस्तीति भावः ॥ १६४ ॥

था ब्रह्मादीनां क्वचिदपि न रागादिकलना
तथा तत्त्वज्ञस्याद्वयसुखनिधिस्थस्य न च सा ।
था लीलाकृत्यं भगवत इहैवं निजविदो
न वृद्धिर्नो हानिः सुकृतकरणे वाऽप्यकरणे ॥१६५॥

ननु ब्रह्मविदोऽपि लौकिकं शास्त्रीयं च कृत्यं दृश्यते एव; किमिति
कृत्यत्वं तस्य ? इत्याशङ्क्य कृत्यहेतुरागादिकल्पनोच्छेदा-
मैवमिति दृष्टान्तेनाह—यथेति । यथा ब्रह्मादीनां ब्रह्मविद्या-
सम्प्रदायकर्तॄणां क्वचिदपि विषये रागादिकलना नास्ति, तथा तत्त्व-
स्यापि सा रागदिकलना नैवास्ति । तत्र हेतुगर्भं विशेषणम्—
अद्वयसुखनिधिस्थस्येति । ततः किमित्यत आह—यथेति । यद्वद्
भगवतो मर्यादापुरुषोत्तमस्य श्रीवासुदेवस्य लीलाकृत्यं न तु किञ्चित्-
उद्देशेन लोकानुग्रहमन्तरेण,

"न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन ।
नाऽनवाप्तमवाप्तव्यं वर्त्त एव च कर्म्मणि ॥"
(गी० ३ । २२)



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यादिभगवद्वचनात् । एवमिह व्यवहारभूमौ निजविदः आत्मज्ञस्य सुकृतकरणे वृद्धिः किञ्चिदाधिक्यं नास्ति, न वाऽकरणे हानिरप्यस्तीत्यर्थः,

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥"
(गी० ३ । १७)

"नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥"
(गी० ३ । १८)

इति भगवद्वचनात् । तथा च निरुपचरितं कृतकृत्यत्वं तस्येति भावः ॥ १६५ ॥

**प्रारब्धकर्मफलभोगमृते न किञ्चित्**
**कृत्यं विदो निजधियोज्झितभेदबुद्धेः ।**
**कुर्वन् समाधिमथवा व्यवहारजालं**
**नाहङ्कृतिं स भजते परमात्मनिष्ठः ॥१६६॥**

एतदेव पुनः स्पष्टयति—प्रारब्धेति । निजधिया तत्त्वसाक्षात्कारेणोज्झिता त्यक्ता भेदबुद्धिर्येन तस्य विदो ज्ञानिनः प्रारब्धफलभोगमन्तरेण न किञ्चित् कृत्यमस्तीति सम्बन्धः । स वर्णितोत्कर्षो धीरः समाधिं कुर्वन्वा व्यवहारजालं कुर्वन् लोकदृष्ट्या, स्वदृष्ट्या परमात्मनिष्ठ एव सन्न क्वचिदपि अहङ्कृतिमहङ्करोमीत्यभिमानं भजत इत्यर्थः ॥ १६६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अध्यासपाशविलयान्निजसौख्यवार्द्धौ
तिष्ठत्यपारमतिरुज्झितकर्मपाशः ।
रागादिदोषमपहाय समत्वबुद्ध्या
धीरः स्वभावत उदारगुणाब्धिनिष्ठः॥१६७॥

ननु प्रारब्धप्रयुक्तो विदुषोऽपि व्यवहारसिद्धये देहाद्यहङ्कारः किन्न ...न? नहि देहादावहं ममेति द्विविधाध्यासमन्तरेण हानोपादानादि-...व्यवहारसिद्धिः। तदुक्तं भाष्यकृद्भिः—"देहेन्द्रियादिष्वहं ममाभिमा-...हीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः" (ब्र० सू० उपो०) ...। यदि च जीवनान्यथानुपपत्त्यैवाध्यासोऽभ्युपगम्यते, तर्हि ...पुनर्बन्धहेतुरस्मदादिसाम्यापत्तेरित्याशङ्क्याह—अध्यासेति। ...अध्यास एव पाशो बन्धनरज्जुस्तस्य मूलोच्छेदेन विलयादत एवो-...ज्झितो मूलबाधेन बाधितः कर्मपाशः धर्माधर्मौ बन्धनहेतुर्यस्य स च ...गां निश्चलस्थितिः रागादिदोषसकलानर्थसमूहमपहाय त्यक्त्वा ...समत्वबुद्ध्या सर्वत्र तुल्यदृष्ट्या अपारमतिरनवगाह्यापरिच्छिन्न-...स्वरूपसाक्षात्कारवान् निजसौख्यवार्द्धौ स्वानन्दार्णवे तिष्ठति, न ...दृष्ट्या तस्य काचित् प्रवृत्तिरित्यर्थः। तथा चास्य व्यवहारसिद्धि-...पुत्रिका संयुगक्रीडन इव शिथिलतरेणैव तात्कालिकाध्यासाभासेन ...स्यतीति भावः। एवंभूतस्य तत्त्वविदो भगवद्रतिः स्वाभाविकी-...ह—स्वभावत इति। उदारा अखिलदोषसंसर्गविनिर्मुक्ततया ...परिच्छिन्नमाहात्म्या ये गुणाः समग्रैश्वर्यादयस्तेषामब्धिः समुद्रो ...वान् वासुदेवस्तत्रैव स्वभावत एव निष्ठः पर्यवसन्नो भवति,

"आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः॥"

(भाग० १।७।१०)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति स्मृतेरित्यर्थः ॥ १६७ ॥

यद्यप्यखण्डमतिरात्मपदान्न चान्यद्
ध्येयं समर्च्यमपि पश्यति नो तथापि ।
कीर्त्त्याद्यनेकगुणवार्द्धिमुकुन्दभक्तिं
कुर्वन् स्वभावत इहात्मनि तिष्ठतीति॥१६८॥

नन्वद्वैतात्मतत्त्वसाक्षात्कारे जाते सर्वभेदविभ्रमस्य बाधितत्वात् कथं विदुषो भगवद्भक्तिनिष्ठत्वम् ? इति तत्राह—यद्यपीति । अखण्डमतिरद्वैततत्त्वसाक्षात्कारवान् आत्मपदात् स्वस्वरूपादन्यद् वस्तु ध्येयमवश्यं ध्यातुं योग्यं न च पश्यति, नापि समर्च्यं वस्त्वन्यत् पश्यति, तथापि कीर्त्तिकारुण्याद्यनेके ये गुणास्तेषां वार्द्धिः समुद्रः श्रीमुकुन्दस्तस्य भक्तिं स्वभावत तत्रानुरागेण तत्परत्वलक्षणां कुर्वन्नेवेहात्मनि अस्मिन्नेव प्रत्यगभिन्ने भगवत्तत्त्वे तिष्ठति,

"उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥" (गी० ७। १८)

इति भगवद्वचनात् । तथा च भगवन्तं मुकुन्दमन्तरेण तस्यावलम्ब एव नास्तीति तमेव परप्रेमास्पदत्वेनायमहमस्मीति साक्षात्कृत्य तद्रूप एव सन् तिष्ठतीति नाद्वैततत्त्वस्थितिविरोध इत्यर्थः ॥ १६८ ॥

लब्ध्वा नृदेहमपवर्ग्यमधीत्य वेदान्
तत्प्रोक्तकर्म्महरिपूजनमेव कृत्वा ।
भक्तिं विधाय हरिपादयुगे विशुद्धां
बोधेन बन्धमपबाध्य लभेत मुक्तिम् ॥१६९॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विस्तरेणोक्तं शास्त्रार्थं श्रोतृबुद्धिसौकर्याय संक्षिप्य दर्शयति—लब्ध्वेति। अपवर्गद्वारं नृदेहमधिकारिशरीरं लब्ध्वा, शास्त्रोक्तविधिना श्रुतमधीत्य, तत्प्रोक्तं वेदोक्तं कर्म स्ववर्णाश्रमधर्मं हरिपूजनं भगवदाराधनलक्षणमेव कृत्वा, सम्यग् विधिवदनुष्ठाय, तत्फलभूतां प्रेमभक्तिं हरिपादयुगे विधाय विशुद्धां फलाहङ्कारवर्जितां कृत्वा, तत्प्राप्तिबलेनैव तत्त्वबोधेनाद्वैततत्त्वसाक्षात्कारेण बन्धं समूलमध्यासमपबाध्य मुक्तिं स्वरूपावस्थितिं लभेतेत्यर्थः। तस्मादभ्यर्हिततमं ब्राह्मणादि जन्म लब्ध्वा सर्वप्रयत्नैर्भगवद्भक्तिद्वारा अद्वैततत्त्वज्ञानमेव सर्वैः सम्पादनीयम्, न विषयासक्तैरत्यन्तकर्मजडैर्वा भूत्वा सत्त्वोत्तमं जन्म शुनकसूकरादिजन्मवद् व्यर्थं नेयमिति ॥ १६९ ॥

एतावदेव निगमान्तफलावसानं
यद् दृश्यमूलमपबाध्य तरेद् भवाब्धिम् ।
ब्रह्माद्वये निजमहिम्नि सदैव तिष्ठेत्
त्यक्तं त्यजन्निखिलमन्यदिदं भ्रमोत्थम् ॥१७०॥

एतावदेव सर्वश्रुतीनां परमरहस्यं इयमेवात्यन्तिकानर्थनिवृत्तिपरमानन्दावाप्तिलक्षणपरमपुरुषार्थलाभात् कृतकृत्यता, नातः परं किंचिदन्वेष्टव्यं ज्ञातव्यं प्राप्तव्यं वाऽवशिष्यते इति प्रदर्शनाय पुनर्बन्धसम्भावनावारणाय चाखण्डवाक्यार्थस्थितिं दर्शयति—एतावदिति। निगमान्तानां वेदान्तानां फलावसानं परमपुरुषार्थफलपर्यवसानमेतावदेव यद् दृश्यमूलमज्ञानं सकार्यमपबाध्य भवाब्धिं संसारसमुद्रं तरेत् तीर्त्वा ब्रह्माद्वये निजमहिम्नि सदैव नित्यमेव तिष्ठेत्। किं कुर्वन् इदं भ्रमोत्थमात्मनोऽन्यत् सकलं दृश्यजालं त्यक्तं स्वतः सत्ताशून्यतया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्यमेव निरस्तसत्ताकं त्यजन्नेव तिष्ठेत्, "विमुक्तश्च विमुच्यते" (क० २ । ५ । १ ) "निवृत्तश्च निवर्त्तते" इति श्रुतेरित्यर्थः ॥ १७० ॥

वेदाम्बुधेः सुरगणार्चित ईश्वरोऽद्धा
ज्ञानामृतं भ्रमतमोहर उद्दधार ।
प्रादुर्बभूव मथनात्तत आत्मतत्त्व-
चिन्तामणिः स हरिपादयुगेऽर्पितोऽस्तु॥१७१॥

एवं शास्त्रार्थं परिसमाप्येदानीमस्य ग्रन्थस्य भगवच्छ्रीमन्मुकुन्द-प्रसादजन्यत्वान्निर्दोषत्वमिति सूचयन् स्वकृतश्रमस्य सार्थक्याय ग्रन्थं स्वेष्टदैवतस्य श्रीमन्मुकुन्दस्याविद्यादिदोषोच्छेदकस्मरणस्य पादारविन्दयोः समर्पयति—वेदाम्बुधेरिति । ईश्वरो महादेवः सुरगणैर्ब्रह्मादिभिरर्थितः सन् शङ्कराचार्यनामा भूत्वा हरिर्वा व्यासरूपेण वेदाम्बुधेरत्यगाधतात्पर्य्यनिगमार्णवात् अद्धा साक्षाद् ज्ञानामृतं तत्त्वज्ञानसाधनभूतवेदान्ततात्पर्य्यनिर्णायकसूत्रभाष्यादिग्रन्थजातमद्वैततत्त्वामृतपर्यवसन्नतया पीयूषतुल्यमुद्दधार—वेदाम्बुधिं निर्मथ्य ततो निष्कृष्य सारमुद्धृतवानित्यर्थः । भ्रमतमोहर इतीश्वरविशेषणं शास्त्रोद्धारप्रयोजनसूचनार्थम् । ततः सूत्रभाष्याद्यमृतमथनात् ततोऽपि आत्मतत्त्वचिन्तामणिः प्रत्यक्तत्त्वचिन्तामणिरेतन्नामको ग्रन्थः प्रादुर्बभूव आविरासीत् । स च प्रत्यक्तत्त्वचिन्तामणिर्हरेर्भगवतो वासुदेवाभिधेयस्य श्रीमन्मुकुन्दस्य पादयुगे चरणारविन्दयुग्मेऽर्पितोऽस्तु—तत्प्रसादान्मुमुक्षूणामविद्याकामकर्मादिबाधेन परमानन्दपदे प्रतिष्ठाप्रदो भवत्वित्यर्थः । प्रसिद्धाम्बुधेः सकाशादेव प्रार्थनया भगवान् वासुदेवः कूर्मादिरूपेण प्रसिद्धपीयूषं समुद्दधार । तत्रामृतमथने सर्वरत्नशिरोमणिः कौस्तुभाख्यो मणिः प्रादुरासीत्, स देवैः हरिवक्षःस्थले सम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नः। अयन्तु तच्चरणारविन्दयोः समर्पितो न तेन पूर्वग्रण्यवरोधो- ति द्रष्टव्यम् ॥ १७१ ॥

सकलगुणसमुद्रं तापविध्वंसमेघं
सुमतिकुमुदचन्द्रं सल्लताकल्पवृक्षम् ।
भ्रमतिमिरदिनेशं जाड्यविच्छेदवह्निं
व्रजपतिसुकुमारं कृष्णमन्तः श्रयेऽहम् ॥१७२॥

"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीर- पुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्त्यध्येतारश्च मङ्गलयुक्ता यथा स्युः" (महा० भा०) इति महाभाष्योदाहृतश्रुतिवचनाद् ग्रन्थस्य प्रचय- गमनादिसिद्धयेऽन्तेऽपि सत्यज्ञानानन्दाद्वयसर्ववेदोत्तमाङ्गप्रतिपाद्य- परमपुरुषवासुदेवानुसन्धानलक्षणं मङ्गलमाचरति—सकलगुणसमुद्र- मिति। प्रथमविशेषणीभूतरूपकेणानन्तकल्याणगुणगणाश्रयत्वेन, द्वि- तीयेन तापत्रितयविध्वंसकत्वेन, तृतीयेन वेदान्तवाक्यजन्यप्रमाण- शरणत्वेन, चतुर्थेन सनकादिसज्जनवृन्दाराध्यत्वेन तदाश्रयत्वेन च, पञ्चमेनाज्ञानान्धकारोच्छेदकत्वेन, षष्ठेन देहाद्यध्यासोच्छेदनसामर्थ्य- पाण्डित्यहेतुत्वेन, सप्तमेन तु भक्तवात्सल्यशरण्यसौन्दर्यमाधुर्य- सारसर्वस्वसौष्ठवाद्यनन्तगुणगणाधारत्वेनोपास्यत्वमुक्तमिति द्रष्टव्यम् । एवंभूतं भगवन्तं श्रीकृष्णं परप्रेमास्पदत्वेन निरतिशयानन्तानन्दकन्दं मध्यगन्तः प्रत्यगभिन्नत्वेन संश्रये प्रपद्य इत्यर्थः ॥ १७२ ॥

ध्येयं सद्भिर्हृदि सुखभुवं देवदेवैकवन्द्यं
लक्ष्म्याक्रान्तं ध्वजयवमुखैर्लक्षणैर्लक्षितं यत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मोहध्वान्तक्षयपटुरविं तत्त्वबोधप्रदीपं
वन्दे नित्यं जनिमृतिहरं श्रीशपादारविन्दम्॥१७३

पुनस्तस्य भगवतः पादारविन्दमन्तरनुसन्दधानो नमस्करोति—ध्येयमिति। सद्भिः कर्म्मनिष्ठैरष्टाङ्गयोगनिष्ठैर्ज्ञाननिष्ठैश्च सत्पुरुषैरभ्युदयनिःश्रेयसप्राप्तये ध्येयमवश्यं ध्यातव्यं हृदि तद्भक्तिशोधितान्तःकरणे ध्येयत्वमेवाह—सुखभुवमिति। ध्यातॄणां निरतिशयसुखस्य प्रादुर्भावस्थानम्, अत एव देवदेवैकवन्द्यं ब्रह्मरुद्रेन्द्रादिभिः प्राधान्येन वन्दनार्हम्, तत्रैव हेत्वन्तरमाह—लक्ष्म्याक्रान्तमिति। सर्वविभूत्यधिष्ठात्र्या देव्या श्रियाऽऽक्रान्तं सेव्यत्वेन समाश्रितं ध्वजयवप्रभृतिषोडशलक्षणैश्चतुर्विंशतिलक्षणैर्वा यदस्ति मोहध्वान्तक्षयेऽज्ञानान्धकारविनाशे साक्षात्प्रचण्डभास्करं यतस्तत्त्वबोधस्यानारोपितचिद्रूपस्य ब्रह्मणः प्रदीपं साक्षादवबोधकम्, अत एव जनिमृतिहरं संसारबन्धोच्छेदकं तच्छ्रीपतेर्लक्ष्मीनाथस्य श्रीमन्मुकुन्दस्य पादारविन्दं वन्दे प्रह्वीभावेनाश्रयामीत्यर्थः॥ १७३॥

वेदान्तानतियत्नतो निजधिया वीक्ष्यादराच्छ्रीपते-
राचार्यस्य कृपांशतोऽतिगहनान्निष्कृष्य तेभ्यो मया।
प्रत्यक्तत्त्वमणिर्ह्ययं विरचितः श्रीकृष्णपादाब्जयोः
सेवायै न तु कारणान्तरकृते स श्रीपतिः प्रीयताम्॥१७४

अस्य ग्रन्थस्य विरचनमपि भगवच्छुश्रूषार्थमेव; न तु ख्यात्यादिसिद्धये इत्याह—वेदान्तानिति। श्रीपतेः श्रीमन्मुकुन्दस्याचार्यस्य भगवत्पादाभिधेयस्य भगवद्भाष्यकारस्य च करुणया आदरादत्यन्ताभिनिवेशाद् भक्तिरूपान्निजधिया निजेन भगवता कृष्णेन दत्तया बुद्ध्या स्वात्मतत्त्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

...विण्या वा वेदान्तानुपनिषदस्तद्भाष्यतट्टीकादिसहितान् अतियत्नतो ...मुखादध्ययनादिप्रयत्नेनातिगहनानतीवगम्भीरतात्पर्यकानपि वीक्ष्य ...पूर्वपर्यालोचनेन विचार्य, तेभ्यः वेदान्ततद्भाष्यतन्निबन्धेभ्यो ...क्ष्य अतिविस्तृतेभ्यः सारभागमुद्धृत्य मया कृष्णपादारविन्दम... ...न्दाभिलाषिणाऽयं प्रत्यक्तत्त्वचिन्तामणिर्ग्रन्थः श्रीकृष्णस्य भगवतो ...सुदेवस्य पादाब्जयोः सेवार्थं तामुद्दिश्यैव विरचितो ग्रथितः, ... तु कारणान्तरकृते पूजाख्यातिलाभादिसिद्धये नैव कृत इत्यर्थः । ...पादाब्जसेवामुद्दिश्य कृतः स श्रीपतिः स्वीयेन कारुण्येनैव प्रीयताम्— ...नोद्धरणं सौशील्यमनुसृत्यैव प्रीणात्वित्यर्थः ॥ १७४ ॥

...त्यक्तत्त्वविवेचनेऽमुभिरयं प्रत्यक्त्वचिन्तामणि-
...रैः शान्तिदमादिभूषणधरैः संस्थापनीयो हृदि ।
...द्भूषासुविभूषितैर्भ्रमतमःसम्भूतशोकादिकं
...रिद्र्यं प्रविनाश्यते सकलनं मोक्षः फलं प्राप्यते ॥ १७५ ॥

मुमुक्षुभिरत्यादरेण स्वात्मतत्त्वसाक्षात्कारसाधनतया विचारणी-...ऽयं ग्रन्थ इत्यभिप्रेत्याह—प्रत्यगिति । प्रत्यक्तत्त्वं देहादिभ्यो ...विच्य ज्ञातुमिच्छुभिः शान्तिदान्त्यादिभूषणभूषितैरयं प्रत्यगात्म-...चिन्तामणिर्हृदि सम्यग् दृढप्रयत्नेन स्थापनीयः । किमर्थम् ? ...त्याकाङ्क्षायामाह—तद्भूपेति । तस्य चिन्तामणेर्या भूषा शोभा तया ...सु विभूषितैः सम्यग् विचारेणालङ्कृतैर्भ्रमतमःसम्भूतशोकादिकं ...कलमज्ञानतत्कार्याध्यासजनितशोकाद्युपलक्षितमनर्थनिवहं संसार-...ख्यं दारिद्र्यं प्रकर्षेण मूलोच्छेदेन विनाश्यते बाध्यते । तज्ज-...तत्त्वज्ञानेन मोक्षः फलं निरतिशयानन्दाविर्भावलक्षणं फलं प्राप्यते ...त्यर्थः ॥ १७५ ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयं प्रत्यक्चिन्तामणिरमृतसाम्राज्यफलदो
ह्यविद्यादारिद्र्यं सकलमपहत्याऽद्वयधिया ।
हरेः पादाम्भोजद्वयकरुणया संविरचितः
सतां हृद्यो भूयाद्विगलितभिदाभ्रान्तिमनसाम् १७६

प्रसिद्धचिन्तामणेः सकाशादस्योत्कर्षमुक्तमपि श्रोतृरुच्युत्पादनार्थं पुनर्द्रढयति—अयमिति । अयमत्यन्तविलक्षणगुणगणालङ्कृतः प्रत्यक्चिन्तामणिरमृतं यत् साम्राज्यं तद्रूपं फलं प्रददातीति तथा अविद्या कामकर्मादिक्लेशरूपदारिद्र्यं सकलं निःशेषमद्वयतत्त्वविषयकज्ञानजनकत्वेनापहत्यापबाध्यैव तथा सोऽयं हरेः पादाम्भोजयुग्मस्य करुणया विरचितः सन् सतां सज्जनानां विगलिता विलयं प्राप्ता भिदा भ्रान्तिः "अहमिदं ममेदं नेदं मम" इति भेदभ्रमो यस्मात्तादृशं मनो येषां स्वीयपरकीयभेदशून्यतया करुणार्द्रचित्तानां हृद्यो हृदयंगमो भूयादित्याशीःप्रार्थना ॥ १७६ ॥

श्रीमत्कृष्णपदाम्भोजमकरन्दरसाशिषा ।
सदानन्दविदा प्रत्यक्तत्त्वचिन्तामणिः कृतः ॥१७७॥
मुमुक्षुजनाज्ञानदारिद्र्यक्षयकार्ययम् ।
भूयाच्छ्रीमन्मुकुन्दाङ्घ्रिप्रेमभक्तिरसोद्भवात् ॥ १७८ ॥

इति प्रत्यक्तत्त्वचिन्तामणौ द्वादशं प्रकरणं सम्पूर्णम् ॥ १२ ॥

एतदेव श्लोकद्वयेन पुनः प्रार्थयति—श्रीमत्कृष्णपदाम्भोजेति । श्लोकद्वयं निगदव्याख्यातम् ॥ १७७—१७८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मन्दस्मिताञ्चितमुखः करुणावलोकः
श्रीदाममुख्यसखिभिर्विहरन्निरीच्यः ।
सूर्यात्मजापुलिनसैकत आदरेण
स्वान्ते ममास्तु सततं व्रजराजसूनुः ॥ १ ॥
चेतो विहाय सकलं कलनैकरूपं
दृश्यं परिश्रममयं सुखलेशशून्यम् ।
शान्त्यास्पदे रसनिधौ विमलस्वभावे
कृष्णे रमस्व सततं परसौख्यमूर्त्तौ ॥ २ ॥
क सकलनिगमान्तैरप्यगम्यं हि तत्त्वं
क च परिमितबुद्धिर्मादृशोऽद्धा तथापि ।
जयति जगदधीशस्यैष कृष्णस्य नित्यं
ह्यणुरपि सुकटाक्षो भृत्य उद्धारदक्षः ॥ ३ ॥
वेदान्ततत्त्वमधिगम्य गुरोः श्रुतेश्च
रामात्परं न किमपीति सदैकबुद्धिः ।
विद्वन्मणिर्हि शिवलाल इति प्रतीत-
स्तेनाननमीरित इमं कृतवान्निबन्धम् ॥ ४ ॥
एतेन वेदजनको जगतामधीशो
वेदान्तवेद्यनिजतत्त्व उदारकीर्त्तिः ।
प्रीणातु माधव उदेतु सदैव तस्मिन्
भक्तिः परा व्यवहिता पुरुषार्थभूमिः ॥ ५ ॥

इति श्रीमन्मुकुन्दपदारविन्दमकरन्दाभिलाषिसदानन्दविद्वत्कृतायां प्रत्यक्तत्त्वचिन्तामणिव्याख्यायां स्वप्रभाभिधायामखण्डार्थापरपर्यायब्रह्मात्मैक्यमयूखाभिधं द्वादशं प्रकरणं समाप्तिमगमत् ॥ १२ ॥

समाप्तोऽयं ग्रन्थः ।

श्रीमन्मुकुन्दपदारविन्दमकरन्दरतिप्रदोऽस्तु ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# प्रत्यक्तत्त्वचिन्तामणिटीकायां प्रसङ्गादुद्धृतानां श्रुत्यादीनामकारादिवर्णानुक्रमेण सूचीपत्रम्

## अ



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# प्रत्यक्तत्त्वचिन्तामणिश्लोकानामकारादिक्रमेणानुक्रमणिका

पृ० श्लो०

अ



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## क



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## त



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## य



४९

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृ० पं० |
| --- | --- | --- |
| कर्त्तृत्वे नोपपद्यते | कर्त्तृत्वेनोपपद्यते | ६—४ |
| नन्वस्त्वकर्त्ता भोक्ता च | नन्वस्त्वकर्त्ताऽभोक्ता च | ११—१ |
| तत्साक्षितया ज्ञानतत्कार्य्य | तत्साक्षितयाऽज्ञानतत्कार्यं | १२—१२ |
| निर्वृत्तो | निर्वृतो | १३—६ |
| निर्वृत्तः | निर्वृतः | १३—११ |
| साक्षित्वादिवास्य | साक्षित्वादेवास्य | १६—३ |
| निरपेक्ष प्रकाशरूपो | निरपेक्ष-प्रकाशरूपो | २४—१६ |
| विज्ञातारमरेकेन | विज्ञातारमरे केन | २४—२३ |
| कथमेकादृग् | कथमेतादृग् | २५—८ |
| ०पासात्मात्मकं | ०पासात्मकं | २६—१६ |
| विनिषेधतो | निषेधतो | ३२—१३ |
| सबोधा० | स बोधा० | ३६—१८ |
| यज्ञादिविशुद्धिकारणं | यज्ञादि विशुद्धिकारणं | ५३—१५ |
| दृष्ट फलत्वादपि | दृष्टफलत्वादपि | ६२—१ |
| स्वयंप्रकाशेन | स्वयंप्रकाशे न | ६३—६ |
| घटादि प्रतिभासे | घटादि-प्रतिभासे | ६३—१२ |
| ब्रह्म चैतन्यमेव | ब्रह्मचैतन्यमेव | ६५—६ |
| चाप्नोतिविशुद्धि० | चाप्नोति विशुद्धि० | ६६—१५ |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

| अशुद्धम् | शुद्धम् | पृ० पं० |
|---|---|---|
| ०मारभमाणो भिन्ननिमित्तो० | ०मारभमाणोऽ- भिन्ननिमित्तो० | ७५—१२ |
| स्वधा ममहिमो० | स्वधाममहिमो० | ७६—२२ |
| स्थितोऽयमयिता | स्थितो यमयिता | १२८—११ |
| तत्रैव द्वैतावबोधे | तत्रैवाऽद्वैतावबोधे | १३९—१३ |
| अनुपत्तिदर्शनात् | अनुपत्त्यदर्शनात् | २०७—८ |
| चिद्धातोवुद्धर० | चिद्धातोर्वुद्धर० | २४९—५ |
| ब्रह्मणो मूर्त्तत्वाद् | ब्रह्मणोऽमूर्त्तत्वाद् | २७१—५ |
| तस्य ज्ञानाश्रयत्वं | तस्याऽज्ञानाश्रयत्वं | २८८—१३ |
| स्वाज्ञानाद् | स्वज्ञानाद् | २९३—११ |
| विरोधे नैव | विरोधेनैव | २९५—६ |
| वा ज्ञानमन्यत् | वाऽज्ञानमन्यत् | ३०१—१६ |
| जीवेश्वरता जगद्भ्रम: | जीवेश्वरताजगद्भ्रम: | ३०३—१४ |
| यथाऽस्त्यहंनिर्ल्व० | यथाऽस्त्यहंनिर्ल्व० | ३२८—६ |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अच्युतग्रन्थमालातः प्रकाशितानां पुस्तकानां सूचीपत्रम्

## ( क ) विभागे

( १ ) **भगवन्नामकौमुदी**—श्रीलक्ष्मीधरविरचिता श्रीमदनन्तदेवनिर्मितप्रकाशटीकासहिता आचार्य्यवरगोस्वामिश्रीदामोदरलालशास्त्रिभिः सम्पादिता मू०—॥≈) आ०

( २ ) **श्रीभगवद्भक्तिरसायनम्**—श्रीमधुसूदनसरस्वतीविरचितम्। प्रथमोल्लासे मूलकृद्रचितया टीकया शेषद्वयोल्लासे आचार्य्यप्रवरगोस्वामिश्रीदामोदरलालशास्त्रिभिर्विरचितया प्रेमप्रपया टीकया सहितम् मू०—|||) आ०

( ३ ) **शुल्वसूत्रम्**—श्रीमहर्षिकात्यायनप्रणीतम्। वेदाचार्य्यश्रीविद्याधरशर्मरचितया सरलया वृत्त्या सहितम् मू०—।) आ०

( ४ ) **कात्यायनश्रौतसूत्रम्**— श्रीमन्महर्षिकात्यायनप्रणीतम्। वेदाचार्य्यश्रीविद्याधरशर्मविरचितया सरलया वृत्त्या समेतम् मू०—६) रु०

( ५ ) **प्रत्यक्तत्त्वचिन्तामणिः**—[प्रथमो भागः] श्रीसदानन्दविद्वद्भिरचितः ग्रन्थकृद्रचितया स्वोपज्ञस्वप्रभाख्यव्याख्यया सहितः मू०—२) रु०

( ६ ) **भक्तिरसामृतसिन्धुः**—श्रीरूपगोस्वामिविरचितः श्रीजीवगोस्वामिकृतदुर्गमसङ्गमनीटीकोपेतः मू०—३) रु०

( ७ ) **प्रत्यक्तत्त्वचिन्तामणिः**—[द्वितीयो भागः] श्रीसदानन्दविद्वद्भिरचितः ग्रन्थकृद्रचितया स्वोपज्ञस्वप्रभाख्यव्याख्यया सहितः मू०—२।) रु०

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( ८ ) तिथ्यर्कः—श्रीदिवाकरविरचितः मू०—१॥) रु०

( ख ) विभागे

( १ ) खण्डनखण्डखाद्यम्—श्रीहर्षप्रणीतम् । पण्डितप्रवरश्रीचण्डीप्रसादसुकुलकृतहिन्दीभाषानुवादयुतम् मू०—२॥) रु०

( २ ) काशीकेदारमाहात्म्यम्—पं० श्रीविजयानन्दत्रिपाठिसाहित्यरञ्जनकृतहिन्दीभाषानुवादयुतम् मू०—२।) रु०

प्राप्तिस्थानम्—

( १ )

अच्युतग्रन्थमालाकार्यालयः,

काशी

( २ )

गीता प्रेस, गोरखपुर

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

